4/-

Kashmir Series of Texts and Studies.

No. LXIV.

# THE BHAGAVADGĪTĀ

With the commentary called Sarvatobhadra

BY

RĀJĀNAKA RAMAKAṆṬHA

EDITED BY

PAṆḌIT MADHUSŪDAN KAUL SHĀSTRĪ,
Superintendent Research Department,
His Highness' Government,
JAMMU & KASHMIR,
SRINAGAR.

Published under the Authority of the Government of
His Highness Rājarājes'vara Mahārājādhirāja
S'ri MAHĀRĀJA HARISINGHJI BAHĀDUR,
G. C. S. I., G. C. I. E., K. C. V. O., LL. D.
MAHĀRĀJA OF JAMMU AND KASHMIR.




BOMBAY:
PRINTED AT THE 'NIRNAYA SAGAR' PRESS.
1943. A. D.

Kashmir Series of Texts and Studies.

No. LXIV.

# THE BHAGAVADGĪTĀ

**With the commentary called Sarvatobhadra**

BY

## RĀJĀNAKA RAMAKAṆṬHA

EDITED

BY

PAṆḌIT MADHUSŪDAN KAUL SHĀSTRĪ,
Superintendent Research Department,
His Highness' Government,
JAMMU & KASHMIR,
SRINAGAR.

Published under the Authority of the Government of
His Highness Rājarājes'vara Mahārājādhirāja
S'ri MAHĀRĀJA HARISINGHJI BAHĀDUR,
G. C. S. I., G. C. I. E., K. C. V. O., LL. D.
MAHĀRĀJA OF JAMMU AND KASHMIR.




BOMBAY:
PRINTED AT THE 'NIRNAYA SAGAR' PRESS.
1943. A. D.

श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेशान्
देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत्सर्ववन्द्यत्वमाप ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६४

# श्रीमद्भगवद्गीता

राजानकरामकण्ठविरचितसर्वतोभद्राख्यविवरणोपेता ।



श्रीराजराजेश्वर-महाराजाधिराज-काश्मीरनरेन्द्र-श्रीहरिसिंहजी-
बहादुराज्ञया

रिसर्च-कार्यालयाध्यक्ष-पण्डित-मधुसूदनकौल-शास्त्रिणा

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संशोधनादिसंस्करणोत्तरं

संपाद्य

मुम्बय्यां 'निर्णयसागर'मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीता ।




संवत् २०००. काश्मीर-श्रीनगर ख्रैस्ताब्दः १९४३.

# PREFACE.

This edition of the Bhagavadgītā with the commentary by Rājānaka Rāmakaṇṭha is based on the following Manuscripts :—

क. A transcript on foolscap paper. Contains 1074 leaves with 10 lines per page, each line having 18 to 20 letters. In the Devanāgarī script. Correct.

ख. A Manuscript belonging to Pandit Nīla Kaṇṭha Ganzu of Srinagar. Has 350 leaves with 22 lines per page, each line containing 30 letters. Measures 9″×8″. In the S'āradā script. Written on old Kashmiri paper. Mostly incorrect.

ग. A transcript of Rājānaka Lakshmaṇa Brahmachārī of Srinagar. Up to the 24th S'loka of the sixth Adhyāya. Consists of 188 leaves, each side of the leaf on an average covering 19 lines of 21 letters per line. Measures 7″×8½″. In the Devanāgarī script. On modern paper. Mostly correct.

# INTRODUCTION.

In the present issue, bearing the number sixty-four of the Kashmir Series of Texts and Studies, appears the Bhagavadgītā with the Commentary called Sarvatobhadra of Rāmakaṇṭha. It is called Sarvatobhadra perhaps because the author has prepared it with a view to making it acceptable to both the classes of devotees, who are respectively attached to the path of Knowledge and the path of Action, by explaining sufficiently well how both of them in combination lead to the attainment of the final goal i. e. release from the bondage of birth and death. It is, therefore, that in explaining each and every verse of the Bhagavadgītā he keeps in view his standpoint i. e. equal importance of both Knowlege and Action.

In the introductory verses he refers to the existance of many commentaries big and small written by scholars of clear vision and understanding and to the difficulty of fully comprehending the text of the Bhagavadgītā. But his attempt, as he says, is at giving the mere paraphrase of the text. Abhinava in his Gītārthasaṅgraha confirms this report of Rāmakaṇṭha.

The standpoint, that Abhinava has adopted in his explanation of the Bhagavadgītā, does not much differ from that of Rāmakaṇṭha inasmuch as the former says that actions, if done primarily from the outlook of the adept in knowledge, lose the force of binding. But this much is clear that he does not attribute equal importance to action.

Readers of the Sarvatobhadra will find that it is S'aivaistic in colouring throughout. In support of this I am to invite their attention to the verse No. VII. 14 of the Bhagavadgītā. Gist of the explanation of this verse as given in the Sarvatobhadra appears in the

Commentary on the Spanda couplet (Kārikā) No. 46, where Rāmakaṇṭha quotes and explains the verse in question.

From the above, it is evident that the Rāmakaṇṭha of the Sarvatobhadra is identical with the Rāmakaṇṭha of the gloss on the Spanda Kārikās.

In the colophons he is variously named as Rāma, Rāma Kavi, Rājānaka Rāma and Rāmakaṇṭha. He is called Rāmakaṇṭha because he belonged to the Gotra of Kaṇṭha Dhaumyāyana.

We know, not only from the colophon of the Spanda-vivriti but also from the second stanza occurring at the end of the same, that Rāmakaṇṭha was a disciple of Rājānaka Utpaladeva founder of the Pratyabhijñā school.

Rāmakaṇṭha seems to have enjoyed a great reputation as a poet of very high order, because he refers to himself as Kavīndra and as equal to Muktākaṇa at the end of the Sarvatobhadra. While doing so he says that he was born in the family of Nārāyaṇa who was the ocean of learning and who was originally the inhabitant of Kanoj. His elder brother was Muktākaṇa who adorned the court of Avantivarman of Kashmir (655–883 A. D.). Kshemendra quotes in the Kavikanṭhābharaṇa a stanza from a work of Chakrapāla, Muktākaṇa's brother. Consequently it is reasonable to guess that Rāmakaṇṭha might have had two brothers one elder and the other younger.

Nārāyaṇakaṇṭha mentioned above must have been brought over from Kanoj by Lalitāditya in his zeal of collecting wise men from different parts of India and settling them in his kingdom of Kashmir. Kalhaṇa refers to this zeal of the king in his Rājataraṅgiṇī Vide IV. 245. Abhinava in furnishing the short sketch of his own life and pedigree in the concluding verses of the

Tantrāloka, supports the statement of Kalhaṇa, while discribing how his ancestor named Atrigupta was invited from the central India and how he was provided with a suitable permanent lodging on the bank of the Jehlem by Lalitāditya (See Tantrāloka XXXVII. 39 and 52 verses).

The Research Department of the Kashmir has been able so far to get and bring out two works only of Rāmakaṇṭha and these have been described above. Besides these Rāmakaṇṭha seems to have written his commentary on the Stavachintāmaṇi of Nārāyaṇakaṇṭha of which mention is made by Kshemarāja in his commentary on the Stavachintāmaṇi.

This Rāmakaṇṭha is not the author of the gloss on the Mātaṅga Tantra as the same is composed by his namesake son of Nārāyaṇakaṇṭha. It is clear from the following verse appearing at the end of the latter's Commentary on the Vidyāpāda of Mātaṅga Tantra :—

श्रीमद्विद्यापादे नारायणकण्ठसूनुना रचिता ।
वृत्तिरियं मातङ्गे काश्मीरिकरामकण्ठेन ॥

अथ

# श्रीमद्भगवद्गीता ।

## श्रीराजानकरामकण्ठविरचितविवरणोपेता ।

---

## प्रथमोऽध्यायः ।

---

स्वज्योतिर्द्योतितानन्तनामरूपाय ते नमः ।
अनामरूपचिन्मात्रवपुषे परमात्मने ॥ १ ॥

प्रमातॄणामुद्यद्विविधरुचिभेदाच्छुरणया
विचित्राभासत्वं स्फटिकतटवत्संश्रयति यत् ।
स्वरूपं सर्वेषां विगलितविकल्पाभ्रपटल-
प्रसन्ने हृद्व्योम्नि स्फुरतु जगतां तत्स्ववपुषा ॥ २ ॥

यस्माद्व्योम्न इवाप्रमेयविमलाभोगाज्जगद्व्यक्तयो
नानादर्शनवादविस्तरगिरः स्थातुं बहिर्न क्षमाः ।
तद्ब्रह्मैव परं पराशरसुतस्यैवं महर्षेर्मतं
सन्तः सन्ततसन्निवेशितधियो ध्यायन्तु बन्धच्छिदे ३

सकलविबुधमध्ये केऽपि गीतापदानां
विदितगुणविशेषा हन्त सन्तः कृतार्थाः ।
कतिचिदलिषु लोके ते हि वल्गन्ति लक्ष्मी-
करकमलमधूनां चर्वणे ये रसज्ञाः ॥ ४ ॥

प्रकृतिगुरुभिर्गाढोद्योगैरवन्ध्यसमाधिभि-
र्बहुभिरमलप्रज्ञैरेताः कृताः किल वृत्तयः ।

---

१. क. ग. पु. स्वरूपं सर्वेशामिति पाठः ।

किमधिकमिह ब्रूयान्माद्दक्किमत्र तु कुर्महे
स्वमतिसुहृदो मुग्धानां नो यदत्र विडम्बकाः ॥ ५ ॥
प्रसन्नत्वादस्मिन्सुगम इति सर्वः प्रविशति
प्रविष्टो गाम्भीर्यादनधिगतगाधोऽत्र पतति ।
तदेवं गीतार्थार्णवमवतितीर्षुं प्रति जनं
विधास्ये वाक्यार्थान्वयमिषमिमं पोतमभयम् ॥ ६ ॥
नित्यान्योन्यविरुद्धदर्शनकथाक्षेपादिना कः क्षमः
संमुग्धप्रतिकूलदुर्मदधियां प्रौढोऽपि संबोधने ।
तत्सिद्धान्ततयैव भक्त्यतिशयव्यक्तेश्वरानुग्रह-
ग्रस्तप्रायसमग्रसंशयमलः कोऽप्यत्र बोध्यो जनः ॥७॥

इह खलु निखिलवेदवेदान्तसिद्धान्तस्मृतीतिहासपुराणादिविविधशास्त्रविस्तरविप्रकीर्णं चतुर्वर्गोपदेशं कालापचितप्रज्ञाद्युपदेश्यपुरुषप्रतिपत्तिसौकर्याय सारतः संक्षिप्य, महाभारताख्यमितिहासं भगवान् कृष्णद्वैपायनो यदिवा तन्मूर्तिमाविष्टः परमेश्वर एव साक्षात् निबबन्ध । तत्रापिच अपवर्गस्य परपुरुषार्थत्वादुपादेयतमस्य मोक्षधर्मादिप्रकरणेषु विविधैः प्रकारभेदैः प्रतिपाद्यस्य अपि विनेयबुद्धिभिः सम्यक् प्रतिपत्तुमशक्यत्वमाशङ्कमानो मृदुतरमतीनामपि हृदयंगमेन प्रसन्नगम्भीरेण वाक्प्रबन्धेन इतिहासक्रमागतसुहृत्संवादकथारूपेण योग्याखिललोकोपदेशाय भगवद्वक्तृकमपवर्गप्रतिपादकं गीताख्यं प्रकरणं प्रतिपादयांचकार । यस्य अयं समस्ताध्यात्मशास्त्रोपनिषद्भूतः सिद्धान्तः—आत्मैवेदं । सर्वमिति यतः परमर्षिरयमस्मिन्नेव महाभारते देहसंन्यासावसरसमाहृतनिरुत्तरसमाधिदशानुभूतपरमार्थामोदाधिवासितसुविमलमतिवचनगाङ्गेयगीतस्तवराजाभिधानभगवत्स्तोत्रद्वारेण तत्स्वरूपं समस्तव्यस्तमभिधाय अपि उपसंहारे—

'यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥'

इति श्लोकेन परमसारसंग्रहरूपं यमर्थमुद्दिष्टवान्, तमेव इह प्रकरणे गर्भीचकार। तथाच इमं श्लोकं परमार्थविवेचनविचक्षणा एवं व्याचक्षते—तस्मै यच्छब्दपञ्चकविशिष्टविशेषणप्रतिपाद्यस्वरूपाय सर्वात्मने नमः—सर्वस्य आत्मने, सर्वमात्मा यस्य इति उभयथावृत्तिसमाश्रयणेन परमकारणस्य आत्मन एव परमेश्वरस्य वास्तवमद्वितीयत्वमसहायत्वं च अनेन पदेन प्रतिपादितम्। यदुक्तमिह

'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥' (६।३१)

इति,

'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥' (६।३०)

इत्यादि। कस्मै तस्मै नम इति एकत्वेऽपि सर्वज्ञत्वादिनिरतिशयैश्वर्यप्रतिपादकानि यच्छब्दविशिष्टानि विशेषणानि क्रमेण व्याख्यायन्ते। तत्र तस्मै भगवते नमो 'यस्मिन् सर्वम्' इदमत्यन्तभिन्नानन्ताभासमयं भावजातं संवेद्यमानतामात्रनिबन्धनतत्तत्स्वात्मलाभं सत् सुखादिसर्वावस्थानुगतैकसंवेदितृत्वमात्रस्वभावे प्रकाशात्मनि यस्मिन् स्थितमिति शेषः, नानात्वमेव इदं यद्वशादित्थं परिस्फुरतीत्यर्थः। तस्मै नम इति संबन्धः। अनेन समस्तसंवेद्यपदार्थसार्थैकसंवेदकत्वप्रतिपादनपरेण विशेषणेन ईश्वरस्य आत्मनः सर्वज्ञत्वलक्षणो धर्मः शक्तिविशेषो वा प्रतिपादितः। तदेतदिहैव उक्तं सर्वज्ञत्वमेकमात्मानं व्यपदिशता भगवता

---

१. क. ग. पु. सर्वज्ञमेकमिति पाठः ।

'सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।' ( १५।१५ )

इत्यादिना, तथा

'मत्स्थानि सर्वभूतानि…………………।' (९।४)

इत्यादिना च । एतेन च नानाज्ञातृत्ववादः, क्षणिके ज्ञाने एव ज्ञातृभ्रमवादः, तथा चैतन्यविशिष्टे शरीरे एव ज्ञातृत्ववादो निरस्तः । ननु अस्तु नाम कश्चिदेकः सर्वज्ञो येन संवेद्यमानमिदं सर्वमवतिष्ठते, किंतु यदिदं सर्वं तेन संवेद्यते, तत् कुतो जातं ? कस्तस्य कर्ता ? इति संशयनिरासाय तस्यैव सर्वकर्तृत्वप्रतिपादनार्थं विशेषणमाह 'यतः सर्वम्' इति । यतो यस्मादेकस्मात् कर्तुः सर्वमिदं कार्यं प्रभवतीति शेषः । अनेन वक्ष्यमाणया युक्त्या एकस्य च उक्तस्य तत्त्वस्य सर्वकर्तृत्वं प्रतिपादितम् । तथाच इहैव उक्तं भगवता

'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।' (९।४)

इत्यादिना, तथा

'न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ।' (१०।३९)

इत्यादिना च, तथाच भगवदनुग्रहोन्मिषितदिव्यदृग्दृष्टवैश्वरूप्यपरामर्शप्रथितपरवाचः सव्यसाचिनो वचनादपि

'नान्योऽस्ति कर्ता जगतस्त्वमेको
धाता विधाता च विभुर्भवश्च ।' (११।४७)

इत्यादिनापिच । एतेन सर्वज्ञस्य अकर्तृत्ववादोऽपि निरस्तः । ननु सर्वकर्ता यदिदं करोति, तत्किमुपादाय करोति,—इत्याशंकां निरसितुं तस्य निरुपादानं सर्वकर्तृत्वं प्रतिपादयितुमन्यद्विशेषणमाह 'यः सर्वम्' इति । सर्वत्वेन नानाभावभेदात्मना प्रसृतमपि इदं कार्यं य एव यत उक्तलक्षणात् वस्तुनो न व्यतिरिक्तमित्यर्थः,

तस्मै नमः । अनेन स्वेच्छामात्रव्यतिरिक्तोपादानरूपवस्त्वन्तरनिरपेक्षत्वमस्य प्रतिपादितम् । उक्तं च एतदर्जुनोक्त्यैव इह

'कर्तासि सर्वस्य यतः स्वयं वै
विभो ततः सर्वमिदं त्वमेव ।' (११।४८)

इत्यादि । एतेन च मायाप्रकृत्याद्युपादानाधीनकर्तृत्ववादो निरस्तः । ननु भवतु नाम एवं निरुपादानमस्य कर्तृत्वं, किंतु यदिदं कार्यमित्थं परस्परविलक्षणक्षणभङ्गुरभावभेदात्मना अवभासते, तत् तस्य स्वरूपविक्रियां कस्मात् न करोतीत्याह 'सर्वतश्च यः' इति । सर्वस्मिन् वेद्ये वस्तुनि य एव एकः स्फुरति, तस्मै नमः इति । अनेन तदीयाद्भुतमायाशक्तिजनितव्यामोहावस्थायामेव सर्वमिदं कार्यं संसारिणा जनेन नानात्वेन प्रतिपद्यते, परमकारणानुग्रहशक्त्युन्मीलितविद्यात्मकदिव्यचक्षुषा तु प्रबुद्धेन निरूप्यमाणेऽस्मिन् सर्वस्मिन् कार्ये तदेकतत्त्वव्यतिरिक्तं न किञ्चित् प्रकाशते,—इति प्रतिपादितम् । यथा तत्तदर्थक्रियाविशिष्टेन बालादिना लोकेन विलोक्यमानाः कटककुण्डलकेयूरादयो गुणीभूतकाञ्चनमयस्वभावाः परस्परभिन्नत्वेनैव प्रतिभासन्ते, उत्पन्नतत्प्रकृतिजिज्ञासैर्निरूप्यमाणेषु तेषु सर्वेषु गुणीभूतकटकादिभिन्नव्यक्तिकाञ्चनमयैकस्वरूपव्यतिरिक्तं परमाणुमात्रमपि न उपलभ्यते, तथैव मायादशायां भिन्नेष्वपि प्रबोधावस्थायां प्रत्यवमृश्यमानेषु कार्येषु सर्वभावेषु विशुद्धसंविन्मात्रस्वभावताव्यतिरिक्तं न किञ्चिदुपलभ्यते—इति वास्तवेन रूपेण इत्थमपि स्फुरदिदं सर्वं कार्यं कर्तुर्मनागपि स्वरूपविक्रियां न आवहतीति प्रतिपादितम् । तदेतदिहैव उक्तम्

'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।' (२।२६)

इत्यादिना । एतेन औपाधिकशङ्कासंपर्कवादोऽपि अपाकृतः । ननु

एवं सत्यपि कार्ये निरुपाधिरयमात्मा भवतु नाम, यदा पुनरिदं कार्यं न आरभते, तदा अस्य किं रूपमित्याशङ्कानिराकरणाय सदा सर्वात्मकत्वप्रतिपादनार्थं विशेषणान्तरमाह 'यश्च सर्वमयो नित्यम्' इति । पूर्वोक्तविशेषणप्रतिपादितेन प्रकारेण यो नित्यं सततमेव सर्वमयः सर्वात्मकः, तस्मै नम इति । अनेन स्फुरत्यपि तस्मिन् अनन्तदेवताद्भुतरूपे कार्यकलापे परनिर्मलसुसंपूर्णचिन्मात्रस्वरूपापरिच्युतेरीश्वरस्य आत्मनः प्रयोजनविचारवादोऽपि परिहृतः । यदुक्तं

'न मे पार्थास्ति कर्तव्यं................ ।'

'....................प्रवर्तेऽथच कर्मणि ॥' ( ३।२२ )

इति, तथा

'न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि ।

इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥' (४।१४)

इत्याद्यपिच । सर्वमेकः सर्वज्ञः सर्वकर्ता निरुपादानो निरुपाधिर्नित्यं सर्वात्मकत्वेन अवभासते इति । अनेन श्लोकेन आत्मन एव परमेश्वरस्य स्वरूपं यत् तत्र परमर्षिणा प्रतिपादितम्, तदेव इह सिद्धान्ततया गर्भीकृतमिति वेदितव्यम् । तदयमेवंस्वभावो भगवानात्मा स्वेच्छामात्रोपकरणो योगीन्द्रसर्गवत् स्वप्नपदार्थवत् मनोराज्यविरच्यमानविचित्रभावाभासवद्वा अनन्यसाधारणनिरतिशयक्रीडामात्रप्रयोजनो यदिदमत्यद्भुतं जगच्चित्रमुल्लिखति, तत्र तदिच्छयैव नियमिता प्रक्रिया इयं प्रकरणेऽस्मिन् गर्भीकृतेत्यपि वेदितव्यम् । तथाहि स्वेच्छामात्राधीनकर्तृत्वात् तस्यैव परस्य तत्त्वस्य मुख्यया वृत्त्या वेद्यतावभासनमात्रेण जगतः कारणत्वं व्यवस्थितम् । यदाह भगवानेव

'बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।' (७।१०)

इत्यादि, तथा

'यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एवच विस्तारं ब्रह्म संपद्यते तदा ॥' (१३।३१)

इति, तथा

'..................अहं बीजप्रदः पिता ।' (१४।४)

इति, तथा

'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।' (७।६)

इत्यादि । ततस्तदीय एव यथाप्रतिपादितः स्वभावो वेद्यत्वमात्रसामान्यलक्षणं जगत् जडचेतनविभक्तस्थूलसूक्ष्मप्रकृत्यात्मकतया द्विधा अवभासयति । यदाह

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेवच ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥' (७।५)

इति । एतयोश्च प्रकृत्योर्जडात्मको यः स्थूलो भेदस्तमपि कारणात्मना कार्यात्मना च द्विधा स एव भगवानाभासयति । तत्र सर्वस्य वेद्यस्य वस्तुनः सुखाद्यात्मना पर्यवसितस्वरूपत्वात् सत्त्वादिगुणत्रयमयमेकं सामान्यमनुगतत्वेन यदवस्थितं, तदवान्तरकारणतया अवभासयति । यच्च महदादिपृथिव्यन्तमनुगम्य कार्यकारणकलापात्मकशरीरभावेन शब्दादिविषयभावेन च परिणतं, तत् कार्यतया अवभासयति । यदुक्तं

'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।' (९।१०)

इति । यश्च चेतनात्मको भेदस्तमपि आसुरसर्गतया दैवसर्गतया च द्विप्रकारं तावदवभासयति । यदुक्तं

'द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एवच ।' (१६।६)

इत्यादि । तत्र आसुरसर्गोऽधमोत्तमभेदेन द्विप्रकारः । तयोरत्यन्तन्यग्भूतसत्त्वरजस्कतमोमात्रबहलो म्लेच्छादिरूपो निकृष्ट आसुरसर्गः, यं राक्षससंज्ञया वक्ष्यति । तदपेक्षया रजोलेशानुगततमःप्रधानो मनुष्यात्मकः किंचित्प्रकृष्टोऽपरः, यस्य एवं लक्षणमुक्तं

'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापिचाचारो न सत्यं तेषु विद्यते ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतमकिंचित्कमहेतुकम् ॥' (१६।८)

इत्यादि

'..................प्रद्विषन्तोऽभ्यसूयकाः ।' (१६।१८)

इत्यन्तम् । स्वक्रीडामपि यद्विषयामेवमाह भगवान्

'तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभास्वासुरीष्वेव भूमिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥' (१६।२०)

इति । एवं तावत् द्विप्रकार आसुरः सर्गः । दैवमपि सर्गं देवादिमनुष्यभेदेन द्विप्रकारं तावदवभासयति । तत्रापि देवाद्यात्मकः प्रकारो द्विविधः । एकः इन्द्रादिदेवताविशेषात्मको यस्तत्तदधिकारनिर्वर्तनावधिस्तासु तासु क्रियासु नियुक्तः स्वाधिकारावसानं कालमतिवाह्य स्वकारणे परिणमति । द्वितीयो मनुष्यत्वोपात्ततत्तद्यज्ञादिक्रियाफलभूतसुखमात्रानुभवमयं तेषु तेषु लोकान्तरेषु भोगमुपभुञ्जानः स्वकर्मफलावसानं कालमतिवाह्य पुनः पुनः कर्मभूमिं प्रतिपद्यते । उभयरूपोऽपि अयं सत्त्वगुणप्रधानः । एवं गुणविशेषस्य तारतम्यादानन्त्याच्च सर्वसर्गभेदानामानन्त्यमवसेयम् । मनुष्यरूपोऽपि दैवः सर्गो द्विविधः । तत्र एकः

सत्त्वलेशानुगतरजोगुणप्रधानो यः प्रवृत्तिमार्गोन्मुखत्वात् तत्त्वज्ञानानुन्मेषे सति सत्त्वलेशानुगतरजोगुणवशात् त्रय्यादिशास्त्रचोदितयज्ञदानतपःप्रभृतिक्रियैकप्रधानः संसारमनुभवति । यस्य ज्ञानानर्हत्वादेवमुपक्रम्य लक्षणमुक्तं

'व्यवसायात्मिका बुद्धिरेकैव कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥
यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलेप्सवः ।
क्रियाविशेषबहुला भोगैश्वर्यगतीः प्रति ॥
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥'(२।४५)

इति । तथा क्रियामात्रनिर्दिष्टत्वमुद्दिश्य उक्तं

'त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥
ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥' (९।२२)

इति । तथा तान्प्रति स्वक्रियाक्रीडामपि भगवाननेनैव आह यत ईश्वरेच्छयैव ते तथा संसारितां संप्रति अनुभवन्ति । द्वितीयो मनुष्यात्मको दैवः सर्गभेदो रजोलेशानुगतसत्त्वप्रधानो यः

१. क० ग० पु० 'प्रवणः' इति पाठः ।
२ भग०

प्रबलविकल्पानिलनिश्चलत्वात् कुलशैलस्थैर्याभ्यां पुरःसरीभ्यां भक्तिश्रद्धाभ्यामुत्सार्यमाणसन्देहादिघोरविघ्नौघावरणत्वादभिव्यञ्जितप्रत्यासन्नपरमेश्वरदर्शनमहोत्सव एव एवंकृतलक्षणतया इह निर्दिष्टः

'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
अहिंसा सत्यमक्रोधस्त्यागोऽसक्तिरपैशुनम् ।
दया भूतेष्वलौल्यं च मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिस्तुष्टिरद्रोहोऽनभिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥' (१६।३)

इत्यादिना । तथाविध एव हि प्रारब्धप्रकरणप्रतिपाद्यपरमरहस्योपदेशविषयतया इह परिगृहीतः । यदाह उपदेश्यं प्रति

'एवं विवस्वते योगं प्रोक्तवानहमव्ययम् ।' (४।१)

इत्यादि उपक्रम्य

'स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं चैतदुत्तमम् ॥' (४।३)

इत्यादि, तथा

'चतुर्विधा भजन्ते मां जनाः सुकृतिनः सदा ।' (७।१६)

इत्यादि, तथा प्रकरणपरिसमाप्तौ

'सिद्धिं प्राप्तो यदा ब्रह्म समासेन निबोध मे ।
समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा ॥' (१८।५०)

इति उपक्रम्य

'समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।
भक्त्या मामभिजानाति सोऽहं यश्चास्मि तत्त्वतः ॥' (१८।५५)

इति, तथा श्रद्धादिविषयमपि आह

'श्रद्धावाँल्लभते ज्ञानं संयतस्तत्परेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥' (४।३९)
इति, तथा
'श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकिल्बिषैः ।' (३।३१)
इति, तथा
'श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥' (१३।२०)
इत्यादि च। इत्थं सर्गभेदेषु अवस्थितेषु अयं समनन्तरप्रतिपादितो दैवसर्गभेदो मनुष्यात्मको यादृगस्य उपदेशस्य विषयत्वेन परिगृहीतः, तस्य तावत् स्वरूपमुपक्षिप्यते

धृतराष्ट्र उवाच

धर्मक्षेत्रे कुरुक्षेत्रे सर्वक्षत्रसमागमे ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

सञ्जय उवाच

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः ॥ ५ ॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥
अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥

सैन्ये महति ये सर्वे नेतारः शूरसंमताः ।
भवान्भीष्मश्च कर्णश्च कृपः शल्यो जयद्रथः ॥ ८ ॥
अश्वत्थामा विकर्णश्च सौमदत्तिश्च वीर्यवान् ।
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ॥ ९ ॥
नानाशस्त्रप्रहरणा नानायुद्धविशारदाः ।
अपर्याप्तं तदस्माकं बलं भीमाभिरक्षितम् ॥ १० ॥
पर्याप्तं त्विदमेतेषां बलं भीष्माभिरक्षितम् ।
अयनेषु च सर्वेषु यथाभागमवस्थिताः ॥ ११ ॥
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ।
तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ॥ १२ ॥
सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ।
ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः ॥ १३ ॥
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ।
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ॥ १४ ॥
माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः ।
पांचजन्यं हृषीकेशो देवदत्तं धनंजयः ॥ १५ ॥
पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ।
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ॥ १६ ॥
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ।
काश्यश्च परमेष्वासः शिखण्डी च महारथः ॥ १७ ॥
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ।
पाञ्चालश्च महेष्वासो द्रौपदेयाश्च पंच ये ॥ १८ ॥
सौभद्रश्च महाबाहुः शंखान्दध्मुः पृथक् पृथक् ।
स घोषो धार्तराष्ट्राणां हृदयाणि व्यदारयत् ॥ १९ ॥

नभश्च पृथिवीं चैव तुमुलो व्यनुनादयत्।
अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ॥ २० ॥
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः।
हृषीकेशं तदा वाक्यमिदमाह महीपते ॥ २१ ॥

अर्जुन उवाच

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत।
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ॥ २२ ॥
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे।
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ॥ २३ ॥
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः।

संजय उवाच

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ॥ २४ ॥
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम्।
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ॥ २५ ॥
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति।
तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ॥ २६ ॥
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा।
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥ २७ ॥
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान्।
कृपया परयाविष्टः सीदमानोऽब्रवीदिदम् ॥ २८ ॥

अर्जुन उवाच।

दृष्ट्वेमान्स्वजनान्कृष्ण युयुत्सून्समवस्थितान्।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥ २९ ॥
वेपथुश्च शरीरे मे रोमहर्षश्च जायते।
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ॥ ३० ॥

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।
निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३१ ॥
नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ।
न कांक्षे विजयं कृष्ण नच राज्यं सुखानि च ॥ ३२ ॥
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन किम् ।
येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च ॥ ३३ ॥
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ॥ ३४ ॥
मातुलाः श्वशुराः पौत्राः स्यालाः संबन्धिनस्तथा ।
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥ ३५ ॥
अपि त्रैलोक्यराज्यस्य हेतोः किमु महीकृते ।
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ॥ ३६ ॥
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ।
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ॥ ३७ ॥
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ।
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ॥ ३८ ॥
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ।
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ॥ ३९ ॥
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ।
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ॥ ४० ॥
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ।
अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ॥ ४१ ॥
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ।
संकरो नरकायैव कुलघ्नानां कुलस्य च ॥ ४२ ॥

पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः।
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ॥ ४३ ॥
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः।
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ॥ ४४ ॥
नरके नियतं वासो भवतीत्यनुशुश्रुम।
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ॥ ४५ ॥
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः।
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ॥ ४६ ॥
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्।

संजय उवाच

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ॥ ४७ ॥
विसृज्य सशरं चापं शोकसंविग्नमानसः।

इह खलु प्रतिपादितस्वरूपस्य सर्वकर्तुः परमेश्वरस्य सततं कर्तृत्वाविलोपात् क्रियाशक्तिनित्याविरहे सुव्यवस्थिते तन्मायावैभवोद्भावितभेदानामपि जीवानां परमार्थतस्तदात्मकत्वात् तद्वदेव क्रियाशक्त्यविरहः सर्वदैव स्थितः,—इति सर्वात्मना कर्मणां परित्यागानुपपत्तेः शास्त्रचोदितानां तेषां बन्धकत्वशक्तिप्रतिष्टम्भहेतुवक्ष्यमाणज्ञानसंस्कृतानामधिकारिदेशकालावस्थाद्यपेक्षं मुख्यकल्पानुकल्पक्रमेण यथाशक्ति यथाविधि च अनुष्ठानमेव सकलस्य उपदेशविषयभूतस्य जनस्य परमार्थस्वरूपसमापत्तिलक्षणमोक्षाधिगमहेतुरित्ययमिह उपदेशो विवक्षितः। अतश्च कस्यचिदपि अधिकारिणः कस्यांचिदपि अवस्थायां घोरस्य अपि शास्त्रचोदितस्य कर्मणः परिहारानुपपत्तौ स्थितायां तादृशमेव घोरकर्माधिकृतमुक्तोपदेश्यलक्षणविशिष्टमर्जुनमुद्दिश्य भगवत्कर्तृकं रहस्यमिदमुपदेष्टुं मुनिपुङ्गवः प्रक्रमते। तत्र 'धर्म-

क्षेत्रे' इत्यादि 'किमकुर्वत सञ्जय' इत्यन्तं धृतराष्ट्रप्रश्नचोदितसंजयवाक्यानि । 'दृष्ट्वा तु पांडवानीकम्' इत्यादीनि 'तुमुलो व्यनुनादयत्' इत्यन्तानि परस्परवधाध्यवसायसंरब्धसकलकुरुपाण्डवसैन्यसमागतसुभटघोरसमरसंरम्भोद्योगसूचकत्वात् कर्मघोरत्वप्रतिपादनतात्पर्याणि निगदव्याख्यातानि । तथा 'अथ व्यवस्थितान्दृष्ट्वा' इत्यादि उपक्रम्य संजयोक्तान्येव अर्जुनवाक्यानि सैन्यनिरूपणोपक्रमाणि 'उभयोः सेनयोर्मध्ये' इत्यादीनि सुबोधानि । ततः संजयोक्तान्येव हृषीकेशवाक्यान्यपि स्फुटार्थान्येव । ततः 'तत्रापश्यत्स्थितान्पार्थः' इत्यादि 'सीदमानोऽब्रवीत्' इत्यन्तमर्जुनस्य पितृपितामहादिबन्धुवर्गदर्शनक्रियात्मकं संजयवाक्यमपि व्यक्तार्थम् । ततः प्रस्तुतोपदेशप्रतिषेध्यतत्त्वाज्ञानसमुद्भूतपितृपितामहादिबन्धुवधपर्यवसायिसङ्ग्रामकर्मविचिकित्सस्य करुणावेशविवशस्य अर्जुनस्य अधर्ममेव धर्मत्वेन व्यपदिशतो 'दृष्ट्वेमान्स्वजनान् कृष्ण' इत्यादीनि 'तन्मे क्षेमतरं भवेत्' इत्यन्तानि मनुष्यस्वभावसुलभमिथ्याज्ञानप्रतिपादकवाक्यानि निगदव्याख्यातान्येव । ततश्च 'एवमुक्त्वा हृषीकेशम्' इत्यादि संजयवाक्यमपि गतार्थमेवेति तात्पर्यतः प्रथमोऽध्यायो व्याख्यातः, नतु गौरवभयात् प्रातिपद्येन । एवमयं प्रथमोऽध्यायो यथोपक्रान्त उपदेश्यभगवत्प्रवृत्तिहेत्वर्जुनविषादप्रतिपादनार्थः समाप्तः ॥ १ ॥

योग्यानुग्रहनीतिनाटकविधिप्रस्तावनेयं प्रभो-
गीतासु प्रथमस्य या विरचनाध्यायस्य तां ध्यायताम् ।
दिव्यास्वादसुधार्द्रवस्तुविकसत्कौतूहलानां मनः
सभ्यानामवधानमत्र निविडं बध्नातु बद्धादरम् ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे प्रथमोऽध्यायः ॥ १ ॥

## अथ द्वितीयोऽध्यायः ।

कचित् षड्भिः पादैः, कचिदर्धश्लोकेन मुनेर्वाक्यार्थपरिसमाप्तिस्तत्र तत्र इतिहासभागे दृश्यते । तदिह प्रकरणे तत्र तत्र तथैव अवगन्तव्यम् । अथ एवं व्यामोहवशविसंस्थुलमर्जुनं प्रति संजातानुजिघृक्षस्य भगवतः परमार्थोपदेशप्रक्रमपिशुनानि वाक्यानि उपक्षेप्तुं

संजय उवाच

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
सीदमानमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

स्पष्टार्थः श्लोकः ॥ १ ॥

यदुवाच भगवांस्तदाह

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥

'इदम्'—एवंविधप्रस्तुतावश्यकरणीयस्वकर्मकरणावसादकारणव्यामोहात्मकं 'कश्मलं'—पापं 'त्वा' भवन्तं 'कुतः' कस्मात् निमित्तात् 'विषमे' संकटे 'उपस्थितम्' उपागतम् 'अर्जुन'। कीदृशं कश्मलम् । 'अनार्यजुष्टम्' अशिष्टसेवितम्, अत एव 'अस्वर्ग्यं' स्वर्गप्राप्तिप्रतिकूलम् 'अकीर्तिकरम्' अपवादसम्पादकमिति पदसंगतिः स्फुटैव । अर्थविशेषं तु इमं गर्भीकृत्य भगवानेतदाह— अर्जुनशब्दोऽत्र न संज्ञिमात्रसम्बोधनार्थः, किंतु तद्गतप्रकृष्टाभिजनप्रज्ञापराक्रमादिगुणगरिमप्रत्यायनार्थः । त्वच्छब्दोऽपि परमार्थतो मोहादिमलविविक्तस्वभावस्य आत्मनः प्रत्यायकत्वेन प्रयुक्तः । तेन वस्तुतो यस्त्वं, तस्य अनेन व्यामोहकलङ्केन सम्बन्धः प्रकाशस्य तमसा इव अत्यन्तमसम्भाव्यः,—इति कुतस्त्वामिदमुपस्थितमित्य-

नेन वाक्येन गर्भीकृतम् । अत एवच एतत्पापमनार्यैरतत्त्वविद्भिरसाधुभिः सेवितमित्यादि उक्तम् ॥ २ ॥

अनेनैव क्रमेण एतत् विशेषयितुमाह

मा क्लैब्यं गच्छ कौन्तेय नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥

हे 'परन्तप !' शत्रुजनज्वरजनक 'क्लैब्यं' कापुरुषत्वं मा गाः, यतः 'त्वयि' जगद्विख्यातविक्रमादिगुणमहिम्नि 'न' 'एतत्' एवंविधमल्पसत्त्वजनोचितम् 'उपपद्यते' । तस्मात् 'क्षुद्रम्' असारं 'हृदयदौर्बल्यम्' आशयकार्श्यं विहाय 'उत्तिष्ठ'–स्वप्रस्तुते श्लाघ्ये संग्रामकर्मणि उद्यमं गृह्णीष्व । अत्रापि त्वच्छब्दस्य पूर्वोक्तार्थगर्भीकारेण प्रयोगो मन्तव्यः, क्लैब्यशब्दस्य च विवेकशून्यत्वगर्भीकारेण,–इति । अन्यदपि विशेषणमेवं योजनीयमिति ॥३॥

अथ संप्रति अनाविर्भूतात्मानात्मस्वरूपविवेचनक्षमप्रज्ञत्वात् देहादिकमेव आत्मत्वेन प्रतिपद्यमानो गुर्वादिवधमहापातकपर्यवसायिसमरानुष्ठानं दोषोद्भावनेन प्रतिषेद्धुमर्जुन उवाच

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

'मधुसूदन !' 'कथं' केन शास्त्रोपपन्नेन प्रकारेण 'भीष्मं' पितामहं गुरुं च 'द्रोणं' ब्राह्मणं संगरे सायकैः प्रतीपं संप्रहारेण योजयिष्यामि । यदिवा प्रतिशब्दयोगे द्वितीया व्याख्येया । युधिश्च अकर्मक एव । परस्मैपदमत्र च्छान्दसम् । अन्यत्रापि एवं द्रष्टव्यम् । यतस्तौ विद्याभिधानधनप्रदानपरमोपकारिणौ प्राणैरपि परितोषणीयहृदयौ पूजनमेव अर्हतः । अत्र एतेन कथमितिप्रकारप्रश्नेन प्रस्तुतरणपरिजिहीर्षायाः कश्मलत्वं भगवता उपन्यस्तं धर्मविरोधादनुपपन्नमेवेति अभिप्रायः सूचितोऽर्जुनेन ॥ ४ ॥

अत आह

गुरूनहत्वा हि महानुभावान्
श्रेयश्चर्तुं भैक्ष्यमपीह लोके ।
नत्वर्थकामस्तु गुरून्निहत्य
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

यस्मात् संग्रामपरिहारेण गुरूणां वधः परिहृतो भवति, तांश्च 'अहत्वा' भिक्षान्नमपि अभ्यवहर्तुं प्रशस्यं स्यान्मम, न पुनरहं धर्मलिप्सुस्तान् व्यापाद्य तच्छोणितोपचितान् इष्टान् विषयान् समश्नीयाम् ॥ ५ ॥

किंच

नैतद्विद्मः करतन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्ते नः स्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥

'एतत्' एव 'न' जानीमः—द्वयोर्मध्यात् 'कतरत्' वस्तु अस्माकं प्रयोजनवत्तया 'गरीयो' गुरुतरं स्यात् । कयोस्तयोर्वस्तुनोरित्याह—यदिवा वयं तान् प्रतिद्वन्द्विनो 'जयेम' तिरस्कुर्वीमहि, यदिवा अस्मान् ते तिरस्कुर्वीरन् । एतयोरर्थयोरेकतरस्य गरीयस्त्वापरिज्ञाने कारणमाह—यस्मात् 'यान्' कुरून् व्यापाद्य वयं बन्धुविरहात् प्राणानेव धारयितुं न इच्छामः 'ते' धृतराष्ट्रपुत्रा भ्रातरोऽस्माकं पुरः स्थिताः । किमुक्तं भवति । यदि तावदस्माभिः कुरवो हताः स्युः, तदस्य पक्षस्य का गरीयस्ता दुःखमात्रफलत्वात् । एवंच अर्थादिदमुक्तं स्यात्—यदि तेऽस्मान् जयेयुः, स पक्षो गरीयान् भवेदिति ॥ ६ ॥

अथ समरकर्मानुष्ठानं धर्मसुखबाधकत्वात् परिहार्यतया प्र-

तिपाद्य अपि, स्वात्मनि वैदुष्याभिमानदोषमाशङ्कमानो भगवति संशयानमात्मानमावेदयन् स आह

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

हे भगवन्नहं कार्पण्यदोषेण बन्धुहिंसाजनितेन दैन्येन उपहतस्वभावः प्रध्वंसितक्षत्रधर्मा अत एव धर्मेषु शास्त्रोदितेषु आचारेषु संमूढचेताः संशयितमनस्को भवन्तं 'पृच्छामि'। अतश्च यत् मे वस्तु 'श्रेयः' प्रशस्यतरं स्यात्, 'तत्' 'निश्चितं' निःसन्देहमादिश। यतः 'शिष्यः' शासनीयस्तव अहम्। एतेन 'प्रपन्नम्' उपपन्नं सन्तं गुरुर्भूत्वा 'मां शाधि' व्युत्पादयेति ॥ ७ ॥

किंच

न तं प्रपश्यामि ममापनुद्यात्
यः शोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

यस्मात् 'तम्' अहं कंचित् त्वां वर्जयित्वा न तर्कयामि, यो मम 'शोकं' शोचनमपसारयेत्। कीदृशम्। 'इन्द्रियाणां' बाह्याभ्यन्तराणां करणानाम् 'उच्छोषणं' सन्तापकम्। किं कृत्वा। निर्विपक्षं स्फीतं भूपालाधिपत्यं लब्ध्वा अपि। अथवा अत्यल्पमिदमुच्यते, देवानामपि ऐश्वर्यमधिगम्य मम कार्पण्यदोषोपहतस्वभावस्य शोचनमेव स्यात्, अतो मां शाधि,–इति। एवं शोचनक्रियापेक्षमवाप्तिक्रियायाः पौर्वकाल्यमवसेयम्, नतु अपनोदनक्रियापे-

क्षम्; तथाहि सति भिन्नकर्तृकत्वात् शब्ददोषः समन्वयाभावाच्च अर्थदोषो दुर्निवारः स्यादिति ॥ ८ ॥

अथ युद्धनिषेधनिश्चितबुद्धित्वं धनञ्जयस्य प्रतिपादयितुं संजय उवाच

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तप ।
न योत्स्यामीति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥९॥
तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये सीदमानमिदं वचः ॥ १० ॥

श्लोकद्वयमेतत् गतार्थम्, किंतु हृषीकाणि इन्द्रियाणि तेषामीशो नियन्ता भगवान् । गुडाकां निद्रामाचक्षते, तस्या ईशस्तया अनभिभवनीय इति अर्जुनविशेषणं व्याख्येयमिति ॥ १० ॥

एवमविद्याव्यामोहपरित्यक्तसंग्रामाध्यवसायमर्जुनं सम्यक् ज्ञानोपदेशेन अत्र स्वकर्मणि प्रविवर्तयिषुः

भगवानुवाच

त्वं मानुष्येणोपहतान्तरात्मा
विषादमोहाभिभवाद्विसंज्ञः ।
कृपागृहीतः समवेक्ष्य बन्धू-
नभिप्रपन्नान्मुखमन्तकस्य ॥ ११ ॥

उपदेशाभावात् संप्रति अनुदितदैवसर्गोचितप्रज्ञः 'त्वं' मानुष्येण मनुष्यभावेन संशयविपर्ययज्ञानबहुलेन उपहतान्तरात्मा प्रत्यभिज्ञानाभावात् तिरस्कृतसत्यात्मस्वरूपो वर्तसे इति शेषः । यस्मात् विषादेन शोकजेन अनध्यवसायेन मोहेन च विपर्ययप्रत्ययहेतुना वैचित्त्येन यस्ते अभिभवः सामर्थ्यभंगः कृतः, तस्मात् हेतोः 'विसंज्ञः' विगतवक्ष्यमाणसम्यग्ज्ञानोऽसि । कुत एतदवगतमित्याह यतस्त्वं दुर्निवारप्रसरस्य कृतान्तस्य वदने प्रवि-

श्चान् बान्धवान् निरूप्य 'कृपागृहीतः' गृहीतकृपः स्वीकृतकरुणः संवृत्तः। आहिताग्न्यादेराकृतिगणत्वात् गृहीतशब्दस्य पूर्वनिपाताभावोऽत्र अवसेयः। तेन बहुव्रीहिरेव अयं, न तत्पुरुषः; तस्मिन् सति भिन्नकर्तृकत्वप्रसङ्गः। अनेन श्लोकेन वक्ष्यमाणस्य आत्मज्ञानस्य प्रथमप्रतिपाद्यं शरीरशरीरिव्यतिरेकज्ञानमासूत्रितम् ॥ ११ ॥

यत एकान्तविनश्वरशरीरसंनिवेशविशेषबद्धबन्धुबुद्धित्वमिदं शरीरिस्वरूपापरामर्शनिबन्धनम्, अत एव आह

अशोच्यानन्वशोचंस्त्वं प्राज्ञवन्नाभिभाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पंडिताः ॥ १२ ॥

'त्वं' ज्ञातिगुर्वादिवधपर्यवसायिनः समरव्यापारस्य अधर्म्यत्वदुःखोदर्कत्वादुपन्यस्यन् लोकद्वयबाधकत्वं 'प्राज्ञवत्' बुद्धिमानिव न जल्पसि। नैषा नैष्ठिकी बुद्धिः, शरीरशरीरिविवेकज्ञानाभावजनिता विमतिरेव एषा। न हि एते गुर्वादयोऽवश्यं विनाशिशरीरमात्रात्मकाः, किंतु नित्याः शरीरिणः एते तद्व्यतिरिक्ताः। अत एव किं कुर्वन् त्वं प्राज्ञवन्नाभिभाषसे—'अशोच्यान्' विनाशाभावात् परमार्थतश्च दुःखयोगाभावादशोचनीयान् परिदेवनस्य अविषयभूतान् 'अनुशोचन्' शोकविषयत्वेन भावयन्। यतश्च एते नित्याः, अत एव तान् 'गतासून्' तेभ्यस्तेभ्यः शरीरेभ्यः उत्क्रान्तप्राणान् मृतव्यपदेशभाजः, तथाच 'अगतासून्' तेषु तेषु शरीरेषु अवस्थितप्राणत्वात् जीवद्व्यपदेशभाजः 'पण्डिताः' विज्ञातपरमार्थाः 'न अनुशोचन्ति' ॥ १२ ॥

तथाच जीवावस्थायामेव एषां तावत् नित्यत्वं प्रतिपादयितुमाह

न ह्येवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमितः परम् ॥ १३ ॥

यं मां वर्तमानं मन्यसे सः 'अहं न जातु न आसं,' नञ्द्वयेन पूर्वकालभावमेव प्रकृतं प्रतिपादयति–नाहमभूत्वा भवामि, किंतु प्रागपि भूत्वा इदानीमपि भवामि । यथा अहं, तथा त्वमपि संप्रति वर्तमानत्वेन प्रतिभासमानः पूर्वमपि आसीरेव, नतु अभूत्वा भवसि । यथाच त्वं, एवमिमेऽपि वर्तमानत्वेन प्रतिभासमानाः सर्वे राजानः पूर्वमासन्नेव, न पुनरभूत्वा भाव एषाम् । न च 'सर्वे' एव 'वयमितः परम्' अस्मात् शरीरादनन्तरं 'न भविष्यामः' भविष्याम एवेति । अनेन युष्मदस्मत्परभेदेन व्यवस्थितस्य जीवलोकस्य कालत्रयेऽपि सत्तासंभवात् नित्यत्वं प्रतिजानीते । 'आसम्' इत्यादि तु भूतादिक्रियाकर्तृत्वव्यपदेशो विनाशधर्मकशरीरसामानाधिकरण्यभ्रमकृतः, नतु नित्यस्य भूतादिव्यपदेश उपपद्यते इति ॥ १३ ॥

ननु देहनिष्ठस्य जीवस्य कर्तृत्वज्ञातृत्वाद्युपलम्भः, तत् कथं तद्विनाशे तस्य नित्यत्वं स्यादिति दुराशंकां प्रत्यक्षोपलभ्यनिदर्शनप्रतिपादनेन परिहर्तुमाह

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १४ ॥**

'अस्मिन्' वर्तमानबुद्ध्या परिगृहीते 'देहे यथा' अस्य 'देहिनः' तत्संवेदितुरात्मनः 'कौमारं' कुमारभावो बाल्यं, तथा 'यौवनं' तारुण्यं, तथा 'जरा' वृद्धभावः इत्यवस्थात्रयमनित्यं तेन देहिना भूतादित्वेन अनुसन्धीयमानं सम्बध्यते, 'तथा' तेनैव निदर्शनेन इतो देहादन्यस्य देहस्य प्राप्तिस्तस्य आत्मनो देहद्वयव्यापकस्य स्थितैव । 'तत्र' अतत्त्वज्ञो मोहं गच्छति शरीरविनाशे शरीरिणमपि विनष्टं मन्यते, धीरस्तु पण्डितस्तत्त्ववित् 'तत्र न मुह्यति' न तं

शरीरविनाशे नष्टं मन्यते नित्यमेव तमवगच्छति। किमनेन उक्तं भवति। यथा बाल्याद्यवस्थाविनाशे न कश्चिदात्मविनाशं मन्यते प्रतिपत्तारमात्मानमेकं स्थितं मन्यते, तथैव नानादेहसंबन्धमतीतानागतत्वेन अनुसन्दधानः किंतु सर्वः कश्चित् प्रतिपत्ता बाल्याद्यवस्था अतीतानागतत्वेन अनुसन्दधानः प्रबुद्धो नित्यमात्मानमवगच्छति। एताभिश्च स्थूलाभिः कौमाराद्यवस्थाभिस्तद्गताः सूक्ष्मा जागरादयोऽपि अवस्थाः प्रतिपादिता वेदितव्याः। तथाहि तासु अन्योन्यभिन्नरूपासु प्रवर्तमानासु उत्पादविनाशवतीषु उपलब्धृत्वेन एकेन लक्षणेन युक्तस्ताभ्योऽत्यन्तविलक्षणस्वभाव आत्मा सर्वस्य स्वसंवेदनसिद्धो व्यापकत्वेन व्यवस्थितः॥ १४॥

तदनेन मायैकीकृतदेहदेहिव्यतिरेकोपपत्तिप्रतिपादनद्वारेण पारमार्थिकमात्माद्वैतमुपक्रम्य इदानीं यथाप्रतिपादिते आत्मस्वरूपे येन हेतुना सर्वजन्तवो मुह्यन्ति अन्यथैव तं प्रतिपद्यन्ते, तत्प्रतिपादनपूर्वं तत्प्रतिषेधोपायमपि उपदेष्टुमाह

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत॥ १५॥**

मीयन्ते एताभिरिति कृत्वा देहित्वविशिष्टस्य प्रमातुः प्रमेयार्थपरिच्छेदसाधनं मात्रा इन्द्रियार्थशक्तय उच्यन्ते। स्पृश्यन्ते वेद्यतया परामृश्यन्ते इति स्पर्शाः इन्द्रियार्थाः। ते च द्विप्रकाराः श्रोत्रादिबाह्येन्द्रियस्पृश्यमानाः शब्दादिरूपाः, केवलान्तःकरणस्पृश्यमानाः सुखादिरूपाः। तुशब्दो व्यतिरेके। परमार्थतो नित्यस्य आत्मनो मात्रास्पर्शाः पुनः 'शीतोष्णसुखदुःखदाः' इति सम्बन्धः। ते च शरीरेण सम्बध्यमानाः शीतमनुभवामि उष्णमनुभवामि,—इति प्रत्ययं ददति; अन्तःकरणेन सम्बध्यमानाः

सुखमनुभवामि दुःखमनुभवामि,—इति प्रत्ययं ददति। ततश्च शीतोष्णसुखदुःखादिषु आत्मधर्मत्वमारोपयन्तः उत्पादविनाशस्वभावत्वात् 'अनित्याः' आत्मनि अनित्यताभ्रममुत्पादयन्तः सर्वप्राणभृतो मोहयन्तीत्यर्थः। यतश्च ते परमार्थतः प्रतिक्षणविनाशिनः, ततः प्रोदितोपपत्त्या नित्यमात्मानं प्रत्यवमृशन् तान् 'तितिक्षस्व' सहस्व—तत्समर्पितेन अनित्यसुखादिस्पर्शमात्रेण नित्यनिर्विकारस्वात्मावष्टम्भप्रतिष्ठां मा त्याक्षीः। यथा त्रैलोक्यैकवीरेण त्वया दुर्वारदर्पोद्धुरमापतन्तः प्रतिद्वन्द्विनो निष्प्रकम्पनिजपौरुषपरिस्पन्दसुस्थितेन मनागपि अन्तरनुपजातविक्रियेण असकृत् सावज्ञमुद्व्यूढभरतया सोढाः, तथैव निसर्गनिर्विकारे स्वात्मनि अहङ्कारमारोप्य तेऽपि स्पर्शाख्याः प्रतिद्वन्द्विनः प्रकृतिनिस्सारतत्सरूपनिरूपणमात्रेण सह्यन्ताम्। यथास्थितवस्तुविमर्शाभावमात्रजनितोऽयं व्यामोहः—यदात्मनि देहबुद्ध्यादिधर्मारोपेण 'कृशोऽहं' 'पूर्णोऽहं' 'सुखितोऽहं दुःखितोऽहम्' इत्यादयः प्रत्ययास्तत्सामानाधिकरण्येन प्रादुर्भवन्ति, तत्त्वतः पुनस्ते स्वात्मैक्येन अवस्थिता बहिरन्तःकरणशक्तिभिः केवलं स्पृश्यन्ते, नतु तावता कांचिदपि आत्मनो विकारकणिकां सम्पादयितुं क्षमाः। स्फटिकदर्पणोपमो हि अयमात्मा नीलपीताद्याभासतुल्याभिः स्फुरन्तीभिरपि निकटसुखादिप्रतीतिभिर्न अन्यथाकर्तुं शक्यते। यदुक्तम्

'आसक्तिसामर्थ्यवशाद्विचित्राः पदार्थजातस्य विभान्ति भासः
[1]प्रपद्यतेऽन्तर्नतु जातु धीमान् विकारमादर्श इव[2] प्रसन्नः॥'

इति। अत एव मात्रास्पर्शशब्देन इन्द्रियार्थव्यपदेशः कृतः।

---

१ ख० ग० पु० प्रपद्यते तन्नत्विति पाठः। २ ख० ग० पु० इवाप्रसन्न इति पाठः।

तदनेन श्लोकेन सर्वसंवेद्यभङ्गुरस्वभावकौमारजागराद्यवस्थावत् सुखाद्यवस्थास्वपि सर्वप्राणिगतासु संवेदकत्वेनैव एकेन स्वभावेन युक्तो नित्यो व्यापक एक एव आत्मा प्रतिपादितः। नच एवतावता एकस्य सुखित्वादौ सति सर्वसुखित्वादिप्रसंगः, यतो मायोद्भावितान्योन्यभेदाभासा एव प्रमातारः सततं परस्परविभक्तमात्मानमवगच्छन्ति, नतु पारमार्थिकः परः प्रमाता। तत्र हि एकस्मिन् सर्वदा सर्वत्र सर्वथा निर्विशेषस्वभावे सर्वमिदं प्रतिबद्धम्। यथोक्तं

'............तं प्रपद्ये प्रजासृजम्।'

इति उपक्रम्य

'यस्मिन्नित्ये तते तन्तौ दृढे संव्यवतिष्ठति।
सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि॥'

इति॥ १५॥

तदेवंस्वभावे सत्ये स्वात्मनि सुव्यवस्थितमुक्तलक्षणमिति[1] प्रतिपादयितुमाह

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते॥ १६॥**

'यं पुरुषम्' उक्तलक्षणं ज्ञानैकताननिर्विकल्पकप्रज्ञतया मुमुक्षववस्थायां वर्तमानम्, अत एव 'धीरं' परिज्ञातसदसत्पदार्थपरमार्थम्, अत एवच 'समदुःखसुखं' समे मनोवेद्यत्वमात्रेण एकेन रूपेण स्पृश्यमाने तुल्ये दुःखसुखे यस्य तथाविधं घटादिवत् वेद्यत्वमात्राविशिष्टरूपैः सुखादिभिरन्तरनुपजनितविकारं सन्तम् 'एते' जन्मविनाशधर्मयोगादनित्याः 'सुखितोऽहम्' इत्यादिविपर्ययप्रत्ययहेतवः स्पर्शशब्दाभिहिता विषयाः शब्दादयो 'न

१ क० ग० घ० पु० सुव्यवस्थितत्वं मुक्तलक्षमिति पाठः।

व्यथयन्ति' तद्विविक्तवेदकैकस्वभावात् सत्यादात्मनो न प्रच्यावयन्ति, 'सः अमृतत्वाय' परमात्मसमापत्तिवशादविनाशत्वाय 'कल्पते' सम्पद्यते मुक्तो भवतीत्यर्थः ॥ १६ ॥

अथ उपपत्त्युपन्यासपूर्वमात्मनो वेदकैकस्वभावस्य पारमार्थिकीं सत्तां, तथा तत्प्रमेयस्वरूपस्य देहादेश्च जन्मविनाशवतस्तदभावं प्रतिपादयितुमाह

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १७ ॥

इह स्वभावादेव यदविद्यमानं वस्तु तस्य 'असतो भावः' सत्ता 'न' अस्ति तथैव स्वभावतः 'सतो' नित्यस्य 'अभावो' विनाशो 'न' अस्ति एतयोः सदसतोः प्रकाशतमसोरिव अत्यन्तपरस्परविरोधात्; किंतु एतयोर्द्वयोरपि 'तत्त्वविद्भिः' साक्षात्कृतपरमार्थैः 'अन्तो' निष्ठा निश्चयो 'दृष्टो' विज्ञातः, न तु अतत्त्वविद्भिः । ते हि अचिन्त्याद्भुतस्वभावपरमेश्वरमायाशक्त्युद्भावितविषयप्रत्ययतया सत्यमात्मानमप्रत्यवमृशन्त एव असदनित्यत्वादिना वास्तवसद्भावरहितं देहादिवस्तु इदन्तया संवेद्यमानत्वात् सत्त्वेन प्रतिपद्यन्ते, परमार्थतस्तु सत् नित्यमात्मतत्त्वमप्रत्यभिज्ञायमानत्वादसत्त्वेन प्रतिपद्यन्ते ॥ १७ ॥

ततश्च तत्त्वतः किं सत्, किमसदिति उपदेष्टुमाह

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १८ ॥

एतयोः सदसतोर्मध्यात् 'तदविनाशि' विनाशधर्मरहितत्वात् परमार्थतः सत् विद्धि जानीहि । किं तत् । 'येन' एकेन 'इदम्' अन्योन्यभिन्नाभासमयं 'सर्वं' चराचरं वस्तुजातं 'ततं' कर्तृत्वविवक्षया विस्फारितम्, ज्ञातृत्वविवक्षया वा व्याप्तम् । एक एव

हि परमार्थतः सर्वकर्ता सर्वज्ञः परमेश्वरः परमात्मा तदवभासितान्योन्यभेदानां तु क्षेत्रज्ञानां देहादिकमेव आत्मत्वेन प्रतिपद्यमानानां परिमितविषयं कर्तृत्वं ज्ञत्वं च न वास्तवम्। एवं 'अस्य' आत्मतत्त्वाभिधानस्य वस्तुनः 'अव्ययस्य' देशकालाद्यवच्छेदरहितत्वादक्षयस्वभावस्य, तद्विलक्षणः कार्यज्ञेयरूपो न कश्चिदर्थो 'विनाशम्' अभावं 'कर्तुमर्हति'। नहि नित्यस्य सर्वथानवच्छिन्नमहिम्नोऽर्थस्य अनित्योऽवच्छेद्यः पदार्थो विनाशाय प्रभवतीति॥ १८॥

सत्त्वरूपं प्रतिपाद्य, असत्त्वरूपं प्रतिपादयितुमाह

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।**
**विनाशिनोऽप्रमेयस्य तस्माद्युद्ध्यस्व भारत॥ १९॥**

सर्वशरीरेषु सर्वावस्थासु च अविलुप्तोपलब्धृत्वमात्रैकलक्षणत्वात् 'नित्यस्य' अविनाशिनः, तथा देहादिभिरवच्छेत्तुमशक्यत्वात् 'अप्रमेयस्य' इयत्तादिकलनाविषयभूतस्य 'शरीरिणः' आत्मनः 'इमे' देहास्तद्विलक्षणा अन्योन्यभिन्नागमापायधर्मकत्वात् 'विनाशिनो' विनश्वरस्वभावत्वात्, तथा देशकालादिपरिच्छेद्यत्वात् 'अन्तवन्तः' इयत्तादिकलनाविषयभूता वेद्यत्वमात्रेण सम्बद्धाः,—इति देहरूपस्य वस्तुनः परमार्थविनश्वरस्य ज्ञेयत्वमात्रादिना हेतुना आत्मसम्बद्धस्य विनाशे सति आत्मनोऽपि विनाशप्रतिपत्तिरविद्याविजृम्भितम्। तच्च त्वयि न उपपन्नम्। अतो यथाप्रतिपादितात्मतत्त्वप्रतिष्ठाहंकारो वक्ष्यमाणया उपपत्त्या दुष्परिहरं स्वकर्म अनुतिष्ठन् 'युद्ध्यस्व' प्रस्तुतं समरकर्म समाचरेति॥ १९॥

अथ युद्धं नाम परहननरूपतया हिंसात्मकं कर्म, तत् कथमहं गुरुज्ञात्यादिवधलक्षणे घोरे कर्मणि प्रवर्तेय,—इति यत्

मन्यसे, तदेतदात्मस्वरूपानभिज्ञत्वजनितमोहविलसितमेव । यतः

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ २० ॥

'यो' मायावशादत्यन्तनिर्विकारपरमार्थसन्तमात्मानमप्रत्यवमृशन् तद्विलक्षणं देहमेव आत्मत्वेन मन्यमानो हननादिदेहधर्माधिरोपणेन 'एनं' सत्यमात्मानं 'हन्तारं' हननक्रियाकर्तारं 'वेत्ति' प्रतिपद्यते; यश्च एनमेव प्रतिपादितलक्षणमविनाशिनमात्मानं विनाशलक्षणदेहधर्माध्यारोपणेन 'हतं' हिंसितं मन्यते; 'तौ उभौ' अपि मोहवशादनात्मनि आत्माभिमानग्रहग्रस्तसम्यग्ज्ञानौ 'न जानीतः' सत्यस्य आत्मनः स्वरूपं न बुद्ध्येते । यतः 'अयं' परमात्मा सर्वमेव इदं परमनिर्विकारचिन्मात्रस्वभावः स्वात्मतया सर्वदा विमृशन् 'न हन्ति, नच हन्यते' हन्तृतानिबन्धनं हननक्रियाकर्तृत्वं न प्रतिपद्यते, नापि हन्तव्यतानिबन्धनं हननक्रियायाः कर्मत्वम् ॥ २० ॥

एते हि विकल्पविपर्ययज्ञानात्मकव्यवहाराणां क्षेत्रज्ञानामेव सम्भवन्ति, न परमात्मनः

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २१ ॥

'अयम्' उक्तलक्षण आत्मा देशकालाकारावस्थाद्यवच्छेदरहितचिन्मात्रस्वरूपत्वात् 'न' 'जायते' उत्पद्यते नित्यमनुत्पन्नरूपत्वात् नापि 'म्रियते' विनश्यति—नापि जन्ममरणान्तरालवर्तिस्थित्यवस्थारूपं भावविकारमनुभवति । ते हि जन्मस्थितिविनाशात्मका अवस्थाभेदा देहाद्यनित्यभावाश्रयाः । ते हि भावा अभूतपूर्वध-

र्माविर्भावे जाता इति उच्यन्ते, भूतपूर्वधर्मतिरोभावे च विनष्टा इति उच्यन्ते,तदन्तराले च तत्तत्प्रत्ययप्रवाहसादृश्यभ्रमात् स्थिता इति उच्यन्ते। स च तेषामपुनर्भावीभावः, आत्मनस्तु सदाभूतस्य न अभावसम्बन्धः। सच एकलक्षणाव्यभिचाराच्च न धमान्तराविर्भावतिरोभावावेति । जन्मस्थितिविनाशलक्षणावस्थात्रयप्रतिषेधोऽस्य अनेन श्लोकेन प्रतिपादितः। इदानीमेत एव भावविकारा विशेषणैरस्य प्रतिषिध्यन्ते। तत्र 'अयम्' आत्मा 'न जायते' उक्तेन क्रमेण नोत्पद्यते इति 'अजः' जन्मलक्षणानित्यभावविकाररहितः, तथा 'नित्यः' सदैकस्वभावावियुक्त इत्यनेन अस्य प्रतिक्षणं धर्मान्तराविर्भावतिरोभावलक्षणो विपरिणामाख्यो विकारः प्रतिषिध्यते । 'शाश्वतः' शश्वत् संपूर्णेन रूपेण युक्त इत्यनेन विवृद्धिलक्षणो विकारोऽस्य प्रतिषिध्यते । नहि अयमनित्यभाववत् पूर्वमपचितो भूत्वा उपचयरूपं विकारमापद्यते। तथा 'पुराणः' पूर्वकोटेरसम्भवात् सततमेव चिरन्तन इत्यनेन अपक्षयलक्षणो विकारः प्रतिषिध्यते । नहि अयमुपचितो भूत्वा पुनरपचीयते देहादिभाववत् । तथा शरीरे हन्यमाने 'न' अयमात्मा 'हन्यते'; शरीरस्यैव अनित्यत्वात् जन्माद्यवस्थाजुषो विनाशावस्थापि सम्भवति, नतु नित्यस्य आत्मन इत्यनेन विनाशलक्षणो विकारोऽस्य प्रतिषिद्धः । अस्तित्वलक्षणस्तु षष्ठो विकारः प्रागुक्तावस्थात्रयमध्ये भूत्वाभावशब्देन प्रतिपादितः इत्यधुना न उक्तः, यदिवा केचिदस्तित्वं विकारत्वेन नेच्छन्ति इति न उक्तः ॥ २१ ॥

एवं सकलभावविकाररहितं

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ हन्यते हन्ति वा कथम् ॥ २२ ॥

'एनं' प्रतिपादितस्वरूपं 'अविनाशिनम्' आत्मानं 'यः' पुरुषः

---

१ ख० पु० विशेष्यस्य प्रतीति पाठः ।

प्रमाता 'नित्यं' सदैव जानाति, स तदभिन्नमात्मानं प्रतिपद्यमानः 'कथं' केन प्रकारेण 'हन्यते' विनाश्यते 'हन्ति वा कथम्' परं विनाशयति । हननक्रियाकर्तृकर्मभावोऽयं शरीरमात्रप्रतिबद्धात्माभिमानेषु अप्रतिबुद्धेषु क्षेत्रज्ञेषु एव व्यवस्थितः ॥ २२ ॥

ननु हननादिना देहविनाशे सति चेतनधर्मानुपलम्भः, तदात्मनो देहविनाशे सति कथमविनाशित्वमवगम्यते इति व्यामोहव्यपोहाय दृष्टान्तनिदर्शनपूर्वं पुनरपि नित्यत्वं द्रढयितुमस्य आह

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २३ ॥

यथा कश्चित् पुरुषो 'जीर्णानि' उपभुक्तानि वस्त्राणि त्यक्त्वा स एव सन् 'अन्यानि' 'नवानि' उपभोगक्षमाणि 'गृह्णाति' उपादत्ते इत्यनेन जन्मादिविविधविकाराक्रान्तनानाशरीरसंयोगवियोगवशात् न अस्य तत्संवेदितृत्वमात्रैकलक्षणवियोग इति ॥ २३ ॥

नित्य एव अयमनित्यैः शरीरधर्मैर्मनागपि असंस्पृष्टः, यतः

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २४ ॥

'एनम्' आत्मानं 'शस्त्राणि' खड्गादीनि शरीरमिव 'न च्छिन्दन्ति' द्विधा कुर्वन्ति, तथैव अग्निर्नैनं 'दहति' 'न आपः क्लेदयन्ति' नच 'मारुतः' शोषमुपनयति ॥ २४ ॥

छेदादिभिर्विक्रियमाणे शरीरे न तस्य निसर्गनिर्विकारस्य विकारसंस्पर्शः । तथाहि

अच्छेद्योऽयमदाह्योयमक्लेद्योऽशोष्य एवच ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २५ ॥

अयमात्मा छेदादिक्रियाविकार्यो न भवति । पूर्वोक्तस्यैव निर्वचनमेतत् । तथा 'नित्यः' इत्यादीनि विशेषणानि अविनाशित्वार्थानि परस्परसहायभूतानि प्रतिपत्तिदार्ढ्याय बहूनि प्रयुक्तानि वेदितव्यानि ॥ २५ ॥

तथाच अयम्

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २६ ॥

शब्दादिव्यक्तविषयाणां श्रोत्रादीनामिन्द्रियाणामविषयभूतत्वात् 'अयम्' 'अव्यक्तः' इति उच्यते; तथा वेदकैकस्वभावत्वादन्तःकरणेन अपि इदन्तया विषयीकर्तुमशक्य इति 'अचिन्त्यः' चिन्तनक्रियाया अगोचरः; तथा सर्वथा चैतन्यमात्रातिरिक्तधर्मान्तरासंस्पर्शात् 'अविकार्यो' विक्रियां नेतुमशक्यः । 'तस्मात्' 'एवम्' उक्तेन प्रकारेण सर्वतः सर्वेन्द्रियगोचरादर्थादत्यन्तव्यतिरिक्तं वेदकत्वेन सर्वार्थव्यापकम् 'एनम्' आत्मानं बुद्ध्वा शरीरविनाशेन तद्विनाशभ्रमेण 'न अनुशोचितुमर्हसि' ॥ २६ ॥

एवं 'त्वं मानुष्येण' (२।११) इत्यादिग्रन्थेन वितत्य प्रतिपादितामपि सकलप्रकरणप्रतिपाद्यस्य ब्रह्माद्वैतज्ञानस्य शरीरशरीरिव्यतिरेकोपपत्तिप्रतिपादनरूपां प्रथमां भूमिकामपि सुसूक्ष्मनिर्मलप्रज्ञावधानविशेषावसेयत्वात् संप्रति अप्रतिपद्यमानमर्जुनं मन्वानो भगवान् सर्वपक्षान्तराक्षेपेण बोधयितुमाह

अथवैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २७ ॥

'अथवा' मदुपदिष्टोपपत्तिक्रमेण यथोक्तमर्थमप्रतिपद्यमानः 'त्वम्' 'एनम्' आत्मानं 'नित्यजातं नित्यं वा मृतं मन्यसे' 'त-

थापि' तेनापि प्रकारेण 'नैनं' विनाशित्वेन 'शोचितुमर्हसि'। इदमत्र तात्पर्यम्—आत्मविषया द्वयी प्रतिपत्तिः संभाव्यते नित्यो वा स्यादनित्यो वा, तृतीयः पक्षो न संभवति। तत्र नित्यत्वप्रतिपत्त्या यदि एनं नित्यजातमेव सदैव उत्पन्नं विनाशरहितं मन्यसे, तथापि अस्य अविनाशित्वात् शोकस्य कोऽवसरः। अथ विनाशित्वप्रतिपत्त्या नित्यमेव मृतं सत्तारहितमेनं मन्यसे, तथापि नित्यविनष्टत्वादस्य शोचनीयत्वाभावः। अन्ये तु एवं व्याचक्षते—यद्येनमात्मानं नित्यं सदैव जन्ममरणाभ्यामनुषक्तमनित्यत्वात् मन्यसे, तथापि एनं शोचितुं न अर्हसि॥ २७॥

एतमेव जन्ममरणप्रवाहाविच्छेदं कैश्चिन्नित्यत्वेन[1] अवगम्यमानमस्य आत्मनः प्रतिपादयितुमाह

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥ २८॥

हिशब्दो हेतौ। यस्मात् 'जातस्य' जन्मलक्षणविकारभाजो देहस्यैव आत्मत्वेन प्रतिपन्नस्य 'ध्रुवः' अवश्यंभावी 'मृत्युः' विनाशाख्यो विकारः; एवमेव 'मृतस्य' विनष्टस्य जन्म अवश्यंभावीति कस्य एष जन्ममरणलक्षणविकारयोग इति तत्त्वमविचारयतोऽपि लोकस्य अयं प्रवादः स्थित एव 'जातो म्रियते, मृतो जायते' इत्येवंविधः, तस्मात् लोकप्रवाददृष्ट्या अपि शोकस्य अनुपपत्तिरेव॥ २८॥

अन्यमपि प्रकारं शोकपरिहाराय आह

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना॥ २९॥

---

१. क० ग० पु० कैश्चिदनित्यत्वेन अवगम्यमानस्यापि आत्मन इति पाठः।

पृथिव्यादिभूतसंनिवेशविषयशरीरात्मकत्वात् सर्वप्राणभृतो भूतशब्देन अत्र उच्यन्ते । तानि एतानि 'भूतानि अव्यक्तादीनि' अप्रत्यक्षपूर्वरूपाणि, तथैव 'अव्यक्तनिधनानि' परोक्षपर्यन्तानि । नहि एतानि पूर्वमेवंविधानि आसन्, पुनश्च एवंविधानि भविष्यन्ति,—इति ज्ञायते । ततो द्वयोरपि एतयोः काष्ठयोस्तानि अशोच्यानि । यद्यपि 'व्यक्तमध्यानि' व्यक्ता तेन तेन रूपेण वेद्यमाना मध्यावस्था जन्मविनाशान्तरालवर्तिनी दशा येषां, तथाविधान्यपि अशोच्यानि एव । व्यक्तावस्थायामेषां हि भ्रममात्रमेव स्थैर्यप्रतिपत्तिः । एतानि हि येन येन प्रकारेण कल्प्यन्ते, तेन तेन विनश्वराणि एव । क्षणिकानि वा भवन्तु, परिणामित्वादाविर्भवत्तिरोभवद्धर्माक्रान्तानि वा भवन्तु, सर्वथा विकल्प्यमानानि एकस्य स्थिरस्य रूपस्य असंभवादशोच्यानि एव,—इति देहात्मकभूतसन्निवेशमात्रत्वेन प्रतिपन्नेषु शरीरेषु कः परिदेवनावसरः इति ॥ २९ ॥

इदानीं बहुप्रकारं प्रतिपाद्यमानोऽपि अयमर्थोऽतिगम्भीरत्वात् मनसि धारयितुमनुष्ठातुं च अशक्य इति अर्जुनस्य एतदर्थविषयमनध्यवसायं परिहर्तुं प्रकृष्टप्रयत्नप्रतिपत्तव्यतामस्य अर्थस्य दर्शयितुमाह

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैनमन्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ ३० ॥

'एनम्' आत्मानं यथाप्रतिपादितस्वरूपं 'कश्चित्' मनुष्यसहस्रेषु मध्ये प्रकृष्टपुण्यपरिपाकवशात् बहूनां जन्मनामन्ते 'पश्यति' वस्तुतः प्रत्यभिज्ञानेन साक्षात्कुरुते । योऽपि पश्यति, स 'आश्च-

र्थवत्'। यथा आश्चर्यं कश्चिददृष्टपूर्वमद्भुतं कदाचित् कथंचित् क्षणमात्रं पश्यति, तद्वदेनं कश्चित् कृतपुण्यः क्षणमात्रं पश्यति। तथैव अद्भुतरूपमिव प्रतिभासमानं कश्चिदेव तथाविध 'एनं वदति' परप्रबोधनाय आचष्टे। तथैव कश्चित् तादृश एव परेण प्रतिपाद्यमानं 'शृणोति' अवधारयति। कश्चित् संप्रति भगवदनुग्रहेण अनधिष्ठितत्वादविद्योपहतान्तःकरणः 'एनं' यथाप्रतिपादितस्वरूपमात्मानं 'श्रुत्वापि' कुतश्चित् तत्प्रतिपादनकुशलादाकर्ण्य अपि 'न वेद' तत्त्वतो न जानाति। स च तथाविधोऽनुपदेश्य एव। त्वं पुनर्भक्तिश्रद्धादिगुणगणसूचितभगवदनुग्रहत्वात् पात्रमेव एतत्तत्त्वोपदेशस्येति अत्र उद्युक्तो भवेत्यर्थः। इदमत्र तात्पर्यम्—अस्य आत्मनो गुरुशिष्यक्रमेण स्वयमनुभवेन वा सन्तु जातु केचित्पुण्यभाजः प्रतिपत्तारः, किंतु निरन्तराभ्यासपरिशीलनविशीर्णकल्पसकलविकल्पावरणतां विना अवैमल्येन सर्वकालमस्थिरतया च अस्य प्रतिपत्तिमात्रमिति विरलविरलो लक्षेषु एकः कश्चिदेव चरमजन्मा भवेदिति यथोक्तेन क्रमेण सम्यगवधारणीयं, नतु मन्दोत्साहेन अत्र योग्येन अपि भवता भाव्यम्॥ ३०॥

तदयमत्र निश्चय इत्याह

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि॥ ३१॥**

'अयं' समनन्तरप्रतिपादितदेहादिसमस्तवेद्यपदार्थात्यन्तव्यतिरिक्तवेदकत्वमात्रैकलक्षणो 'देही' देहस्य वेद्यत्वमात्रेण स्वस्य वेदकत्वमात्रेण स्वामी परः प्रमाता 'सर्वस्य' देहमात्रमेव आत्मत्वेन अभिमन्यमानस्य मायीयस्य प्रमातुर्जन्तुजातस्य तत्र तत्र नानारूपे 'देहे' शरीरे एक एव व्यापकतया तिष्ठन् 'नित्यं' सत-

तमेव 'अवध्यो' हन्तुं विनाशयितुमशक्यः । न हि आगमापायिधर्मकाणां नानाविधानां सर्वदा वेद्यत्वमात्रस्वभावानां शरीराणां विनाशे तद्व्यापकस्य एकस्य अनवच्छिन्नमहिम्नो वेदकत्वमात्राव्यभिचार्येकलक्षणस्य सत्यस्य आत्मनो विनाशः सम्भवति । यत एवमतस्तस्य अविनाशित्वेन नित्यस्य अनुशोच्यत्वं तावत् न अस्त्येव । 'तस्मात्' विनाशैकस्वभावानि 'भूतानि' पृथिव्यादिभूतसंनिवेशविशेषात्मकानि शरीराणि एव शरीरित्वेन प्रतिपन्नानि विनश्यन्ति पश्यन् 'अनुशोचितुं' परिदेवितुं 'न अर्हसि' नष्टस्य नाशे विवेकिनः कः शोकस्य अवसर इत्यर्थः ॥ ३१ ॥

अथ प्रतिपादितोपपत्त्या तात्त्विकमात्मस्वरूपं संप्रतिपत्तुमशक्तमर्जुनं मन्यमानो भगवान् क्षत्रियजात्युचिताभिमानोद्दीपनेन अवश्यानुष्ठेये स्वकर्मणि प्रवर्तयितुमाह

स्वधर्ममपिचावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३२ ॥
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुकृतात्क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३३ ॥
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
तथा स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३४ ॥
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणदतिरिच्यते ॥ ३५ ॥
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३६ ॥
अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३७ ॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३८ ॥

श्लोकसप्तकमेतत् निगदव्याख्यातम् ॥ ३२–३८ ॥

एवं स्वर्गाद्यनित्यफलहेतुप्रवृत्तिलक्षणधर्मसमाश्रयणेन अपि सर्वप्रकारं स्वकर्मापरित्यागे व्यवस्थिते, निरतिशयनित्यफलप्राप्तिहेतुनिवृत्तिलक्षणधर्मसमाश्रयणेन एतदपरित्यागे को दोष इति प्रकृतमेव ज्ञानोपदेशं पुनरपि सिद्धान्तीकुर्वन्नाह

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३९ ॥

'एवम्' अनेन प्रकारेण वर्तमानः 'पापं' ज्ञातिवधादितः सम्भाव्यमानं किल्बिषं न 'अवाप्स्यसि' न लप्स्यसे । कथं वर्तमानः । प्रथमं तावत् यथोपदिष्टार्थनिःसंशयप्रतिपत्तिप्ररूढनिष्प्रकम्पप्रज्ञाप्रत्यभिज्ञातसमस्तप्राणभृत्सर्वावस्थाव्यापकसामान्यसंविन्मात्रस्वभावे नित्यनिरुत्तरानन्दनिर्भरतया स्वरूपव्यतिरिक्तप्राप्यपदार्थान्तरप्रेप्साविरहिते सत्ये स्वामिनि अकृत्रिमात्माभिमानमास्थाय मायाव्यामोहजनितदेहाद्यनात्मभूतभावात्मप्रत्ययलक्षणविपर्ययज्ञानैः सर्वप्राणिभिरुपादेयतया हेयतया च परिकल्पितभेदे प्रतिक्षणविनश्वरे 'सुखदुःखे' हर्षविषादौ 'समे' द्रष्टरि आत्मनि दृश्यतामात्रेण सम्बद्धत्वादनुपजनितविशेषात्मकविकारतया निर्विशेषे 'कृत्वा' सम्यक् प्रतिपत्त्या सम्पाद्य, एवमेव तद्धेतुभूतौ राज्यादिलिप्सितार्थलाभालाभौ, तयोरपि हेतुभूतौ 'जयपराजयौ' तथैव समौ निर्विशेषौ सम्पाद्य तत्त्वतो यथावस्थितेन रूपेण निश्चित्येत्यर्थः । एते हि सुखदुःखादयो वेद्यत्वमात्रेण संबद्धा वेदकस्य आत्मनो न कंचित् विकारलेशमर्पयितुं क्षमाः । यथा नीलपीतादयः प्रकाश्यत्वमात्रेण सम्बद्धाः प्रकाशकस्य आलोकस्य

न कंचिद्विशेषं नीलपीतादिकमुन्मेषयितुं शक्ताः, केवलं प्रकाश्यत्वमात्रेण एकेन रूपेण तत्र सम्बद्धाः। तदेतत् सुखादीनां वेद्यत्वमात्ररूपं साम्यम्। एवं सुखादीनि समीकृत्य 'ततः' एतत्समाधिप्रतिपत्तेरनन्तरमेतत्समाधिसुप्रतिष्ठितमतिर्युद्धशब्दोपलक्षिताय स्वकर्मणे 'युज्यस्व' संबध्यस्व यथोक्तज्ञाननिष्ठतया स्वकर्म अनुतिष्ठेत्यर्थः ॥ ३९ ॥

एवं ज्ञानक्रियासमुच्चयमेव उपदेश्यतया विनिश्चित्य, ज्ञानविषयां मतिमुक्तकल्पां मत्वा, तां क्रियाविषयां वक्तुमुपक्रममाणस्त एव ज्ञानकर्मणी सांख्ययोगशब्दाभ्यां व्यवहरन्नाह

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ४० ॥**

'इदमात्मादि सत्, इदं देहादि असत्' इति हेयोपादेयपदार्थपरिगणना संख्या। तामधिकृत्य कृतं शास्त्रमन्वर्थतया मुख्यं सांख्यमिह उच्यते, तद्धेतुकं ज्ञानमपि सांख्यं, नतु कपिलादिप्रणीतं तस्य नानात्मवादपरमार्थत्वात्। तस्मिन् सांख्ये विषये 'एषा' प्रबन्धेन प्रतिपादिता 'बुद्धिः' प्रज्ञा तव उपदिष्टा, यया प्रज्ञया तत् सांख्यं सम्यक् युज्यते बुध्यते वा। उक्तज्ञानसमधिगम्येन परमार्थलक्षणेन अर्थेन सम्बन्धो योगः, तद्धेतुकत्वात् कर्मैव इह योगशब्देन उक्तम्। नहि केवलस्य ज्ञानस्य योगार्थसम्बन्धहेतुत्वं संभवति, किंतु तदनुगतस्य कर्मण एवेति प्रबन्धेन वक्ष्यते। इत्येवंविधे योगे कर्मणि 'इमां' वक्ष्यमाणां बुद्धिं 'शृणु' अवधारय येया कर्मैव तत्त्वतो मोक्षकारणतया विज्ञायते। अत एव आह 'यया' वक्ष्यमाणया 'बुद्ध्या युक्तः' सम्बद्धस्त्वं क-

१. ख० ग० पु० युद्धधर्मोपलक्षितेति पाठः। २ ख० पु० यया किं कर्म किमकर्मेति कर्मतत्त्वं मोक्षकारणतया विज्ञायत इति पाठः।

मेकृतं ज्ञानशून्यजनविषयं बन्धमस्वातन्त्र्यं 'प्रहास्यसि' त्यक्ष्यसि । तादृशं हि कर्मानुष्ठानमिह उपदेक्ष्यते, येन सकलसंमूढजनबन्धहेतोरपि कर्मणो मोक्षहेतुत्वमेव पर्यवस्यति ॥ ४० ॥

अत एव अस्य कर्मयोगस्य चित्तवृत्तिनिरोधलक्षणयोगातिरिक्तशक्तितां प्रतिपादयितुमाह

**नेहातिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४१ ॥**

'इह' वक्तुं प्रक्रान्ते कर्मयोगे चित्तवृत्तिनिरोधलक्षणयोगवत् 'अतिक्रमनाशो नास्ति'। स हि यथोपदिष्टक्रमस्वभ्यस्तसमस्तभूमिकाभिर्निर्वर्त्यस्वरूपत्वात् पूर्वपूर्वभूमिकानामनवाप्तावुत्तरोत्तरभूमिकारोहणरूपक्रमोल्लंघनलक्षणेऽतिक्रमे सति विनश्यति स्वरूपमेव न लभते । स तादृशो विनाश इह योगे समनन्तरवक्ष्यमाणोपपत्त्या न विद्यते । तथा तत्र तत्तदंगवैकल्यादसम्यगनुष्ठिते व्याध्यादिर्वर्तमानशरीरानुभवनीयः पुनर्गर्भवासदुःखादिर्भविष्यच्छरीरानुभवनीयः 'प्रत्यवायः' अनिष्टयोगः संभवति, इह तु पूर्ववत् सोऽपि 'न विद्यते' यतः 'अस्य धर्मस्य' यथोक्तज्ञानपूर्वतया शास्त्रचोदितस्वकर्मानुष्ठानसमाधिरूपस्य सदाचारविशेषस्य सम्बन्धि 'स्वल्पमपि'परिमितकाललवानुभूतस्वरूपं 'महतः' समस्तभवहेतोरनात्मन्यात्मप्रत्ययलक्षणात् 'भयात्' साध्वसादनुष्ठातारं योगिनं 'त्रायते' परिरक्षति पुनस्तत्सम्बन्धं तिरस्करोतीत्यर्थः । अत्र हि धर्मे सततमनस्तमितसमस्तवस्तुप्रथैकहेतुसामान्यसंविद्रूपपरप्रकाशैकलक्षणस्वात्मप्रत्यवमर्शो निरुत्तरः समाधिः सकृद्विभातत्वेनैव निर्वर्त्यसंपूर्णस्वरूपो विधीयते । सच विभातमात्रः संपूर्णं फलं सम्पादयति । तथाच वक्ष्यति

'स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ।' (२।७४)

इति । ततोऽस्मिन् पूर्वापरक्रमाभ्यस्तभूमिकासंपाद्यचित्तवृत्तिनिरोधलक्षणयोगवत् विनाशप्रत्यवायौ न सम्भवतः । नच अस्य प्रस्तुतस्य कर्मयोगलक्षणस्य धर्मस्य प्रकर्षप्रतिपादनात् निरोधयोगस्य इह सर्वात्मना परिहारोऽवगन्तव्यः । स हि अत्र तत्तत्स्नानादिक्रियाविशेषवत् पूर्वापररात्रादिनियतकालानुष्ठेयतया नियतेतिकर्तव्यताकोऽन्तर्भवत्येव ॥ ४१ ॥

अस्मिंश्च विशुद्धभक्तिश्रद्धादिगुणव्यक्तिसूचितविवेकज्ञानाविर्भावो भवादृशोऽधिकृतः, न सर्वः कश्चिदिति प्रतिपादयितुमाह

व्यवसायात्मिका बुद्धिरेकैव कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४२ ॥

व्यवसायो निश्चयः, स आत्मा स्वरूपं यस्याः, सा तथारूपा स्वभावतो बुद्धिरेकलक्षणैव । निश्चयः आत्मादिसदर्थविषयोऽपि संभवति, देहाद्यसदर्थविषयोऽपि संभवति । तत्र योऽसदर्थविषयः, स निश्चयाभासो निश्चय एव न संभवति । अतः सदर्थविषयमुख्यव्यवसायरहितानाम् 'अव्यवसायिनां बुद्धयो बहुशाखाः' एकस्मिन्नपि अर्थे नानाविकल्पजालाकुला अपर्यवसिताश्च । यतः सर्वाभिकांक्षापरिक्षयैकहेतौ परमार्थसत्यात्मनि अलब्धबुद्धिप्रतिष्ठा इदं प्राप्तमिदं प्राप्यमिति अनित्यमर्थं प्राप्यतया आलम्बमाना न कचित् विश्रान्तिं लभन्ते इति ॥ ४२ ॥

एवंविधानां पुरुषाणां स्वर्गादिभोगमात्रपरत्वेन प्रतिपन्नानां या बुद्धिः, सा वक्तुं प्रक्रान्ते परस्मिन् धर्मे न नियुज्यते इत्याह

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादपराः पार्थ नान्यदस्तीतिवादिनः ॥ ४३ ॥

---

१ ख० पु० तत्तत्स्थानादीति पाठः ।

कामात्मानः स्वर्गपरा जन्मकर्मफलेप्सवः ।
क्रियाविशेषबहुला भोगैश्वर्यगतीः प्रति ॥ ४४ ॥
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४५ ॥

सैषा 'व्यवसायात्मिका' निश्चयस्वभावा 'बुद्धिर्भोगैश्वर्यप्रसक्तानां' पुंसां 'समाधौ' आत्मलक्षणपरमार्थसतत्त्वविषये प्रणिधाने 'न विधीयते' न अनुशिष्यते तस्यास्तदर्थप्रतिपत्तियोग्यताभावात् । ये हि भोगानामिष्टानां विषयाणामैश्वर्ये स्वाम्ये प्रकर्षेण वस्त्वन्तरपरिहाररूपेण अतिशयेन आसक्तास्तत्परा एव, तेषां भोगात्मकानित्यवस्तुविषया व्यवसायात्मिका बुद्धिः समाधिविषयं व्यवसायं न अवलम्बते एव । कीदृशानां तेषां भोगैश्वर्यप्रसक्तानां समाधौ बुद्धिर्न विधीयते । 'तया' वाचा 'अपहृतचेतसां' स्वीकृतमनसाम् । कया वाचा । 'यामिमां पुष्पितां' परमार्थबोधलक्षणफलरहितत्वात् भोगरूपपुष्पमात्रसंयुक्तां प्रसिद्धां 'वाचं' 'वेदवादपरा अविपश्चितो' 'वदन्ति' व्याचक्षते । वेदशब्दोऽत्र ज्ञानशून्यक्रियामात्रविधायकवेदैकदेशवचनोऽवगन्तव्यः । तस्य तथाविधस्य वेदस्य वादोऽभिधानं परं प्रकृष्टं तदेव तत्त्वं येषां ते तथोक्ताः । अत एव 'नान्यदस्तीतिवादिनः' स्वर्गादिफलप्राप्तिहेतुभूतानां क्रियाविशेषाणां विधायकात् वेदादृतेऽन्यत् शास्त्रं नास्त्येवेति वदनशीलाः । अत एव 'अविपश्चितः' यज्ञादिक्रियाफलभूतानित्याशुचिसातिशयभोगमात्ररूपमर्थं पुरुषार्थफलत्वेन प्रतिपन्नाः सन्तो न विद्वांसः । ये हि अविनाशिविशुद्धनिरतिशयमात्मतत्त्वलक्षणमेतद्विपरीतमर्थं फलत्वेन प्रतिपद्यन्ते, ते विपश्चित्त्वं भजन्ते । अत एव अविपश्चित्त्वप्रतिपादकानि तेषां विशेषणानि आह । तथाच 'कामात्मानः' कामाः प्रियाः शब्दादयः

सर्वस्वभूतत्वादात्मा येषाम्, अत एव कामात्मकत्वात् 'स्वर्गपराः' उत्तमभोगाधिकरणं स्वर्गः प्राप्यतया परः प्रकृष्टो येषां ते तथाविधाः, तथा 'जन्मकर्मफलेप्सवः' भोगप्रक्षये अवश्यंभावि जन्म क्वचिदपि योन्यन्तरे सम्भवति, तस्मिंश्च सति धर्माधर्मात्मकं कर्म, तस्मिंश्च सति सुखादिलक्षणं फलमित्येतानि आप्तुमिच्छवः। अत एव भोगैश्वर्यस्य इष्टविषयाधिपत्यस्य गतीर्विविधर्मार्गान्[1] प्रति साधनभूताः क्रियाविशेषा नानाविधा यज्ञदानतपःप्रभृतयः कर्मभेदा बहुला भूयांसो येषाम्। न केवलं नित्यनैमित्तिकक्रियामात्रसक्ताः, यावत् काम्यानपि क्रियाविशेषान् विस्तारयन्तः इति एवंविधाः प्रवक्तारो यां वाचं वदन्ति, तया आवर्जितचित्तानां भोगासक्तानां बुद्धिः समाधौ न विधीयते इति सम्बन्धः। इदमत्र तात्पर्यम्—ये स्वयमेव प्रबोधशून्यत्वात् भोगमात्रपराः, तेऽन्यैस्तथाविधैरेव तमेव अर्थं प्रशंसद्भिः परिपोष्यमाणतादृक्संकल्पाः परमार्थप्राप्तिव्यवसायात् दूरमपकृष्यन्ते इति तथाविधानां बुद्धिः कथं समाधौ विधेयतामर्हति ॥ ४५ ॥

अतश्च स्वभावतः प्रस्तुतविज्ञानोपदेशपात्रभूतस्त्वमविपश्चित्प्ररोचनावचनवक्ष्यमानचित्ततां[2] विहाय यथोपदिष्टविज्ञाननिष्ठो भवेत्याह

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४६ ॥

सत्त्वरजस्तमांसि त्रयो गुणा एव त्रैगुण्यम्। सुखदुःखमोहमयबुद्धिमयत्वात् त्रैगुण्यं विषय आश्रयो यस्य स त्रैगुण्यविषयः। संसारिपुरुषवर्गः उपचारात् त्रैगुण्यशब्देन अत्र उच्यते। तदेवं-

---

१ क० ग० पु० मार्गान्फलभूतान्प्रतीति पाठः। २ ख० पु० वचनवश्यमानचित्ततामिति पाठः।

विधं त्रैगुण्यं विषयो गोचरो येषां, ते तथाभूता 'वेदाः' । ये हि सुखाद्यर्थिनः, ते तत्प्राप्तिहेतुषु क्रियाविशेषेषु वेदैर्नियुज्यन्ते । यतस्तैः सर्वतोऽव्यतिरिक्तस्वरूपः सर्वगत एको यथोक्तविशेषणः सत्य आत्मा आत्मत्वेन न प्रतिपद्यते, ततस्तेषां सन्नेव आत्मा नास्ति । त्वं तु 'निस्त्रैगुण्यः' सन्नात्मवान् 'भव' निष्क्रान्तस्त्रैगुण्यात् 'निस्त्रैगुण्यो' गुणत्रयातीतो वेद्यत्वमात्रेण सुखाद्यात्मभिर्गुणैर्वेदकैकस्वभावः संबन्धी, नतु तद्धर्मको गुणेभ्योऽत्यन्तविविक्तस्वभावः परमार्थतोऽयमात्मा तमीदृशमात्मत्वेन प्रत्यवमृशन् 'आत्मवान् भव' परमार्थसन्तमेव आत्मानमुक्तोपदेशप्रतिपत्तिशैथिल्यादसन्तमिव मा कार्षीरित्यर्थः । यदा च गुणत्रयातीतस्वभावमात्मानमात्मतया प्रतिपद्यसे, तदा 'निर्द्वन्द्वो' द्वन्द्वेभ्यः सुखदुःखतृष्णाजरामरणादिभ्यः क्लेशेभ्यो निष्क्रान्तो भव । एतानि हि द्वन्द्वानि अनात्मनि त्रिगुणे देहादावात्मप्रत्ययनिबन्धनानि । यतश्च निर्द्वन्द्वः, ततो 'नित्यसत्त्वस्थः' अपि भव नित्यमविनाशि यत् सत्त्वं सद्भावस्तत्र स्थित उपलब्धप्रतिष्ठः । तादृशः सन् 'निर्योगक्षेमोऽपि भव' अप्राप्तस्य प्राप्यस्य वस्तुनः प्राप्तिर्योगः, प्राप्तस्य परिरक्षणं क्षेमः, निष्क्रान्तस्ताभ्यां निर्योगक्षेमः, तथाविधो भव । नहि नित्यसंपूर्णत्वात् सर्वतो निरभिलाषात्मनः प्राप्यं किंचित् सम्भवति । न च अपूर्वतया प्राप्तस्य कस्यचिदर्थस्य विनाशाशंकया परिरक्षणम् । अतो विपर्ययप्रत्ययगृहीतात्माभासदेहादिनिबन्धने एव योगक्षेमे इति ततो व्यावृत्तात्मप्रत्ययतया सत्यात्मप्रत्यवमर्शादात्मवान् भव ॥ ४६ ॥

नच भोगैश्वर्यप्रसक्तत्वात् प्रवृत्तिधर्मानुष्ठानैकनिष्ठोपदेश्यपुरुषविषयत्वेन विधीयमानक्रियाविशेषेतिकर्तव्यतोपदेशशतसं-

कुले वेदशास्त्रे सर्वमनुष्ठेयतया अवगन्तव्यम्, किंतु यावता परमार्थबोधलक्षणस्वाभिप्रेतार्थक्रियासिद्धिर्भवति, तावदेव ततः प्रतिपत्तव्यमुपादेयतया बुधेनेत्याह

यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४७ ॥

'सर्वतः' सर्वासु दिक्षु 'संप्लुतोदके' समृद्धसलिले 'उदपाने' ह्रदप्रस्रवणादावर्थिनो 'यावानर्थः' यावन्मात्रमेकदेशात् तृष्णाप्रशमनाद्यर्थक्रियासमर्थसलिललवोपयोगमात्रं प्रयोजनं, तावान् एव 'विजानतो' विज्ञानवतो 'ब्राह्मणस्य' ब्रह्मवेदिनः 'सर्वेषु' निखिलेषु सरहस्येषु 'वेदेषु' अर्थः प्रयोजनम्। यावता शास्त्रैकदेशेन परमार्थोपलब्धिलक्षणार्थक्रियानिर्वृत्तिर्भवति, तावदेव तेन ततो विधिसहस्रसंकुलादपि उपादातव्यम्। किमुक्तं भवति। यथा तृषितेन अर्थिना सुसंपूर्णात् समुद्रकल्पादपि जलाशयात् स्वार्थक्रियासंपत्तिमात्रक्षममुदकं स्तोकं समुपादीयते, न सर्वो जलाशयः। एवं ज्ञानक्रियाविषयविविधार्थसार्थसंपूर्णादपि वेदशास्त्रात् तत्त्वजिज्ञासुना तदवगममात्रोपयोगी एव अर्थः उपादातव्यः, नतु सर्वमेव वेदशास्त्रमिति ॥ ४७ ॥

अथ विजानता सर्वशास्त्रेभ्यो यदुपादेयं, तदर्जुनं पुरस्कृत्य उपदेष्टुमाह

कर्मण्यस्त्वधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४८ ॥

तव संप्रत्येव उपदिष्टतत्त्वज्ञानोपपत्तिप्ररूढदृढप्रतिपत्तिवशादनित्येभ्यो देहादिभ्यो व्यावर्तमानात्मप्रत्ययत्वे सति अद्वैतचिन्मयज्योतीरूपं परं तत्त्वमहमिति आत्मत्वेन प्रतिपद्यमानस्य सतः 'कर्मण्यधिकारोऽस्तु' यत् कर्म कायवाङ्मनोभिर्निर्वर्त्यव्या-

पारविशेषात्मकं वर्णाश्रमविभागेन देशकालावस्थापेक्षमुख्यगौणविविधेतिकर्तव्यताकलापेन नित्यादिभेदेन अवश्यकर्तव्यतया शास्त्रेषु विहितं, तस्मिन्नधिकारः कर्तृत्वं भवति; तदधिकृतः स्वार्थसिद्धये प्रवर्तस्वेत्यर्थः। यतः कर्म तावत् शरीरत्वाव्यभिचारि न केनचित् त्यक्तुं शक्यम्। अथ यत्याद्यवस्थायां कश्चित् नियमविशेषोऽवलम्बनीय एव, ततश्च स एव कर्मविशेषतां प्राप्नोति आश्रमान्तरकर्मनियमवत्; इत्थमशक्यः सर्वात्मना कर्मत्यागः। किंच गृह्यतां नाम अत्यागोऽपि त्यागाभिधानः। स तु तत्त्वज्ञानबाह्यतामेव आविष्करोति तथाविधस्य। यतो द्वेष्यतां विना कस्यचिदर्थस्य हानं न संभवति, नच उपादित्सितं प्रियमर्थं विना द्वेष्यता संभवति,—इति कर्मत्यागाभिधाने रागद्वेषप्रसंगो दुर्निवारः। यदिच तत्त्वस्य एकत्वात् कर्मणां यथेष्टमनियमेन अनुष्ठानमेव त्यागत्वेन अभिमतम्, तथापि पूर्ववद्रागद्वेषान्यथानुपपत्त्या सोऽपि अतत्त्वज्ञतामेव अनुष्ठातुरभिव्यनक्ति,—इति अकर्मता वा अविरुद्धकर्मता वा निरुत्तरानन्तनिजानन्दनिर्भरं परं तत्त्वमात्मत्वेन प्रतिपद्यमानस्य सर्वसाम्यलक्षणं परमं समाधिमधिरुरुक्षतस्तत्त्वज्ञानाभिनिवेशिनो योगिनो द्वयमपि अनुपपन्नमिति तथाविधस्य तव कर्मण्येव अधिकारोऽस्तु, किंतु तेषां कर्मणामनात्मज्ञजनसमुचितनानाभिसन्धानप्रार्थितेषु दृष्टानुश्रविकविविधभोगात्मकेषु बन्धहेतुषु फलेषु अधिकारो 'मा' भूत्। ये हि अतत्त्वज्ञतया फलानि अधिकृत्य तेषु तेषु कर्मसु प्रवर्तन्ते, तेषां तानि क्रियमाणानि एव कर्माणि वासनारूपतया अन्तःकरणभूमौ बीजभूतान्येव तिष्ठन्ते, अतश्च अनित्यक्रियाफलोपभोगप्रक्षये विविधवासनारूपस्य तेषु तेषु योन्यन्तरेषु तस्य तस्य जन्मनः पुनः पुनः कारणतां प्रतिपद्यन्ते, जन्म च तस्य तस्य कर्मणः, कर्म च

तस्य तस्य फलस्य हेतुत्वं भजते इति वासनाजन्मकर्मफल-चक्रमेतदनिशमावर्तमानमज्ञानां बन्धाय कल्पते इति त्वमपि सामान्यपुरुषवत् 'कर्मफलहेतुर्मा भूः' उक्तया प्रक्रियया कर्मणां शुभाशुभानां फलानि सुखाद्यात्मकानि हेतुर्जन्मनो निमित्तं यस्य स तथाविधो यथा न भवसि उक्तज्ञाननिष्ठः सन् कुर्वन्नेव कर्माणि तेन ज्ञानाग्निना दग्धबीजतामापादयन् परमेश्वरस्वभाव-समापत्तिलक्षणं मोक्षमवाप्नुहीत्यर्थः। अन्यच्च कस्यांचिदवस्थायां प्रस्तुतस्य कर्मपरिहारस्य विधीयमानत्वात् यदकर्मेति मन्यसे, तत्र तादृशेऽपि 'अकर्मणि ते' तव 'सङ्गः' माभूत्। तत्रापि हि सङ्गः कर्मान्तरवत् बन्धहेतुरेवेति उक्तमेव प्राक् ॥ ४८ ॥

यत एवम्, अतः

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४९॥**

इह शास्त्रविहितानां कर्मणामनुष्ठाने यथोक्तात्माद्वैतज्ञाननिष्ठ-त्वलक्षणः समाधिर्योग उच्यते। यथा कपिलादिप्रणीतस्य सांख्य-संज्ञकस्य ज्ञानस्य पातञ्जलादिप्रणीते चित्तवृत्तिनिरोधलक्षणे योगे निष्ठा, तथा इह उपदिष्टस्य आत्माद्वयज्ञानस्य कर्मानुष्ठानसमाधौ निष्ठा,—इति योगशब्देन सोऽपि उक्तः। तत्र तादृशे योगे स्थितः आश्रमान्तरपरिहारेण कृतप्रतिष्ठः सन् यथोक्तानि 'कर्माणि' अनु-तिष्ठ। कथम्। 'सङ्गं' तत्तदभिसंहितफलप्राप्तिहेतुत्वप्रतिपत्त्या तावन्मात्रोपायलीनचित्तत्त्वं परिहृत्य,अत एव सिद्धौ फलसम्पत्तौ, असिद्धौ च तद्विघाते द्वयोरपि निर्विकारत्वात् 'समो' निर्विशेषो 'भूत्वा' यथोक्तज्ञाननिष्ठत्वात् नित्यपरिपूर्णयथोक्तात्मतत्त्वप्रत्य-वमर्शजनितानन्दतृप्तस्य कर्मणः फलेन अनित्येन सिद्धेन असिद्धेन वा न कश्चित् सुखदुःखात्मको विशेष इति सर्वसाम्यदशाधि-

रूढो भूत्वा यथोक्तयोगनिष्ठो भव । यतः 'समत्वं' सर्वासु अवस्थासु विकारलेशासंस्पृष्टत्वमेव 'योग उच्यते' साम्यप्राप्तिरेव अस्य निष्ठेत्यर्थः ॥ ४९ ॥

अत एव एतद्योगनिष्ठस्य योगिनो लक्षणमाह

यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह ।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ ५० ॥

'यस्य' यथोक्तयोगाधिकारिणः पुरुषस्य 'सर्वे समारम्भाः' सर्वासु क्रियासु प्रवृत्तयोऽवश्यंभाविनोऽपि 'निराशीर्बन्धनाः' भवन्ति, 'स त्यागी' इति सम्बन्धः । आशीरनित्यभोगविषया आकांक्षा, तदेव बन्धनं संसारहेतुत्वादस्वातन्त्र्यमाशीर्बन्धनम्, निष्क्रान्ता आशीर्बन्धनात् निराशीर्बन्धना भोगात्मकबन्धरहिता इत्यर्थः । अत एव अवश्यानुष्ठेयकर्मरूपं 'सर्वं' शुभमशुभं च 'त्यागे' फलाशासंन्यासे 'हुतम्' अग्नाविव बीजजातं फलप्रसव-सामर्थ्यविनाशाय निक्षिप्तं, स एवंविधो नित्यकर्मानुष्ठातैव 'त्यागी' त्यागवान्, न पुनः क्लेशभीरुत्वादिना कर्माणि एव त्यजन् त्यागी भवति,—इति । युक्तिरत्र प्रागेव उक्ता । स एवच एवंविधः प्रशस्यज्ञानयुक्तः, नतु यः कर्मत्यागादिमात्रं ज्ञानं मन्यते ॥५०॥

अत एवंविधोत्कृष्टबुद्धियुक्तं कर्म समाचरेत्, न केवलमिति आह

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ५१ ॥

यस्मात् 'बुद्धियोगात्' यथोक्तज्ञानसमाधानात् 'दूरेण' अतिशयेन केवलं तद्विरहितं 'कर्म अवरं' निकृष्टं ज्ञानशून्यं कर्म संसारहेतुत्वात् ततोऽत्यन्ताधममित्यर्थः । अतश्च 'बुद्धौ' यथोक्ते सम्यग्ज्ञाने 'शर-णम्' आश्रयम् 'अन्विच्छ' अभिकाङ्क्षितामेव उपायतया अवलम्ब-

स्येत्यर्थः । यतो ये 'फलहेतवः' अनित्यं भोगलक्षणं फलमेव हेतुस्तत्साधनभूतासु क्रियासु प्रयोजकं कारणं येषां, ते ज्ञानशून्य-कर्ममात्रानुष्ठायिनः 'कृपणाः' तुच्छफलार्थित्वात् दीनास्तत्तज्जातिशरीराद्यभिमानावच्छिन्नम्, अत एव अनित्यभोगात्मकफल-तृष्णातुरमात्मानं मन्यमानाः सन्तो दुराचाराः ॥ ५१ ॥

अत एव तद्विलक्षणस्य ज्ञानिनः स्वरूपं प्रतिपादयितुमाह

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५२ ॥**

इह आत्मैव परमेश्वर एकं तत्त्वम् । स एवच स्वमायामहिम्ना ज्ञेयभावापादनेन सर्वस्य कार्यजातस्य एकः कर्ता पारमार्थिकः, विचित्रं च इदं कार्यं निर्मिमाणः स्वेच्छामात्रव्यतिरिक्तं न तस्य उपादानमपेक्षते, नापि सहकारिणम् । नच इदमित्थमवभासमानमपि कार्यं चिन्मात्रस्वरूपत्वादतिरिक्तं विकारलेशं कंचिदर्पयितुं प्रभवति । तदेवंविधनित्यनिरतिशयैश्वर्ययुक्तमेकं तत्त्वमात्मत्वेन निष्प्रकम्पया प्रतिपत्त्या यः प्रत्यवमृशति, स बुद्ध्या परमेण प्रबोधेन सम्यग्ज्ञानेन युक्तः संबद्धः इह उच्यते । सच एवंविध 'इह' उपदिश्यमाने कर्मयोगेऽधिकृतः कुर्वन्नपि कर्माणि ईश्वरभावानुप्रवेशात् सर्वं समत्वेन पश्यन्, इदं स्वर्गादिसुखफलहेतुत्वात् सुकृतं सत्कर्म, इदं दुःखहेतुत्वात् दुष्कृतं दुष्टकर्म,—इति अनुत्पन्नविवेकज्ञानैर्विषमदर्शिभिः परिकल्पितभेदे 'सुकृतदुष्कृते' द्वे अपि 'जहाति' त्यजति न तस्य योगिनः सर्वसमत्वसमाहितस्य क्रियमाणमपि कर्म सुकृतदुष्कृतलक्षणं भेदं भजतीत्यर्थः । एवमनेन श्लोकार्धेन तत्त्वज्ञानवान् नियतं कर्म कुर्यादेव, नच तत्र अपारमार्थिकं सदसद्विकल्पमारोपयेदिति उपदिष्टं भवति । यत एवं 'तस्मात्'त्वं यथोक्ततत्त्वज्ञानाभिनिविष्टः सन् 'योगाय'

समाधये 'युज्यस्व' कर्मानुष्ठानद्वारेण युक्तो भव, यतः कर्मसु क्रियमाणेषु यत् 'कौशलम्' उक्तज्ञाननिष्ठत्वेन साधुकारित्वं तदेव 'योगः' समाधिरिह, न अन्यः ॥ ५२ ॥

एतमेव अर्थं हेतूपन्यासपूर्वं विवरीतुमाह

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५३ ॥

यतः 'कर्मजम्' अतत्त्वज्ञैः क्रियमाणात् कर्मणोऽवश्यम्भावि सुखाद्यात्मकं 'फलं' सर्वदा सर्वतो निरभिकांक्षस्य आत्मनिष्ठत्वादनभिसन्धानेन 'त्यक्त्वा' विहाय फलाभिसन्ध्यनुष्ठीयमानकर्मप्रतिबद्धत्वात्[1] जन्मनः पुनर्भवलक्षणात् बन्धनादस्वातन्त्र्यात् निर्मुक्ताः सन्तो निर्विघ्नतया 'अनामयम्' अनित्यसुखादिसंकल्पदोषरहितं 'पदं' पारमार्थिकस्वरूपप्रतिष्ठात्मकं धाम 'गच्छन्ति' प्राप्नुवन्ति । अतस्त्वं बुद्धियुक्तो योगाय युज्यस्वेति पूर्वेण सम्बन्धः ॥ ५३ ॥

यदा च एतत् परमदुरवगाहं तत्त्वज्ञानमुक्तमपि झगिति मनसि प्रतिष्ठां न निबध्नाति, तदा त्वया अत्र शिथिलोत्साहेन न भवितव्यं यतः क्रमेण एतत् ज्ञास्यसे,—इत्याह

यदास्य मोहकलिलं बुद्ध्या व्यतितरिष्यसि ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५४ ॥
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चिता ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५५ ॥

'यदा' यस्मिन् काले त्वम् 'अस्य' उपदिष्टस्य ज्ञानस्य उपपन्नत्वमात्रप्रतिपत्त्या 'मोहकलिलं' अनादिजन्माभ्यस्तदेहाद्यात्मप्रत्ययस्वरूपमज्ञानकर्दमं 'व्यतितरिष्यसि' विपर्ययत्वप्रतिपत्त्या लङ्घयिष्यसि 'तदा' इदं श्रुतम्, इदं श्रोतव्यमितिसंशयाविष्टजनोचितयोर्नानाशास्त्रविषययोः श्रोतव्यश्रुतयोः 'निर्वेदं' विरागं

१ ख० भ० पु० प्रतिबद्धाज्जन्मन इति पाठः ।

गमिष्यसि ।। ततश्च निश्चयाभावात्, इदं श्रुतम्, इदं श्रोतव्यमिति-विचिकित्साविष्टतया या श्रुतिर्नानाशास्त्रश्रवणं, तस्या अनुपादेय-त्वात् विप्रतिपन्ना प्रतिकूला सती तव मतिः 'निश्चिता' यथोक्ता-त्मज्ञाननिवृत्तसंदेहा, अत एव 'अचला' विकल्पैर्बलवद्भिरपि अप्रकम्प्या सती 'यदा स्थास्यति' अस्मिन् समाधौ स्थितिं प्रतिष्ठां लप्स्यते 'तदा' अनेन क्रमेण यथोक्तं 'योगं' कर्मसमा-धिलक्षणम् 'अवाप्स्यसि' प्रतिपत्स्यसे ।। ५५ ।।

अथ 'ते तदा मतिः स्थास्यति' इति भगवद्वचनं श्रुत्वा, स्थित-प्रज्ञत्वस्य सम्यक् तत्त्वमनवगच्छन्

अर्जुन उवाच

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेच्च किम् ।। ५६ ।।**

हे भगवन् केशव! कर्मसु किल कौशलं योग उक्तः, निश्च-लप्रज्ञता च स्थितप्रज्ञता । तदेवंविधस्य अस्य 'स्थितप्रज्ञस्य' 'का भाषा' कथमसौ भाषते, किमस्य व्याख्यानं? विरुद्धमिव अस्य चेष्टितं यतो वाङ्मनःकायैस्त्रिभिर्व्यापारणं कर्म उच्यते, तास्तिस्रोऽपि चेष्टा न अस्य उपपद्यन्ते। 'किम्' असौ 'प्रभाषेत'! भाषणक्रियां च अनुतिष्ठेत्, नहि अस्य एकतत्त्वनिश्चलप्रज्ञत्वात् भाषणं वचनकर्म उपपद्यते। 'किमसौ' 'व्रजेत्' गमनक्रियोपलक्षितं कायव्यापारमाचरेत्, सोऽपि अस्य पूर्ववत् न उपपद्यते । 'किमा-सीत' वाङ्मनसप्रचारपरिहारेण आन्तर्यैव वृत्त्या तिष्ठेत्, सापि अस्य कर्मकौशललक्षणे योगे वर्तमानस्य उभयकर्मवृत्त्यात्मिका न उपपद्यते–इति स्वरूपानवधारणात् का अस्य भाषेति उक्तम् । एतच्च प्रश्नत्रयमविवक्षितकर्मकक्रियामात्रविषयं वेदितव्यम् ।।५६।।

अथ

'यस्य सर्वे समारम्भाः················ ।' (५०)

इत्यादौ बुद्धिमच्छब्देन उक्तस्य स्थितप्रज्ञस्य स्वरूपमुक्तप्रायमपि दुरधिगमत्वात् सम्यगनवधारितम्, इदानीं केनापि अंशेन विशेष्य पुनरुच्यमानमवधारयेति अर्जुनं बोधयितुं

भगवानुवाच

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५७ ॥

इह खलु सर्वरहस्यानामुपनिषद्भूतेऽस्मिन् विज्ञाने कश्चिदेव लक्षेषु एको जन्मसहस्रपरिशीलितपर्यवभातैकात्मतापरामृष्टरजस्तमोमयमलतया सत्त्वमात्रशेषत्वे सति, समुपजातस्वरूपप्रत्यवमर्शयोग्यप्रज्ञश्चरमजन्मा पुरुषातिशयोऽधिकारी यस्तथाविधावसरोपजातानुजिघृक्षपरमेश्वरप्रेषिताभ्यां सततसहचरीभ्यां भक्तिश्रद्धाभ्यां दत्तदृढहस्तावलम्बो यथोक्तज्ञाननिःश्रेणीस्थिरनिवेशितपदः परमकारणसमापत्तिप्रतिबिम्बरूपं परमं धाम अधिरोढुमध्यवसितः, यमुद्दिश्य आत्मतत्त्वमेव अहन्तया व्यपदिशन् वक्ष्यति

'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥'(७।३)

इति, तथा

'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।' (७।१९)

इत्यादि। तादृशश्च सन् 'यदा'इदमाचरति 'तदा स्थितप्रज्ञो'भवति। किमाचरति। यदा 'मनोगतान्' संकल्पवर्तिनः 'कामान्' अतत्त्वज्ञानुष्ठेयकर्मफलभूतान् सुखादीन् 'प्रजहाति' प्रकर्षेण त्यजति मनागपि तान् न संकल्पयति, नतु कर्माणि प्रजहाति। कथमेतत् संभवति कर्माणि च करोति फलं च प्रजहाति,—इति। एतदुपपादयितुं विशेषणमाह 'आत्मन्येवात्मना तुष्टः' इति। न सर्वः कश्चित् स्वसंविदधिकरणं तोषं प्रीतिमनुभवति, किंतु अप्राप्तपूर्वेण केनचिदनित्येन प्राप्येन सुखसाधनभूतेन वस्तुना प्राप्तेन अनित्यमेव

तोषं प्राप्नोति । अयं तु योगी सततसन्निहितानस्तमितचित्प्रकाशात्मना परामर्शाभावमात्रात् व्यवधानमिव प्राप्तेन सर्वदा सुसंपूर्णस्वमहिमत्वादखिलवस्तुस्पृहाविच्छेदकारिणा स्वयंनिहितविस्मृतेन महानिधानेन इव पुनः प्रत्युदितस्मृतिवशात् प्रतिलब्धेन आत्मनैव सत्येन स्वभावेन निरुत्तरेण लाभेन लब्धसहजानन्दः। एवंविधश्च अयं कृपणप्रार्थनीयानुत्पादविनाशधर्मकान् कामान् कथं न प्रजह्यात् ॥ ५७ ॥

यदा च इत्थंभूतः सन् सर्वकर्माणि कुर्वन्नपि कामान् प्रजहाति, तदा स्थितप्रज्ञो यथोक्तस्वभावलब्धप्रतिष्ठबुद्धिर्भवति,—इति सामान्येन स्थितप्रज्ञलक्षणमुक्त्वा तदेव विशेषतो वक्तुमाह

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५८ ॥**

इह कर्मफलभूते सुखदुःखे प्राप्स्यमाने प्राप्ते च द्विप्रकारतया सर्वप्राणिनां विकारहेतुत्वमापद्येते । अयं तु उक्तलक्षणः स्थितप्रज्ञः प्राप्स्यमानेषु सत्सु 'दुःखेषु' 'अनुद्विग्नमनाः' निर्भयचित्त एव भवति, 'सुखेषु' च प्राप्स्यमानेषु 'विगतस्पृहः' निवृत्ताभिलाषो भवति, यथोक्तपरिपूर्णात्मस्वरूपलब्धप्रतिष्ठत्वात् सर्वसाम्यसमाधिमापन्नः, अत एव 'वीतरागभयक्रोधः' रागः सुखविषयोऽभिलाषः, तथा भयं सुखप्रतीघातहेतोरशक्यप्रतीकारात् सन्त्रासः, तथा क्रोधः शक्यप्रतीकारं तथाविधं प्रति रोषः, एते वीता विगता यस्य, स तथाविधः स्थितप्रज्ञ उच्यते ॥ ५८ ॥

एवं प्राप्स्यमानसुखदुःखनिर्विकारतया स्थितप्रज्ञस्य लक्षणविशेषमुक्त्वा, प्राप्तसुखदुःखस्य निर्विकारतया तं प्रतिपादयितुमाह

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५९ ॥**

योगी 'तत्तत्' अनन्तभेदं सुखसाधनभूतं दुःखसाधनभूतं वा

सुखात्मकं दुःखात्मकमेव वा 'शुभाशुभं प्राप्य नाभिनन्दति' न अपूर्वक्षणिकहर्षलक्षणं क्षोभं श्रयति, यतः सर्वस्मिन् वस्तुनि 'अनभिस्नेहः' इदं मम सर्वस्वम्, एतेन विना मम सर्वमन्यत् दुःखकारणमिति अभीष्टेषु वस्तुषु अनुरागोऽभिस्नेहः, स यस्य नास्ति, स तथोक्तः । तथा 'न द्वेष्टि' न तत्प्रतिषेधप्रयत्नलक्षणं क्षोभमुपयाति । य एवंविधः प्राप्तयोरपि प्रियाप्रिययोर्नित्यनिर्विकारस्वात्ममात्रसुव्यस्थितबुद्धिः, 'तस्य प्रतिष्ठिता प्रज्ञा' उच्यते ॥ ५९ ॥

एवं प्रतिष्ठितप्रज्ञत्वं येन कर्मणा उपायभूतेन निष्पद्यते, तद्वानपि स्थितप्रज्ञ एवेति प्रतिपादयितुमाह

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वतः ।
इन्द्रियाणीन्द्रियार्थेभ्यः स्थितप्रज्ञस्तदोच्यते ॥ ६० ॥

चशब्दो व्यतिरेके । 'यदा' पुनरयं योगी 'सर्वतः' सर्वेभ्य 'इन्द्रियार्थेभ्यः' शब्दादिभ्य 'इन्द्रियाणि' श्रोत्रादीनि 'संहरते' व्यतिरेचयति स्वभावतश्चिदर्करश्मिरूपाणि तन्निष्ठान्येव करोति । कथम् । 'कूर्मः' कच्छपो यथा स्वावयवान् स्वशरीरनिष्ठानेव करोति । 'तदा' असौ 'स्थितप्रज्ञ' इति 'उच्यते' ॥ ६० ॥

अथो विषयेभ्य इन्द्रियसंहारः किं शब्दाद्यग्रहणेन, किंवा गृह्यमाणेषु अपि शब्दादिषु निर्विकारत्वेन अत्र उक्तः,–इति पक्षद्वयसम्भावनायां पूर्वपक्षस्थैर्यप्रतिपादनपूर्वमुत्तरमेव पक्षं समर्थयितुमाह

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ६१ ॥

अभ्युपगम्य इदमुच्यते–अस्त्येतत् 'निराहारस्य' शास्त्रविहितानपि शब्दादीननाहरतस्तान् दूरतः परिहरतो 'विषयाः' इष्टाः शब्दादयो 'विनिवर्तन्ते' प्रत्यासत्त्यभावात् स्वकार्यं रागादिकं न आरभन्ते, किंतु 'रसवर्जं' तद्विषयं रसमभिलाषं रागाख्यं क्लेशं

वर्जयित्वा, स हि तदानीं प्रसुप्तस्तनुर्वा वर्तते । यदिवा परमनैष्ठिकस्य 'रसोऽपि निवर्तते' नाम 'परं' प्रकृष्टं समाध्युपेयं वस्तु 'दृष्ट्वा' साक्षात्कृत्य। यदिवा एष योगी यदा परं तत्त्वं विषयपरिहारसमाधिक्रमेण पश्यति, तदा तत् दृष्टवतस्तस्य रसोऽपि जातु निवर्तते इति क्त्वान्तं निष्ठार्थत्वेन व्याख्येयम् ॥ ६१ ॥

एवं विषयपरिहारपरमसमाधेः परामपि काष्ठां प्राप्तस्य सच्छलत्वं प्रतिपादयन्, यथोक्तज्ञानपूर्वमनिषिद्धविषयसेवात्मकमच्छलं समाधिं सिद्धान्तीकुर्वन्नाह

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६२ ॥**
**तानि संयम्य मनसा युक्त आसीत तत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६३ ॥**

'यत्' यस्मात् 'तस्यापि' विषयानाहरणसमाहितस्य परतत्त्वदर्शनयोग्यतामपि प्राप्तस्य विदुषो 'विपश्चितः' ज्ञानविघातजागरूकत्वात् छिद्रान्वेषणपराणि प्रमथनशीलानि 'इन्द्रियाणि' 'प्रसभं' प्रसह्यैव कंचिदवकाशलेशं लब्ध्वा 'मनः' चित्तं 'हरन्ति' लब्धादपि समाधिफलात् व्यपकर्षन्ति विषयाभिमुखतां नयन्ति । श्रूयन्ते हि तथाविधा विषयप्रतिषेधयोगनिष्ठा योगिनश्चिरादपि इन्द्रियैः कामान् प्रति प्रवर्तनेन प्रमथितचित्ताः। यत एवमयं सच्छलो विषयपरिहारसमाधिः, ततः 'तानि' इन्द्रियाणि 'मनसा' यथोक्तज्ञाननिष्ठेन चेतसा 'संयम्य' आत्मवशानि कृत्वा 'युक्तो' यथोक्तलक्षणे स्वात्मतत्त्वे समाहितः सर्वासु अवस्थासु तदेकनिष्ठः सन् 'तत्परः' शास्त्रानिषिद्धशब्दादिग्रहणप्रवृत्तेन्द्रियनिष्ठ एव 'आसीत' । यस्मात् यथोक्तेन क्रमेण 'यस्य' योगिन 'इन्द्रियाणि' 'वशे' विधेयत्वे वर्तन्ते, 'तस्य' 'प्रतिष्ठिता' लब्धनिश्चलस्थितिः 'प्रज्ञा' उच्यते । अत्र अयं

दृष्टान्तः—कश्चित् गारुडिकस्तादृशः संभवति यो मन्त्रप्रभावेण भुजगान् प्रतिषेद्धुमलम् । स यदा तादृङ्मन्त्रोपासनशैथिल्यलक्षणं प्रमादमातिष्ठति, तदा ते च्छिद्रान्वेषिणो भुजगास्तं व्यापादयन्ति एव । कश्चित्तु गारुडशास्त्ररहस्यवेदित्वात् तादृशातिशययुक्तो भवति येन तैरेव भुजगैः सार्धं स्रग्दामभिरिव क्रीडति, तं च ते न कदाचिदपि अभिभवितुं प्रभवन्ति । एवं यो योगी कयाचित् युक्त्या कंचित्कालं विषयान् परिहृत्य समाधिमभ्यस्यति, तस्य मनागपि अवधानविच्छेदात् ते लब्धावकाशा विषयाश्चित्तं प्रमथ्नन्ति एव । यस्तु यथोक्ते पारमार्थिके स्वात्मनि एव सदा सुव्यवस्थितः, स विषयैः क्रीडन्नपि न कथंचित् बाधितुं शक्यः । यथोक्तं

'वसन्विषयमध्येऽपि न वसत्येव बुद्धिमान् ।
संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि ॥'

इति ॥ ६३ ॥

अथ 'कूर्मोऽङ्गानीव' इति उपमाननिर्देशात् विषयेभ्योऽत्यन्तव्यावर्तनमेव इन्द्रियाणां संहारः संयमो यस्तेभ्यो[1]ऽन्यथैव तं प्रतिपादयन् प्रतिष्ठितप्रज्ञत्वस्य श्लोकपञ्चकेन मुख्यं लक्षणमाह

**ध्यायतो विषयान्पुंसः संगस्तेषूपजायते ।**
**संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६४ ॥**
**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६५ ॥**

इह खलु अचिन्त्यपरमेश्वरमायामुषितसम्यग्ज्ञानतया शरीरमात्रमात्मत्वेन प्रतिपन्नस्य संसारिणः सतः 'पुंसः' सन्निहितमपि मुख्यमव्ययं निरुपमानन्तनिजानन्दसुधासागरं सत्यं स्वात्मानमविमृशतो दुःखैकपरिणामानित्यकृत्रिमसुखसाधनस्पृहतया शब्दादीन् 'विष-

१ तेभ्यो विषयेभ्यः, तमिन्द्रियाणां संहारम्, अन्यथा अन्येन प्रकारेण प्रतिपादयन्, रागद्वेषविमुक्तेन्द्रियाणां प्रवृत्तिरेव संहार इत्यन्यथात्वमित्यर्थः ।

यान्' 'ध्यायतः' सततं चिन्तयतः 'तेषु' 'सङ्गो' निविडनिमग्नमानसत्वम् 'उपजायते' उत्पद्यते। तस्मात् तथाविधात् 'सङ्गात्' 'कामः' तद्विषयोऽभिलाषो रागाख्यः क्लेशः 'संजायते' समुद्भवति। तस्माच्च तत्प्रतिकूलेषु वस्तुषु 'क्रोधः' द्वेषाख्यः क्लेशप्रकारः 'अभिजायते' प्रभवति। ततश्च 'संमोहः' आत्मानात्मादिवस्तुविवेकविरहात्मकमज्ञानं प्रभवति मोहाख्यः क्लेशः उन्मज्जतीत्यर्थः। ततश्च स्मृतिर्विभ्राम्यति—सत्यं स्मर्तव्यमात्मानमस्पृशन्ती स्वरूपलोपमिव आप्नोति। तादृशाच्च तस्मात् 'स्मृतिभ्रंशात्' 'बुद्धिः' परमार्थनिश्चयात्मकं ज्ञानं नश्यति तिरोभवति। तस्माच्च हेतोः पुरुषः सत्यस्वरूपप्रतिष्ठाभावलक्षणं नाशमुपगच्छतीति ॥ ६४–६५ ॥

संसारिणं पुरुषमुद्दिश्य अप्रतिष्ठितबुद्धित्वस्य हेतुपरम्परां प्रतिपाद्य, इदानीमनुजिघृक्षाक्षणाक्षिप्यमाणसन्देहतिरस्करिणीतिरोधानतया प्रकाशमानयथोक्तस्वस्वभावप्रकाशस्य प्राप्तप्रबोधस्य मुमुक्षोः पुंसः प्रतिष्ठितप्रज्ञत्वस्य कारणक्रमं प्रतिपादयितुमाह

रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६६ ॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६७ ॥
नास्ति बुद्धिरयुक्तस्य नचायुक्तस्य भावना।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६८ ॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६९ ॥

'विधेयात्मा प्रत्यवमर्शविषयभूतत्वात् स्वाधीन आत्मा स्वभावो यस्य स तादृशः पुरुष 'आत्मवश्यैः' तादृशस्य सत्यस्य आत्मनः

स्वशक्तितया प्रतिपाद्यमानत्वात् विधेयैस्तदधीनप्रवृत्तिस्थितिसंहृतिभिर्बाह्याभ्यन्तरैः 'इन्द्रियैः' करणैः किरणैरिव अर्कः पदार्थान् 'विषयान्' 'चरन्' गच्छन् 'प्रसादं' सुखादिकलङ्कसम्पर्काभावरूपं वैषद्यम् 'अधिगच्छति' प्रतिलभते । अत एव कीदृशैरिन्द्रियैर्विषयांश्चरन् । 'रागद्वेषविमुक्तैः' रागद्वेषौ हि विषयमात्रध्यानसंप्रसक्तस्य विस्मृतस्वात्मनः पुंसो विषयान् प्रति प्रवर्तमानेषु इन्द्रियेषु परिस्फुरतः । यस्य तु सर्वतःपरिपूर्णत्वात् नित्यनिरभिलाषस्वरूपप्रत्यवमर्शपूर्वकः सर्वज्ञानक्रियाव्यवहारः, स्यत रागद्वेषाभ्यां विमुक्तानि इन्द्रियाणि स्वं स्वं विषयमभिप्रवर्तन्ते इति तादृशैरिन्द्रियैर्विषयांश्चरन् प्रसादमधिगच्छति,—इति उक्तम् । एवंविधे च निसर्गनिर्मलस्वरूपाभिव्यक्तिलक्षणे 'प्रसादे' सति रागादिक्लेशनिबन्धनानां सर्वेषामाध्यात्मिकादिदैविकाधिभौतिकानां दुःखानां 'हानिः' परिक्षयः 'अस्य' पुंसः 'उपजायते' । यतो यथोक्तेन प्रकारेण प्रसन्नं नीरागद्वेषकलङ्कं चेतो यस्य तादृशस्य पुंसः 'आशु' प्रसादसमनन्तरमेव 'बुद्धिः' प्रज्ञा 'पर्यवतिष्ठते' परितः समन्तात् सत्ये स्वात्मनि निर्विप्लवां प्रतिष्ठां लभते ॥ ६६–६९ ॥

यत एवं

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वतः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ७० ॥**

'तस्मात्' कारणात् 'यस्य' पुरुषस्य 'सर्वतः' सर्वेभ्यः सुखहेतुभ्यो दुःखहेतुभ्यश्च 'इन्द्रियार्थेभ्यः' विषयेभ्यो दुःखहेतुष्वपि द्वेषविरहितत्वेन सुखहेतुष्वपि नीरागतया अप्रसृतान्येव 'निगृहीतानि' नियमितानि बाह्याभ्यन्तराणि 'इन्द्रियाणि तस्य' तथाविधस्य प्रत्यासन्नपरमेश्वरसायुज्यस्य 'प्रज्ञा' बुद्धिः 'प्रतिष्ठिता' स्वात्मनि लब्धस्थितिः, नतु अन्यस्य यः प्रतनुप्रयत्नलक्षणसमा-

धिनिरुद्धानि अनुत्खातरागद्वेषमयमूलत्वात् प्रसृतानि कार्यकराण्येव निगृहीतानि इन्द्रियाणि मन्यते ॥ ६८ ॥

अत एव समस्तसंसारिपुरुषविलक्षणां प्रबुद्धस्य वृत्तिं प्रतिपादयितुमाह

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा रात्रिः पश्यतो मुनेः ॥ ७१ ॥

सर्ववस्तुप्रकाशकस्वरूपप्रकाशनिरूपणरूपा वृत्तिरेव इह संसारिणः प्रति निशाशब्देन उक्ता, तद्विषयत्वेन हि सर्वभूतानि अनुन्मिषितदृक्शक्तित्वात् प्रसुप्तानि तिष्ठन्ति । एवंविधा 'या सर्वभूतानां निशा' 'तस्यां' तद्विषये 'संयमी' यथोक्तप्रकारेण निगृहीतसर्वेन्द्रियः प्रबुद्धो 'जागर्ति' प्रविकसितस्वभावनिर्मलविज्ञानमयविलोचनविभाव्यमानां तामेवं अविमुञ्चन् विगतमोहनिद्र आस्ते । 'यस्यां' तु प्रतिक्षणविनश्वरसुखदुःखसाधनभूतविषयग्रहणोत्सर्गमात्रव्यग्रसमग्रेन्द्रियग्रामायां संसारव्यवहारवृत्तौ सर्वभूतानि समस्तप्राणभृतो 'जाग्रति' तावन्मात्रावहितत्वात् विनिद्रतामिव अनुभवन्ति, 'सा' तादृशी वृत्तिः 'पश्यतः' सदसत्पदार्थसार्थपरमार्थमालोकयतो 'मुनेः' संयमिनः प्रबुद्धस्य 'रात्रिः' निशा तां प्रति तस्य निरवधानत्वात् ॥ ७१ ॥

एवं सततमनस्तमितसामान्यसंवित्प्रकाशात्मनि स्वभावे सुव्यवस्थितप्रसन्नबुद्धिः प्रबुद्धः पवन इव सदसदामोदैर्विविधैः पदार्थैः परिचयमुपगच्छन्नपि तत्संपर्कसंजातैः सुखादिभिर्मनागपि न विकृतिं नीयते इति उपमाननिदर्शनेन स्फुटतरं तत्स्वरूपं प्रतिपादयितुमाह

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।

तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७२ ॥

'स' प्रबुद्धः पुरुषातिशयः 'शान्तिं' सकलविकल्पकल्लोलक्षोभपरिक्षयात् निस्तिमितचित्तवृत्तिताम् 'आप्नोति' अधिगच्छति। कोऽसौ । 'यं' 'कामाः' विषयाः 'तद्वत् प्रविशन्ति' निरभिलाषमेव अवगाहन्ते । कथम् । यथा 'समुद्रं' नानादिगन्तरागतसरिद्रूपा 'आपः' । कीदृशम् । ताभिः 'आपूर्यमाणं' भ्रियमाणमपि 'अचलप्रतिष्ठं' निष्प्रकम्पापारगम्भीरनिजावस्थानम् । अनेन उपमानेन प्रत्यासत्तिसामर्थ्यात् सम्बध्यमानैरपि सुखादिहेतुभिः शब्दादिभिर्यः क्षोभं नेतुं न शक्यते, स एव शान्त इति उच्यते, नतु यस्तेषु सन्निहितेषु अशान्तः । यथोक्तं

'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।'
(कु० सं० १।५८)

इति । अत एव आह 'न कामकामी शान्तिमाप्नोति' इति ॥७२॥

मनसा कामान् सुखसाधनभूतान् विषयान् कामयमानोऽभिलष्यन्नेव इन्द्रियव्यापारपरिहारमात्रेण न शममाप्नोति,— इत्येवमभिप्रायं प्रकटयितुमाह

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७३ ॥

'यः' 'सर्वान्' अशेषान् 'कामान्' इष्टान् शब्दादिविषयानभिलाषान् मनसैव 'विहाय' परित्यज्य इन्द्रियैर्विषयान् 'चरति' अवगाहते 'स' 'शान्तिम्' उक्तरूपाम् 'अधिगच्छति' प्राप्नोति । कीदृशः सन् । नित्यतृप्ताद्वयचिन्मात्रप्रतिलब्धात्मप्रत्ययत्वात् 'निःस्पृहः' स्पृहातो विषयसुखलोलुपताया निष्क्रान्तः, तथा 'निर्ममः' प्रतिनियतेषु देहेन्द्रियविषयादिषु भावेषु ममैव इदमिति ममत्वाभिमानात् निष्क्रान्तः, तथा 'निरहंकारः' देहबुद्धिप्राणादिषु आत्मप्रत्ययरूपादवच्छिन्नादहंकारादपि निष्क्रान्तः इति ॥ ७३ ॥

एतदन्तेन ग्रन्थेन अपवर्गमार्गप्रवणस्य पुंसः प्रथममेव सहजभक्त्याद्यव्यभिचारिचिह्नसूचितोपदेशयोग्यबुद्धितया सद्गुरूपदिष्टदेहदेहिव्यतिरेकज्ञाननिरन्तराभ्यासवशात् देहादिवर्गव्यावर्तमानात्मप्रत्ययस्य अद्वैतसामान्यसंवित्प्ररोहादहंप्रतीतेश्चिदर्करश्मिरूपाणामन्तर्बहिष्करणशक्तीनां शास्त्रचोदितेषु विषयेषु विसृष्टत्वमेव निग्रहं निरुत्तरपदप्राप्तिहेतुं सिद्धान्तीकृत्य सप्तदशाध्यायप्रदर्शितपरमरहस्योपदेशप्राणभूतार्थप्रतिपादकं द्वितीयमध्यायमुपसंहरन्नाह

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७४ ॥

'एषा' 'विहाय कामान्यः सर्वान्' इत्यन्तेन ग्रन्थेन प्रतिपादिता, ब्रह्मणः परस्य तत्त्वस्य परमात्मसंज्ञकस्य सम्बन्धिनी 'स्थितिः' । एतया ब्रह्मणि स्थीयते इति विषयान्तरनिवृत्तगतितया प्रतिष्ठा क्रियते । अत एव 'एनां' 'प्राप्य' यथोक्तेन क्रमेण स्वात्मीकारेण स्वीकृत्य अभियुक्तो 'न मुह्यति' देहादिषु आत्मप्रत्ययरूपं वैचित्त्यं न भजते, यतः 'अस्याम्' 'अन्तकालेऽपि' उपरमसमयेऽपि 'स्थित्वा' विश्रम्य 'निर्वाणं' नानाविकल्पक्षोभप्रत्ययात् प्रशान्तं 'ब्रह्म' परं तत्त्वं स्वं स्वभावमयम् 'ऋच्छति' गच्छति तदैकात्म्यमापद्यते इति ॥ ७२ ॥

द्वितीयेऽध्यायेऽस्मिन् हृदय इव गम्भीरविमले
गृहीते गीतानां विबुधदयितानां प्रणयतः ।
तदाश्लेषानन्दामृतरसमपूर्वं रसयतां
सदा वः पुम्भावो भवतु कृतकृत्यः कृतधियाम् ॥

इति श्रीमद्राजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे द्वितीयोऽध्यायः ॥ २ ॥

---

# अथ तृतीयोऽध्यायः

अथ ज्ञानस्य कर्मणश्च भगवद्भाषितानि पृथक् प्रशंसावचनानि अनुविमृशन् सम्यक् समुच्चयार्थमनवधार्य किमेतयोरुपादेयतरं स्यादिति संशयानो

भगवन्तमर्जुन उवाच

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥
व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

"दूरेण ह्यवरं कर्म बुद्धियोगात्·········।" ( २।५१ )

इत्यादि वदतस्तव 'कर्मणः' सकाशात् यदि 'बुद्धिर्ज्यायसी मता' ज्ञानं प्रकृष्टतरत्वेन अभिप्रेतं, 'तत्' 'किं' केन हेतुना बन्धहेतुत्वात् सर्वस्मिन् 'कर्मणि' दारुणविपाकत्वात् 'घोरे' विशेषतोऽस्मिन् गुरुज्ञातिघातादिमहापातकहेतौ संग्रामरूपे 'मां'

"कर्मण्यस्त्वधिकारस्ते··············· ।" ( २।४८ )

इत्यादिना 'नियोजयसि' प्रवर्तयसि । इत्थंच परस्परविरुद्धज्ञानकर्मप्रशंसारूपत्वात् 'व्यामिश्रेण' संकीर्णेन 'वाक्येन' मम 'बुद्धिं' प्रज्ञां 'मोहयसीव' निश्चयोपदेशेन प्रबोधनमिच्छन् संशयापादकवचनप्रणयनात् वैचित्त्यमिव मां प्रापयसीत्यर्थः । तस्मात् कारणादेतयोर्ज्ञानकर्मणोर्मध्यात् 'एकं' ज्ञानं कर्म वा इदमेव अनुष्ठेयमिति 'निश्चित्य' निर्णीय ब्रूहि, येन एकतरेण सुगृहीतेन सता 'श्रेयः' अपवर्गलक्षणमभ्युदयम् 'अहं' प्राप्नुयां लभेयेति ॥ १–२ ॥

अथ अन्यथैव मयोक्तमन्यथैव त्वया प्रतिपन्नमिति अर्जुनं प्रति उपालम्भमिव आविष्कुर्वन् तत्संशयव्युदासाय

भगवानुवाच

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

संख्या यथाप्रतिपादितलक्षणशरीरिशरीराद्युपादेयहेयपदार्थसंख्यानं, तद्विदो मुख्यतया सांख्या उच्यन्ते। योगो यथोक्तसांख्यनिश्चितार्थसाक्षात्कारकरणं क्रियाविशेषः, स विद्यते येषां, तेऽपि मुख्यतया योगिनः, कपिलादयो हैरण्यगर्भादयश्च गौण्या वृत्त्या सांख्या योगिनश्च उच्यन्ते । यथोक्तलक्षणस्य आत्मादेरर्थस्य तेषामनिश्चयादसाक्षात्काराच्च तदेवंविधानां सांख्यानां योगिनां च 'पुरा' अस्मादध्यायात् पूर्वं द्वितीयेऽध्याये 'मया' एकैव 'निष्ठा' 'उक्ता' निश्चयसिद्धान्तः प्रतिपादितः । कीदृशी निष्ठा। द्विविधा द्वे एकानुष्ठातृपुरुषनिष्ठे युगपत्प्रयोज्ये विधे विधाने प्रकारौ यस्याः, सा तथोक्ता । केन प्रकारेण द्विविधा,—इत्याह 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति । यथाप्रतिपादिताद्वयचिन्मात्रस्वरूपस्य आत्मतत्त्वस्य प्रत्यभिज्ञानलक्षणा प्रतिपत्तिरिह ज्ञानमुच्यते, तद्विषयो योगः समाधिः कर्मण्यपि सति यथोक्तस्वरूपाप्रच्युतिलक्षणं प्रणिधानम् । तेन 'ज्ञानयोगेन' यथोक्तानां 'मुख्यानां' सांख्यानां निष्ठा मया उक्ता। ते हि नैष्ठिकाः सांख्या येषां कर्मणि प्रवृत्तानामपि यथोक्तात्मज्ञानविषयः समाधिरविप्लुतः। कर्म यथावर्णं यथाश्रमं शास्त्रचोदिता सा सा क्रिया, तत्र योगः समाधिर्यथोक्तज्ञानापरित्यागेन तदनुष्ठाननिष्ठता। तेन 'कर्मयोगेन' मुख्यानां 'योगिनां' निष्ठा उक्ता। एवं ज्ञानयोगस्य कर्माविनाभावात् कर्मयोगस्य च ज्ञानाविनाभावादेकैव प्रकारद्वयनि-

र्वेत्यौ निष्ठा मया पूर्वमुक्ता । तत्प्रतिपादकश्च ग्रन्थस्तत्र उक्तः कथं विस्मृतो भवतः । तथाच

"दूरेण ह्यवरं कर्म·············· ।" (२।४९)

इत्यादिना ज्ञानस्य प्रकर्षप्रतिपादनमुपक्रम्य तत्समाधिप्रतिपादनाय उक्तं 'तस्माद्योगाय युज्यस्व' कर्मनिष्ठो भव यतः कर्मसु यो योगस्तत् कौशलं सा बुद्धिमत्ता ज्ञानित्वमिति । अनेन ज्ञानयोगेन सांख्यानां निष्ठेति तत्र उक्तम् । तथा "कर्मण्यस्त्वधिकारस्ते" "तस्माद्योगाय युज्यस्व" इत्यादिना कर्मणोऽवश्यकरणीयत्वं व्यवस्थाप्य तत्समाधिप्रतिपादनाय उक्तं

"कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
कर्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥" (२।५३)

तथा

"रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥" (२।६६)

इति । अनेनापि कर्मयोगेन योगिनां निष्ठा तत्र उक्ता । किं बहुना

"दूरेण ह्यवरं कर्म··············· ।" (२।४९)

इत्यतः प्रभृति अध्यायपरिसमाप्तिं यावदेकपुरुषानुष्ठेयद्विविधनिष्ठाप्रतिपादनपरत्वेन सर्वो ग्रन्थस्तत्र व्याख्यातः । तत् का मे व्यामिश्रवचनता यया एवं ते बुद्धिमोह उत्पन्नः ॥ ३ ॥

अथ मन्यसे यथोक्तात्मलक्षणैकार्थावहितत्वं ज्ञानमिति उक्तम्, कर्म च नानाविषयहानादानरूपव्यापारात्मकं; तदेतयोर्ज्ञानकर्मणोः परस्परविरुद्धयोर्युगपदेकपुरुषानुष्ठेयत्वं कथमुपपद्यते इति । अत्र उच्यते सम्यगनवधारिता ज्ञानकर्मानुष्ठाननिष्ठा तव

एवंविधबुद्धिमोहकारणम् । अतस्तां पुनरुच्यमानामवधारय,—इति मनसि कृत्वा आह

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
नच संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

अगृहीतयथाप्रतिपादितसमुचितसमुच्चयार्थनिश्चयत्वात् सर्वथा कर्मणां ज्ञानविरोधित्वं मन्वानस्य तव यदेतत् 'नैष्कर्म्यम्' अविद्यमानकर्मत्वं सिद्धिहेतुत्वेन प्रतिभाति, तत् सिद्धिकामः 'पुरुषः' 'कर्मणां' सर्वक्रियाणाम् 'अनारम्भात्' अननुष्ठानात् 'न अश्नुते' न प्राप्नोति वक्ष्यमाणया युक्त्या शरीरित्वाव्यभिचारिणां शास्त्रीयाणां च कर्मणां दुष्परिहरत्वात् । अतो न कर्मणामेषामकरणमात्रमभावत्वेन इह विवक्षितम्, किन्तु बन्धलक्षणस्वकार्यसम्पादनसामर्थ्यभङ्गेन एषामभावापादनमिह अभिप्रेतम् । अथ विहितकर्माननुष्ठानमात्रं कर्मत्यागः संन्यासोऽभिमतः । तदेवंविधात् संन्यसनमात्रादेव केवलात् यथाप्रतिपादितज्ञानशून्यात् 'न पुरुषः सिद्धिम्' अपवर्गलक्षणां सम्पत्तिं 'समधिगच्छति' समासादयति ॥

यदि इह ज्ञानरहितात् विहितकर्मपरिहारमात्रात् मोक्षलक्षणफलावाप्तिः स्यात्, तत् सुषुप्तादयो मोहात्मकत्वात् नैष्कर्म्यमावहन्तोऽवस्थाविशेषाः सिद्धिहेतवः स्युः, नच विहितकर्मानारम्भमात्रात् नैष्कर्म्यसिद्धिरिति यदुक्तं, तत्र हेतुमाह

नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

हिशब्दो हेतौ । यस्मात् 'कश्चित्' देही 'जातु' कदाचित् तत्तदवस्थाविशिष्टे कस्मिंश्चिदपि काले न 'क्षणमपि' सुसूक्ष्मपि कालं तदवयवम् 'अकर्मकृत् तिष्ठति' कर्म अकुर्वाणः स्थितिमनुभवति वर्तते इत्यर्थः । तथाच बाल्ययौवनवार्धकरूपासु स्थूलासु अवस्थासु मनो-

वाक्कायैः सर्वः कश्चिद्देही कर्म कुर्वन्नास्ते इति सुव्यक्तमेव तदन्तर्गतासु च जागरस्वप्नसुषुप्तरूपासु सूक्ष्मासु अवस्थासु न कश्चिदकर्मकृत् । यतो जागरावस्थायां शब्दादिविषयग्रहणव्यग्रेन्द्रियव्यापाररूपायां सर्वस्य तत्कर्मनिष्ठत्वं स्फुटमेव, स्वप्नावस्थायामपि विषयग्रहणाविलोपात् न कस्यचिदकर्मत्वेन स्थितिः, सुषुप्तावस्थायां तु तत्कालव्यतिरिक्तविषयसंवेदनाभावेऽपि प्रतिबोधकाले सुखदुःखमोहरूपानुभूतविषयप्रत्यवमर्शान्यथानुपपत्त्या मानसं कर्म विद्यते एव । या अपि योगिविषया एता जागरादयोऽवस्थाः, तास्वपि एषैव वार्ता । यतो जागरस्वप्नयोर्ग्राह्यग्रहीत्रादिविकल्पानुपरमात्, सुषुप्तावस्थायामपि तत्कालं ग्राह्यग्रहणग्रहीतृभेदसंवेदनाभावे सत्यपि व्युत्थाने तथाविधसमाध्यवस्थाप्रत्यवमर्शान्यथानुपपत्तिरिति तिसृष्वपि योग्यवस्थासु न कश्चिदकर्मकृत् वर्तितुमर्हति,—इति विहितकर्मानारम्भमात्रात् न नैष्कर्म्यसिद्धिरिति पूर्वेण सम्बन्धः । इत्थं सर्वकर्माभावस्य अनुपपत्तौ हेतुमाह 'कार्यते' इति । हिशब्दो हेतौ । यस्मात् 'सर्वः' कश्चिद्देहभृत् 'अवशः' परतन्त्र एव सन् 'प्रकृतिजैः' प्रधानभवैः 'गुणैः' सत्त्वादिभिः 'कर्म' शास्त्रविहितं शरीरित्वाव्यभिचारि च ग्राह्यतेऽनुष्ठाप्यते । इह हि परमेश्वरेच्छापरिकल्पितकारणभावं प्रकृत्याख्यं तत्त्वमन्योन्यगुणप्रधानभावपरिणतसत्त्वादिगुणमयं तत्तच्छरीरमशेषशरीरिणामारभते, गुणाश्च अन्योन्याविनाभाववृत्तित्वात् रजोगुणानुगतत्वे सति सर्वं कंचिच्छरीरिणं सात्त्विकादिकर्माधिकृतं कुर्वते इति 'प्रकृतिजैर्गुणैः सर्वः कर्म कार्यते' इति उक्तम् ॥ ५ ॥

एवंच सर्वदेहिनां सर्वावस्थासु सर्वकर्मोच्छेदानुपपत्तौ स्थितायां विहितानां कर्मणामनारम्भमात्रेण नैष्कर्म्याभिमानिनो योगिनः शरीरित्वाव्यभिचारिदुष्परिहरकर्मान्तरसद्भावात् कैवल्य-

लक्षणसिद्ध्यभावः प्रसक्तः इति तथाविधस्य प्रायेण अयोगित्वप्रतिपादनार्थमाह

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥

उक्तया उपपत्त्या मानसस्य कर्मणः उपरमाभावात् यो योगी 'मनसा' अन्तःकरणेन 'इन्द्रियार्थान्' शब्दादीन् 'स्मरन्' चिन्तयन् 'आस्ते' नैष्कर्म्यबुद्धिमालम्ब्य अवतिष्ठते 'स मिथ्याचार उच्यते' तादृशं योगाचरणं फलविसंवादात् वृथैवेत्यर्थः । यतः 'कर्मेन्द्रियाणि' कर्मेन्द्रियशब्देन इह बहिष्करणानि श्रोत्रादीनि वागादीनि च गृह्यन्ते, तेन शब्दादिग्रहणव्यापाराधिकृतानि श्रोत्रादीनि अक्षाणि नियम्य प्रयत्नविशेषेण स्वव्यापारात् प्रतिषिध्य असौ कंचित् कालं तथा आस्ते, नतु तावता सर्वात्मना सर्वक्लेशोच्छेदलक्षणकैवल्यफलप्राप्तिः । यतस्तथाविधायां समाध्यवस्थायां यदि परं क्लेशाः प्रसुप्ता भवेयुः, तथापि तेषां व्युत्थाने पुनः प्रबोधादनुच्छेदो गम्यते ॥ ६ ॥

यस्मिंस्तु समाधौ दग्धबीजकल्पतामापाद्यमानास्ते क्लेशाः सति अपि आलम्बने प्ररोहसामर्थ्यं न भजन्ते, तदधिकृतस्य इह विवक्षितस्य योगिनः पूर्वस्मात् विशेषं

'रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन् ।' ( २।६६ )

इत्यादिना पूर्वोक्तमपि स्मारयन् पुनराह

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

तुशब्दो व्यतिरेके । 'स' पुनः 'असक्तः' संगरहितो योगी पूर्वस्मात् योगिनो 'विशिष्यते' प्रकर्षत्वेन व्यतिरिच्यते । कोऽसौ । 'यो मनसा' यथाप्रतिपादितलक्षणसत्यात्मलब्धप्रतिष्ठत्वात् सर्वसा-

म्यदशाधिरूढेन अन्तःकरणेन बुद्ध्या श्रोत्रादीनि 'नियम्य' रागादिदोषसंस्पर्शात्, नतु शब्दादेर्विषयात्, प्रतिषिध्य एवंविधैः रागादिस्पर्शशून्यैः 'कर्मेन्द्रियैः' कर्मसु शब्दादिग्रहणरूपेषु व्यापारेषु अधिकृतैरक्षैः 'कर्मयोगमारभते' कर्मणा शास्त्रचोदितशब्दादिग्रहणरूपया क्रियया योगं सम्बन्धमारभते प्रस्तौति ॥ ७ ॥

रागद्वेषपरिहारः प्रकरणप्रतिपाद्यसिद्धिसाधनं, नतु कर्मणामनारम्भः । तस्मात्

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥

'नियतं' वर्णविभागेन आश्रमविभागेन च शास्त्रेण नियन्त्रितं 'कर्म' तां तां क्रियां 'कुरु' अनुतिष्ठ मा कदाचन त्याक्षीः । यतः 'अकर्मणः' कर्माभावात् क्रियात्यागात् 'कर्म' विहितक्रियानुष्ठानं 'ज्यायः' श्रेष्ठं यतः केषांचिदेव कर्मणामनारम्भे कर्माभावभ्रमो न सिद्धिहेतुः क्लेशानामनुच्छेदात् । यथोक्तेन समाधिना तु अनुष्ठीयमानं कर्म व्युत्थानहेतुषु विषयेषु सत्सु अपि क्लेशोन्मेषाभावाय पर्यवस्यत् प्रशस्यतरम् । नच शरीरित्वे सति सर्वकर्माभाव उपपद्यते यतस्तव 'अकर्मणः' सर्वात्मना कर्मरहितस्य स्थाणुकल्पस्य 'शरीरयात्रापि' देहवृत्तिरपि 'न प्रसिध्येत्' न घटेत । नच पानाशनशयनासनागमनाकुञ्चनकण्डूयनादिक्रियाकलापमन्तरेण केनचित् वर्तितुं शक्यम् ॥ ८ ॥

इत्थं च कर्मणः सर्वथा अभावानुपपत्तौ स्थितायां न सर्वं नाम कर्म अनुष्ठीयमानं सिद्धये कल्पते इत्याह

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर ॥ ९ ॥

यज्ञो यजनं मुख्यया वृत्त्या दैवतपूजनं; दैवतमपि

'यस्मिन्सर्वं यतः सर्वं............ ।'

इत्यादिश्लोकव्याख्यातस्वरूपः परमेश्वरः परमात्मैव एकं तत्त्वमिह अभिप्रेतम्, तस्य पूजनमपि यथाप्रतिपादितविज्ञानपरिशीलनविशुद्धया संविदा स्वभावत्वेन परामर्शलक्षणमाराधनम्; सोऽर्थः प्रयोजनं यस्य तादृशं यत् कर्म, तस्मात् तथाविधात् 'कर्मणोऽन्यत्र' तादृशं कर्म वर्जयित्वा अन्यादृशं कर्म कुर्वाणः सर्वः 'अयं लोकः कर्मबन्धनः' भवति कर्म शास्त्रचोदितमपि अनुष्ठानं बन्धनं संसारदायित्वात् पारतन्त्र्यहेतुर्यस्य, स तथा। यथोक्तात्मतत्त्वज्ञानशून्यतया विधिवदनुष्ठीयमानं शास्त्रीयमपि कर्म बन्धनायैव कल्पते, यथाप्रतिपादितविज्ञाननिष्ठतया अनुष्ठीयमानं तु परमेश्वराराधनमुख्ययागहेतुत्वात् परसिद्धिदं भवतीत्यर्थः। तथा च वक्ष्यति

'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।

स्वकर्मणा तमेवार्च्य सिद्धिं विन्दति मानवः ॥' (१८।४६)

इति। यत एवं, ततस्त्वं 'तदर्थं' तादृशस्य यज्ञस्य सम्पत्तये 'कर्म' शास्त्रचोदितां क्रियां 'समाचर' सम्यक् कुरु इत्यर्थः। कीदृशस्तस्य सम्यक्करणेऽधिकृत इति विशेषणमाह 'मुक्तसंगः' इति मुक्त असंकल्पात् परिहृतः संगो रागद्वेषादिदोषहेतुविषयेषु निमज्जनं तदेकनिमग्नचित्तत्वं येन, स तथाविधः सन्निति। अनेन मुमुक्षोस्तावत् कर्मापरित्यागः प्रतिपादितः ॥ ९ ॥

इदानीं कश्चित् प्रवृत्तिलक्षणधर्माधिकृतः, कश्चित् निवृत्तिलक्षणधर्माधिकृतः इति द्विविधशास्त्रोपदेशविषयभूते लोके न कस्यचिदपि कर्मपरित्याग उपपद्यते इति क्रमेण प्रतिपादयितुं प्रवृत्तिधर्माधिकृतस्यैव तावदागमोपन्यासपूर्वं कर्मापरित्यागमुपपादयितुमाह

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।

प्रजाशब्देन अत्र कर्मभूमिजन्मानः परज्ञानरहिताः स्वर्गादिभोगार्थिनो मनुष्या एव गृह्यन्ते तेषामेव प्रक्रान्तप्रजापत्युपदेशविषयत्वोपपत्तेः । तेन 'प्रजापतिः' परमेश्वरेच्छाकल्पितसर्गलक्षणकर्माधिकारो देवताविशेषो यथोक्ताः 'प्रजाः सहयज्ञाः' यज्ञेन नानादेवतायजनात्मकेन विधिविशेषेण सह सार्धं 'सृष्ट्वा' निर्माय 'उवाच' उपदिदेश ॥

किमुवाच,—इत्याह

अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥
देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥
इष्टान्भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥ १२ ॥

'अनेन' सहजन्मना यज्ञेन क्रियमाणेन यूयं 'प्रसविष्यध्वं' प्रसवं सन्तानमवाप्स्यथ वृद्धिं गमिष्यथेत्यर्थः । प्रसविष्यध्वमितिप्रयोगश्छान्दसः, अन्यत्रापि एवं द्रष्टव्यः । 'एष' च युष्माकमनुष्ठीयमानः सन् 'इष्टकामधुक्' भवतु क्रियाफलत्वेन अभिमतान् कामान् स्वर्गादिभोगान् दुग्धां पूरयतु । किमनेन कुर्म इत्याह 'अनेन देवान्' इन्द्रप्रभृतीन् 'भावयत' शास्त्रोपदिष्टेतिकर्तव्यताविशिष्टेन यज्ञेन तर्पितान् सतस्तृप्तिलक्षणां सत्तां लम्भयतेत्यर्थः । 'ते' च एवं भवद्भिरिष्टत्वात् तृप्ताः सन्तो युष्मान् 'भावयन्तु' वर्धयन्तु नरकतिर्यक्त्वादिपतनलक्षणादभावादुत्तारयन्तु वा । एवमन्योन्यभावनपराः सन्तः 'परं श्रेयः' यथाभिमतमभ्युदयम् 'अवाप्स्यथ' लप्स्यध्वे । यस्मात् यज्ञेन यागेन भाविताः सन्तो 'देवा इष्टान्' अभिप्रेतान् कामान् 'भोगान्' युष्मभ्यं 'दास्यन्ते'

प्रतिपादयिष्यन्ति। एवं 'तैः' देवैः 'दत्तान्' भोगान् 'एभ्यः' देवेभ्यो यज्ञविधिना अनुपहृत्य 'यः' तान् कामानश्नाति, 'स स्तेनः' चौर एव देवद्रव्यापहारिप्रत्यवायेन युज्यते इत्यर्थः। एतदन्तं प्रजापतिवचनम्, अतः परं भगवद्वाक्यम् ॥ १२ ॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥

इत्थं प्रजापतिनियममनतिक्रमन्तो यथोक्तात् यज्ञादनुष्ठितात् शिष्टं विघससंज्ञमन्नमश्नन्तो भुञ्जानाः सर्वैः समस्तैर्नित्यादियज्ञाननुष्ठानसम्भवैः किल्बिषैः पापैः 'मुच्यन्ते' त्यज्यन्ते न ते स्तेना भवन्तीत्यर्थः। 'ते' पुनः 'पापाः' पापिनः 'अघं' पापमेव 'भुञ्जते' 'ये आत्मकारणात्' स्वहेतोर्नतु देवाद्यर्थं 'पचन्ति' पक्तिं साधयन्ति, ते त्यक्तशास्त्रीयक्रियाः सन्तो निरयमेव प्राप्नुवन्तीत्यर्थः ॥ १३ ॥

यस्मात् सर्वमेतदक्षरसंज्ञात् परस्मात् ब्रह्मणः प्रवृत्तम्, तस्मादनतिक्रमणीयमेवेति क्रममाह

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

'अन्नात्' प्राणसन्धारणहेतोरोदनादेरभ्यवहार्यात् 'भूतानि' सर्वप्राणभृतो 'भवन्ति' सत्तां लभन्ते। प्राणवृत्तिनिबन्धनं हि भूतानां जीवितम्, अन्ननिबन्धना च प्राणवृत्तिः। तदेवंविधस्य अन्नस्य 'पर्जन्यात्' मेघात् सम्भवः। स च एवंविधः 'पर्जन्यो यज्ञात्' सोमार्काग्नीन्द्रादिदेवतायजनात्मकात् विधिविशेषात् 'भवति'। यज्ञे हि तर्पिता देवता व्रीह्यादिसम्पत्तये पर्जन्यं नियुङ्क्ते। स च काले वर्षादिना व्रीहीन् सम्पादयति। यथोक्तम्

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' (म०स्मृ० ३।७६)

इति । ईदृशश्च 'यज्ञः कर्मसमुद्भवः' कर्मणो विशिष्टेतिकर्तव्यतारूपात् विधानात् सम्भवो यस्य तथाविधः । तच्च ईदृशं 'कर्म ब्रह्मोद्भवं' ब्रह्मणः शास्त्ररूपादुद्भवो यस्य, तत् तथाविधम् । अपरेण शब्दात्मकेन वेदादिशास्त्ररूपेण ब्रह्मणा यज्ञसम्पादनसाधकं कर्म उपदिश्यते । तच्च इत्थंभूतं शब्दात्मकं 'ब्रह्म अक्षरसमुद्भवम्' न क्षरति संचलति, न स्वरूपात् च्यवते इति अक्षरं परं ब्रह्म परमकारणं, तस्मादुद्भवो यस्य, तत् तादृशम् । परस्माद्धि ब्रह्मणः परमकारणात् स्वरूपमजहत एव शास्त्रं वस्तुस्थित्या चित्स्वरूपतामव्यभिचरत् सूर्यादिव प्रकाशो व्यपदेशमात्रभिन्नस्वरूपं प्रसरति, अत एव तदपि ब्रह्मशब्देन उक्तम् । यत एवंविधा इयं प्रक्रिया प्रवृत्ता, ततः परं 'ब्रह्म' सर्वगतत्वेन समस्तवस्तुव्यापकत्वेन व्यवस्थितं सत् 'नित्यं' सदैव यथोक्तस्वरूपे 'यज्ञे प्रतिष्ठितम्' यदर्थमेव प्रसृतम्, तस्य अर्थस्य यज्ञे किल प्रतिष्ठा स्थितिः ॥ १५ ॥

यत एवम्, अतः

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

'एवं' यथोक्तेन प्रकारेण परब्रह्मस्वरूपेण परमेश्वरेणैव जगत्क्रीडास्थितये 'प्रवर्तितं' प्रवृत्तिलक्षणधर्मनिष्ठतया आविष्कृतं 'चक्रं' शास्त्रादिपदार्थसमूहं 'य इह' लोके 'नानुवर्तयति' स्वयं च यथाशास्त्रमननुवर्तमानोऽन्यानपि जनान् न अनुष्ठापयति, 'स' तादृशः परमेश्वरप्रवर्तितप्रक्रियाव्युत्थापकत्वात् 'अघायुः' पापायैव आयुर्जीवितं यस्य, स तादृशः सन् 'मोघं' निष्फलं 'जीवति' तादृशस्य हि तत्त्वज्ञानशून्यत्वादपवर्गलक्षणोत्तमफलाभावादीश्वरव्य-

वस्थापितनियमातिक्रमाच्च स्वर्गादिभोगलक्षणावरफलाभावादपि निष्फलमेव जीवितम् ॥ १६ ॥

एवं प्रवृत्तिलक्षणधर्माधिकृतस्य उपदेश्यस्य संसारिणः शास्त्रोक्तकर्मपरिहारानुपपत्तिं प्रतिपाद्य, इदानीं निवृत्तिलक्षणधर्मानुष्ठानप्रतिष्ठितबुद्धेरपि मुमुक्षोस्तां प्रतिपादयितुमाह

यश्चात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥
तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥

इह सर्वस्य कस्यचित् जन्तोरप्राप्तं सुखं प्राप्तुमिच्छतस्तत्साधनभूते शब्दादौ विषये रतिः रागोऽभिलाषो जायते, ततः प्रयत्नविशेषेण तस्मिन् प्राप्ते सति तृप्तिः सम्पूर्णेच्छता, ततः सन्तोषोऽभिकांक्षानिवृत्तिरिति एते रतितृप्तिसन्तोषाः सदा सन्निहिते निरुत्तरानन्दनिर्भरे स्वात्मनि एव प्रतिष्ठिताः। 'तस्य' तद्व्यतिरिक्तप्रापणीयवस्त्वन्तरनिरपेक्षणीयस्य अप्राप्तस्वार्थसाधनभूतं 'कार्यं' करणीयं 'न विद्यते' न सम्भवति। यतः सदा कृतकृत्यत्वात् 'तस्य नैव' कश्चित् 'कृतेन' प्रागकृतत्वादुपादेयतया इदानीं निर्वर्तितेन प्रयोजनम् 'नापि अकृतेन' हेयत्वात् परिहृतेन कश्चित् 'अर्थः' प्रयोजनम् । अत एव अस्य एवंविधस्य स्वात्मप्रतिष्ठितबुद्धेर्योगिनः 'सर्वभूतेषु' समस्तेषु स्थावरेषु जंगमेषु च सत्त्वेषु मध्ये 'न कश्चिदर्थव्यपाश्रयः' अर्थस्य प्राप्यस्य वस्तुनो व्यपाश्रय आलम्बनम् । इदमत्र तात्पर्यम्—प्राक्प्रतिपादितस्थिरबुद्धित्वदशामधिरूढस्य योगिनः फललिप्सया ममैवेदमिति असाधारण-

तया कार्यं साध्यं वस्तु न किञ्चन विद्यते, सर्ववर्णाश्रमसाधारणं च शास्त्रचोदितं कार्यं तत्तन्नियतकरणीयं प्रतिपादितविज्ञाननिष्ठस्य विद्यत एव। यत एवं, 'तस्मात्' कारणात् मुमुक्षुः सन् त्वं 'कार्यं कर्म' शास्त्रविहितत्वादवश्यानुष्ठेयं युद्धादिव्यापारम् 'असक्तः' क्षणिकसुखलवसाधनभूतेषु विषयेषु अनिमग्नचित्तवृत्तिः सन् 'समाचर' सम्यक् यथाप्रतिपादितात्मतत्त्वप्रतिष्ठितबुद्धित्वे मनागपि अप्रमत्ततया आचर अनुतिष्ठ। यस्मात् पुरुषो मुमुक्षुः संसारासक्तो मुक्तसंगः सन् शास्त्रनियंत्रितं 'कर्म आचरन्' कुर्वन् 'परं' प्रकृष्टमपवर्गलक्षणं प्राप्यं वस्तु 'आप्नोति' लभते, नतु कर्मत्यागात् सिद्धिः कस्यचिदस्ति सर्वकर्मत्यागानुपपत्तेः प्रागेव प्रतिपादितत्वात् कस्यचिद्वा कर्मणस्त्यागे सर्वकर्मत्यागाभिमानग्रहात् रागद्वेषादिदोषाविर्भावस्य दुर्निवारत्वात् ॥ १९ ॥

अत्रैव उदाहरणमाह

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**

इह लोके 'जनकादयः' राजर्षयः श्रुतिस्मृतीतिहासपुराणादिप्रसिद्धाः 'कर्मणैव' स्ववर्णाश्रमनियतेन क्रियाविशेषेण प्रजापालनादिना 'संसिद्धिं' निरुत्तरपुरुषार्थप्राप्तिलक्षणं फलम् 'आस्थिताः' स्वीकृतवन्तः। तथाच मोक्षधर्मेषु

'एकस्मिन्नप्यधिष्ठाने संवादः श्रूयतामयम् ।
छत्रादिषु च मुक्तस्य मुक्तायाश्च त्रिदंडकः ॥'

इति उपक्रान्ते सुलभाजनकसंवादे जनकवाक्यानि

'सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः ।
मुक्तसंगः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदंडिभिः ॥
मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैर्महात्मभिः ।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ॥

ज्ञाननिष्ठां वदन्त्येवं मोक्षशास्त्रविदो जनाः ।
कर्मनिष्ठां तथैवान्ये मुनयः सूक्ष्मदर्शिनः ॥
वाग्दंडोऽथ मनोदंडः कायदंडस्तथैव च ।
यस्यैते नियता दंडाः स त्रिदंडीति कीर्तितः ॥
प्रहायोभयमप्येतज्ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥'

इति तृतीया समुच्चयरूपेत्यर्थः, तथा अन्यत्र

'अकैश्चन्ये न मोक्षोऽस्ति कैश्चन्ये नास्ति बन्धनम् ।
कैश्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ॥'

(म. भा. शा. प. ३२५ अ.)

इति ॥

अथ तत्त्वविदोऽपि अन्यं कर्मापरित्यागहेतुमाह

लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

लोकशब्देन त्रिवर्गमात्रोपदेशविषयभूतो जनोऽत्र विवक्षितः, तस्य संग्रहः शास्त्रार्थानुष्ठातृलक्षणस्वपक्षस्वीकारः । तं वक्ष्यमाणहेतुना अवश्यकरणीयतया 'संपश्यन्' सम्यक् बुध्यमानस्त्वं 'कर्तुं' शास्त्रविहितानि कर्माणि आचरितुम् 'अर्हसि' । अतः 'श्रेष्ठः' कुलविद्यावृत्तादिभिर्ज्यायान् जनो 'यद्यत्' किञ्चित् कर्म 'आचरति' अनुतिष्ठति 'तत्तदेव' नान्यत् 'इतरो जनः' स्वयं कार्याकार्यविवेकशून्यमतिर्लोकोऽनुतिष्ठति । यतः 'स' श्रेष्ठो जनो 'यत्' वस्तु 'प्रमाणं कुरुते' स्वयमनुष्ठानादुपपन्नत्वेन व्यवस्थापयति 'तत्' 'लोकः अनुवर्तते' अनुसरति । तस्मात् परमार्थज्ञेन अपि लोकसंग्रहार्थं शास्त्रचोदितं कर्म सर्वथा अनुष्ठेयमिति ॥२१॥

अत्र आत्मानमेव उदाहरणं कुर्वन्नाह

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं प्रवर्तेऽथच कर्मणि ॥ २२ ॥**

हे 'पार्थ' मम स्वार्थसाधनतया 'कर्तव्यं' कार्यं 'न' किञ्चित् 'अस्ति' यस्मात् 'त्रिषु लोकेषु' समस्ते जगति 'अनवाप्तं' पूर्वमनासादितमिदानीम् 'अवाप्तव्यं' स्वेच्छापूरणाय लब्धव्यं न किञ्चिदस्ति। अलब्धलाभार्थो हि सर्वः कश्चित् स्वकार्यमारभते, मम तु यथाप्रतिपादिततत्त्वज्ञाननिष्ठाप्रतिष्ठितप्रज्ञस्य न किञ्चित् प्राप्यमस्ति । अतश्च तादृशोऽपि सन् लोकवत् 'कर्मणि' शास्त्रविहिते 'प्रवर्ते' सततमुद्युक्तो भवामि । अनेन

'यस्त्वात्मरतिरेव स्यात्············ ।
············तस्य कार्यं न विद्यते ।' (३।१७)

इति उपक्रम्य

'तस्मादसक्तः सततं कार्यं कर्म समाचर ।' (३।१९)

इति यत् प्रागुक्तं, तदेकानुष्ठातृपुरुषविषयमेवेति निःसंशयतया प्रतिपादितवान् ॥ २२ ॥

अथ तत्त्वज्ञोऽपि सन् भगवान् लोकवत् कर्मणि प्रवर्तते इत्याह

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तेरन्मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

'यदि अहं' वर्णाश्रमोचिते 'कर्मणि अतन्द्रितः' असंजातालस्यः सन् कदाचिदपि 'न वर्तेयं' न तिष्ठेयम् । तत् सर्व एव 'मनुष्याः' कर्मणि अधिकृता मानवाः प्रमाणभूतचरितस्य 'मम वर्त्म' मार्गमाचारम् 'अनुवर्तेरन्' अनुसरेयुः ॥ २३ ॥

किंच अत इत्याह

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥

यदि 'अहं' लोकवत् शास्त्रचोदितं 'कर्म न' आचरेयम्, तदमी 'लोकाः' समस्तानि भुवनानि संसारिपुरुषोचिततत्तत्स्वकर्मफलोपभोगाधिकरणभूतानि 'उत्सीदेयुः' उत्सादं विनाशं भजेयुः । कर्मनिबन्दना हि लोकानां स्थितिः । किंच तथाविधं कर्म अकुर्वन् 'संकरस्य' वर्णविभागमिश्रीभावस्य 'कर्ता' प्रवर्तको भवेयम् । सर्वे हि पुरुषा मां शास्त्रीयं कर्म अकुर्वाणमनुवर्तमानाः स्वं स्वं तत्तज्जातिविहितं कर्म यथेष्टमन्यजातिविहितत्वादिना विरोधेन अपि आचरन्तः संकीर्णवर्णतामाप्नुयुः । अतोऽहमेव वर्णसंकरदोषस्य कर्ता 'स्याम्' । किंच अतः 'इमाः प्रजाः' एतान् कर्मभूमिजन्मनः शास्त्रचोदितकर्माधिकृतान् सर्वान् संसारिणः पुरुषान् 'उपहन्याम्' उपघातेन विनाशेन योजयेयम् । एता हि प्रजाः यथाविहितं कर्म अनाचरन्त्यः स्वर्गादिप्राप्तेरपेता निसर्गतस्तत्त्वज्ञानशून्यत्वात् कैवल्यलक्षणादुत्तमात् पुरुषार्थात् दूरबहिष्कृता नरकतिर्यग्भावप्राप्तिलक्षणं विनाशमाप्नुयुः । तदित्थं परमेश्वरेच्छापरिकल्पितजगत्क्रीडानियमव्युत्थापकत्वं मयैव आचरितं भवेत् ॥ २४ ॥

अतः

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

'यथा' येन प्रकारेण 'अविद्वांसः' यथोक्तात्मतत्त्वज्ञानशून्यत्वात् मुख्यया विद्वत्तया रहिताः पुरुषाः 'कर्मणि' क्षणिकसुखसाधनभूते यज्ञादिक्रियात्मके व्यापारे 'सक्ताः' तदेव परत्वेन मन्यमानास्तावन्मात्रपरिसमाप्तपुरुषार्थाः सन्तः 'कुर्वन्ति' विहितानि

कर्माणि आचरन्ति, तथैव तेनैव प्रकारेण सामान्यजनदुर्लक्ष्यस्वहृदयसंवेद्यतत्त्वज्ञाननिष्ठत्वात् तादृशाभियोगरूपेण 'विद्वान्' परमार्थपंडितः 'कुर्यात्' कर्माणि आचरेत्। कीदृशः सन्। 'असक्तः' निरुत्तरानन्दामृतास्वादसततपरितृप्तत्वात् लोकवत् स्वर्गादिभोगविषयेन तत्तत्कर्मफलसंगेन रहितः। किमर्थमेवं कुर्यादिति हेतुगर्भं विशेषणमाह 'चिकीर्षुर्लोकसंग्रहम्' लोकस्य अबुद्धस्य जनस्य संग्रहं पूर्वोक्तं चिकीर्षुः सम्पिपादयिषुः। विदितवेद्येन हि विदुषा तत्त्वज्ञानोपदेशयोग्यताशून्यं लोकं नरकपातादिदुःखादुज्जिहीर्षुणा तथा कर्म आचरणीयं, यथा लोकस्तदनुवर्तमानः स्वकर्मानुष्ठानात् स्वर्गादेरपि फलात् न व्यपैति ॥ २५ ॥

अयोग्यस्य तत्त्वज्ञानोपदेशो विनाशाय एव पर्यवस्येदिति आह

**न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥**

'विद्वान्' प्रबुद्धो 'युक्तः' यथोक्तात्मज्ञानसहितः सन् सम्यक् यथाशास्त्रं जात्यादिनियतानि कर्माणि आचरन्ननुतिष्ठन् 'अज्ञानां' स्वभावत एव सम्प्रति परमेश्वरेच्छाननुगृहीतत्वादनाविर्भूतविवेकज्ञानानामत एव कर्मसु यज्ञादिसाधनभूतेषु भोगैश्वर्यप्रसक्तत्वादिना हेतुना संगिनां तत्रैव सक्तानां बुद्धेः प्रज्ञाया भेदं तादृशात् संगात् प्रच्यावनं न उत्पादयेत्। ते हि अज्ञाः सन्तो यदि तत्त्वज्ञाने कर्मत्यागमात्रेण व्युत्पाद्यन्ते, तत् तेषामज्ञत्वादेव तत्त्वज्ञाने प्रतिष्ठामलभमानानां स्वर्गादिहेतोश्च कर्मसंगात् प्रच्युतेर्बुद्धिर्भेदं प्राप्ता सती उभयभ्रंशायैव पर्यवस्येत् । अतस्तान् तथाविधानज्ञान् सर्वाणि कर्माणि, येषु हि ते गृहीतासंगाः, तानि 'जोषयेत्' प्रीत्या सेवयेत् स्वयं तदनुष्ठानप्रख्यापनेन ॥ २६ ॥

इत्थं परमेश्वरेच्छानियमितजगद्व्यवस्थाव्युत्थानविच्छेदाय स्वस्मिन् स्वस्मिन् कर्मणि लोकमप्रबुद्धं प्रवर्तयितुं प्रबुद्धस्य अपि लोकवत् विहितानां कर्मणामवश्यमनुष्ठानमुपपादितम् । अतश्च प्रबुद्धाप्रबुद्धयोस्तुल्यमेव कर्तृत्वं, तुल्यानि एवच कर्माणि, असक्तत्वकृतस्तु फलभेदः इति स्थिते तुल्ये कर्तृत्वे तुल्येषु च कर्मसु क्रियमाणेषु कथं फलभेद इति अनवधारितप्रबुद्धाप्रबुद्धविशेषस्य अर्जुनस्य संशयमाशंकमानः संसारिणो योगिनश्च समानेऽपि हि व्यापारे यथा फलभेदोपपत्तिः, तथा विभज्य विशेषं प्रतिपादयितुमाह

प्रकृतेः क्रियमाणानि गुणैः कर्माणि भागशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणार्थे वर्तन्ते इति मत्वा न सज्जते ॥ २८ ॥

इह यत् किञ्चित् शारीरं वाचिकं मानसं वा शास्त्रोक्तमशास्त्रोक्तं वा कर्म येन केनचित् कर्त्रा क्रियते, तत्र न असौ केवलः कारणं; किन्तु

'अधिष्ठानं तथा कर्ता········· ।' ( १८।१४ )

इत्यादिना वक्ष्यमाणाः पंच पदार्थाः कारणम् । ते च सर्व एव सत्त्वरजस्तमोलक्षणप्राकृतगुणमया एवेति वक्ष्यति । अतः 'प्रकृतेः' सम्बन्धिभिः 'गुणैः क्रियमाणानि' सर्वाणि 'कर्माणि' व्यवस्थितानि । कथम् । 'भागशः' सात्त्विकमधिष्ठानादि कारणं सात्त्विकं कर्म आरभते, रजोमयं राजसं, तमोमयं तामसमिति विभागेन । इत्थं कर्तुरपि

'मुक्तसंगोऽनहंवादी··············· ।' (१८।२६)

इत्यादिना त्रैगुण्यस्य वक्ष्यमाणत्वात् गुणानामेव कर्तृत्वे पर्यवसिते अहंकारेण शरीरादिषु आत्मप्रत्ययेन विमूढात्मा अप्रबुद्ध-

स्वभावः संसारी 'अहम्' एव केवलः 'कर्ता' इति अधिष्ठानादिकारणान्तरनिरपेक्षं कर्तृत्वं शरीरादिरूपे कृत्रिमे स्वात्मनि आरोपयति । स च गुणपरतन्त्रे तादृशि आत्मनि अहंकारमारोपयन् गुणेषु एव सक्तो न कदाचित् संसारबन्धहेतुभ्यो विमुच्यते । गुणविभागस्य कर्मविभागस्य च 'तत्त्ववित्' परमार्थवेदी योगी पुनः 'गुणाः' सत्त्वादयः 'गुणार्थे' स्वप्रयोजने देहेन्द्रियविषयाद्यात्मके 'वर्तन्ते' तत्रैव तिष्ठन्ति, न आत्मनः सर्वदा स्वतन्त्रसुप्रसन्नसंविन्मात्रस्वभावस्य स्वोपरागमर्पयितुं प्रभवन्ति,—इति सर्वदा सत्यात्मप्रतिष्ठतया न गुणेषु न कर्मसु 'सज्जते' अहंकारममकारौ तेषु न करोतीत्यर्थः । अथ कीदृशो गुणानां विभागः, कीदृशश्च कर्मणां, किंच अत्र तत्त्वमिति व्याख्यायते । इह परमेश्वरेण अचिन्त्यस्वेच्छाविलसितस्वभावात्मकसकलजगत्प्रपंचकारणत्वेन अवभासितया पारमार्थिकात्मतत्त्वाभेदाख्यातिमात्रशरीरया, अत एव भिन्नार्थविषयज्ञानक्रियानियमात्मकसत्त्वादिगुणमय्या प्रकृत्याख्यया अनाद्यविद्याप्रबन्धसम्बद्धानामीश्वरेच्छयैव अन्योन्यभेदेन अवभासमानानां जीवानां गुणैरेव आरब्धतनुकरणभुवनभोगादिकलापत्वात् सर्वमेव गुणाधीनमिति प्रायेण गुणा एव तेषां कर्तारः इति अयं क्षेत्रज्ञविषयत्वेन गुणविभागः । तथाविधाश्च ते जीवा यानि कर्माणि आरभन्ते ते तेषु विषयसुखतृष्णातुरतया सज्जन्ति तद्बाधकभूतेषु अन्येषु द्वेषेण पराभवन्तीति एतावन्मात्रनियतचित्तवृत्तित्वात् विमूढा भवन्ति,—इति तद्विषयत्वेन सर्वकर्माणि रागद्वेषमोहात्मकत्वात् संसारबन्धकारणतया पर्यवस्यन्तीति अयं तेषां कर्मविभागः । सत्यात्मतत्त्वप्रतिष्ठितबुद्धीनां तु योगिनामन्यथा गुणानां कर्मणां च विभागः । तथाहि ते गुणाः सत्त्वादयो गुणानामेव अर्थे प्रयोजने

संसारिविषयत्वेन जगत्प्रपञ्चविरचनारूपेण वर्तन्ते, न अस्मद्विषयत्वेन, एषां सर्वदानस्तमितसंवित्प्रकाशमात्रव्यतिरिक्तं किञ्चित् रूपान्तरं न भवतीति मन्वाना नित्यनिरतिशयनिजानन्दनवसुधास्वादनैकनिरताः कथं तेषु रागादिविषमविषरसमयेषु सज्जन्तीति योगिविषयत्वेन गुणा न गुणत्वेन स्फुरन्तीत्ययं योगिविषयो गुणविभागः। एवंविधाश्च एते यानि कर्माणि आरभन्ते, तानि क्रियमाणान्येव यथोक्तज्ञानाग्निदग्धत्वात् न संसारकारणतामापादयितुमेषां प्रभवन्ति,—इत्ययं योगिविषयः कर्मविभागः। तादृशो योगी गुणातीतः उच्यते। यद्वक्ष्यति

'न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति।
उदासीनवदासीनो गुणातीतः स उच्यते॥' (१४।२५)

इति। तत्त्वमपि एतयोर्गुणकर्मविभागयोरेतद्व्याख्यानेनैव व्याख्यातम्॥ २८॥

एवं प्रबुद्धाप्रबुद्धयोस्तुल्येषु कर्मसु क्रियमाणेषु मोक्षसंसारबन्धलक्षणं फलभेदमुपपाद्य, इदानीं प्रबुद्धस्य यथाप्रतिपादितज्ञानकर्मसमुच्चयानुष्ठानपरिनिश्चितबुद्धेर्लोकविषयमात्मविषयं च व्यवहारं नियमयितुमाह

**प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु।**
**तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्॥२९॥**

'प्रकृतेः' उक्तलक्षणायाः सम्बन्धिभिर्गुणैः सत्त्वादिभिरनादिसम्बन्धपरिचितत्वात् वासनारूपतया शरीराद्यारम्भकतया च व्यतिरिक्तत्वेन अवस्थितैः सम्मूढास्तादृशगुणमया एव शरीरादावात्मप्रत्ययलक्षणं संमोहमापन्नाः संसारिणो गुणमयेषु एव कर्मसु स्वर्गिमर्त्यभावतिर्यक्त्वादिफलहेतुषु 'सज्जन्ते' विवेकजज्ञानाभावात् तान्येव परत्वेन मन्यमानास्तेषु निमज्जन्ति। अतः 'तान-

कृत्स्नविदः' गुणपरिस्पन्दपरिमितीकृतज्ञानत्वात् सर्वं हेयोपादेयरूपं ज्ञेयजातमजानानान्, अत एव 'मन्दान्' अल्पधियः 'कृत्स्नवित्' समस्तज्ञेयतत्त्ववेदी 'न विचालयेत्' यत्रैव गुणात्मके कर्मणि फले च आसक्ताः, ततो न प्रच्यावयेत् तेषां बुद्धिद्वैधपरिहाराय सर्वं विहितं कर्म अनुतिष्ठेदिति ॥ २९ ॥

लोकसंग्रहापेक्षया अनुष्ठीयमानमपि कर्म योगिनो यथा कैवल्याय पर्यवस्यति, तथा तस्य प्रागुक्तमपि ज्ञाननिष्ठत्वेन कर्मानुष्ठानमर्जुनमुखेन निश्चिन्वन्नाह

**मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

'सर्वाणि' शास्त्रविहितानि यज्ञदानतपःप्रभृतीनि 'कर्माणि अध्यात्मचेतसा' यथाप्रतिपादितस्वरूपात्मनिष्ठेन मनसा 'मयि' परमकारणे परमगुरौ 'संन्यस्य' सम्यक् समर्प्य एक एव परमेश्वरः प्रथममेव प्रतिपादितस्वरूपः सर्वप्राणिभिः क्रियमाणानां सर्वकर्मणां कर्ता स्वेच्छामात्रेण स्वशक्तिविभवरूपाणां निर्माता। न तद्व्यतिरेकेण क्वचिदपि कर्तृत्वं पारमार्थिकमस्ति, गुणपरतन्त्रतया तु देहादौ तदभिमानो मायाविलसितमेवेत्यनया भावनया संन्यासविधिं सम्पाद्य, अत एव आशंसनीयवस्तुविरहात् 'निराशीः' आशीर्भ्यः प्रार्थनाभ्यो निष्क्रान्तः, अत एव सर्वभावेषु परिग्रहाभावात् 'निर्ममः' ममेदमिति संसारिपुरुषोचितायाः प्रतिपत्तेः निष्क्रान्तो 'भूत्वा' 'विगतज्वरः' यथोक्तविज्ञानामृतावगाहनात् निवृत्तसन्देहादिसमस्तसन्तापः सन् 'युध्यस्व' समरात्मकमवसरोपनतमवश्यकार्यं स्वकर्म अनुतिष्ठेति ॥ ३० ॥

एतावता ग्रन्थेन प्रायः परिसमाप्तोऽयं ज्ञानकर्मसमुच्चयानुष्ठानात्मक उपदेशसारो यतः प्रथमे तावत् प्रस्तावना अस्य प्रतिपा-

दिता, द्वितीये विज्ञानस्वरूपं परिघटितम्, तृतीये तत्संस्कृतस्य कर्मणोऽवश्यानुष्ठेयतेति मन्यमानो भगवानस्य परमरहस्यभूतस्य स्वमतस्य प्रभावप्रतिपादनार्थं बोधाबोधयोः फलमाह

ये मे मतमिदं नित्यमनुवर्तन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकिल्बिषैः ॥ ३१ ॥
ये त्वेतदभ्यसूयन्तो नानुवर्तन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥

इत्थं मया उपन्यस्तं 'मतं' मदीयं सर्वशास्त्रसर्वस्वभूतमभिप्रायं 'नित्यं' सर्वकालं 'ये मानवाः' शास्त्राधिकृता मनुष्या 'अनुवर्तन्ति' सम्यगवगम्य अनुतिष्ठन्ति ते 'सर्वकिल्बिषैः' अविद्याप्रभवरागद्वेषादिक्लेशमूलैर्घोरसंसारदुःखदायिभिः कुकर्माचरणजनितैः किल्बिषैः पापैः 'मुच्यन्ते' न पुनर्बध्यन्ते । कीदृशाः सन्तः । 'श्रद्धावन्तः' यथाप्रतिपादितमन्मतप्ररूढनिर्विकल्पप्रतिपत्तिजनितयथोक्तफलसम्भावनात्मिकया श्रद्धया युक्ताः, अत एव एतन्मतविषयामसूयामतत्त्वज्ञजनोचितामकुर्वन्तः । 'ये' पुनः 'एतत्' एवंविधं 'मन्मतमभ्यसूयन्तो' मोहतिमिरतिरस्कृतसम्यग्ज्ञानत्वात् दोषाधिरोपणादिना विगर्हन्तो 'नानुवर्तन्ति' न अनुचरन्ति, 'तान्' सर्वेषु समस्तेषु हेयोपादेयनिश्चयविषयेषु ज्ञानेषु शास्त्ररूपेषु विमूढान् विपर्ययप्रत्ययान् विशेषेण मूढान् विचित्तान् 'विनष्टान् विद्धि' भोगापवर्गलक्षणादुभयतोऽपि फलात् प्रच्युतान् सतो दुर्गतिप्राप्तिलक्षणं विनाशं प्राप्तान् जानीहि यतस्तेषां चेतोऽन्तःकरणमसम्यग्दर्शित्वात् सदपि नास्त्येव ॥ ३२ ॥

इदानीमुक्तमेव अर्थं सुदृढप्रतिपत्तये विनेयोपकाराय उक्तिभेदैर्नानारूपैः प्रतिपादयन् कर्मणां त्यागानुपपत्तिमेव द्रढयितुमाह

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

इह सर्वः कश्चित् देहवाननादिप्रबन्धप्रवृत्तया प्रकृत्या सम्बद्धः । यतः सर्वस्य शरीरेन्द्रियविषयादिकं सर्वमेव त्रिगुणम्, अतो 'ज्ञानवानपि' आविर्भूतदेहदेहिविवेकप्रज्ञोऽपि पुरुषः 'स्वस्याः' तेन तेन प्रकारेण शरीराद्यारम्भकतया परिणतत्वादात्मीयत्वमापन्नायाः 'प्रकृतेः' ईश्वरेच्छया जगत्कारणभावेन उद्भाविताया गुणत्रयात्मिकाया अविद्यायाः 'सदृशम्' अनुरूपं 'चेष्टते' व्यवहरति । किमनेन उक्तं भवति । दृष्टतत्त्वोऽपि प्रकृत्यारब्धशरीरादित्वात् मनोवाक्कायैर्यत् किंचित् कर्म आचरति, तत् त्रिगुणमेव उपपद्यते । तथाविधं च तत्कर्म ज्ञानवता अपि अशक्यपरिहारमिति प्रागपि प्रतिपादितम् । इत्थं सर्वभूतानि 'प्रकृतिं' स्वस्वभावं 'यान्ति' सर्वथा तामेव आश्रयन्ते, नतु तद्व्यतिरिक्तत्वेन श्वसितुं, स्पन्दितुं वापि उत्सहन्ते । ततो 'निग्रहः' नेदं स्वजातिविहितं कर्म अहं करिष्यामीति नियमः 'किं करिष्यति' इति प्राक्प्रतिपादितप्रकारेण सर्वकर्मप्रतिषेधस्य अशक्यत्वादकिंचित्कर एव भविष्यति, यदिवा निग्रहोऽपि कर्मैव, अतश्च हानोपादाननिबन्धनत्वात् रागद्वेषानुविद्धं सत् गुणात्मकत्वात् प्राकृतमेव सम्पद्यते,—इत्येवमपि अकिञ्चित्करो निग्रहः ॥ ३३ ॥

इत्थमपरिहार्ये कर्मणि ज्ञानवान् मुमुक्षुः किं कुर्यादित्याह

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

यो यस्य इन्द्रियस्य अर्थो विषयः श्रोत्रादेः शब्दादिः, तत्र तत्र अर्थे रागद्वेषौ व्यवस्थितौ । यदाहि शब्दादिविषयं सुखसाधनत्वेन श्रोत्रादिना इन्द्रियेण पुमानुपादत्ते, तदा तस्य तस्मिन्

रागो व्यवतिष्ठते; यदा तु दुःखकारणत्वेन तमेव विषयं हेयत्वेन प्रतिपद्यते, तदा तस्मिन् इन्द्रियेण परिह्वियमाणे द्वेषोऽस्य व्यवतिष्ठते इति सर्वस्मिन् विषये रागद्वेषौ व्यवस्थितौ। ज्ञानवानाविर्भूतविवेकज्ञानः 'तयोर्वशं' विधेयतामज्ञवत् 'न आगच्छेत्' यतः 'अस्य' ज्ञानवतः 'तौ' रागद्वेषौ 'परिपन्थिनौ' विरोधिनौ शत्रू। ततस्तावेव सर्वत्यागेन परिहार्यौ, नतु विषयाः। नहि तयोरपरिजितयोर्विषयपराजयः कृतो भवति। तौ हि यथोक्तज्ञानासिना यावत् न क्षतविक्षतत्वमापादितौ, तावत् परिवर्जितेऽपि विषयेऽन्तर्विजृम्भमाणौ पुरुषं वशीकर्तुं प्रभवत एव ॥ ३४ ॥

तदेवंगुणोपपत्तिवशात् सर्वस्मिन् कर्मणि प्रबुद्धस्य अप्रबुद्धस्य वा सर्वस्य कस्यचिदशक्यप्रतिषेधे स्थिते स्वकर्मानुष्ठानलक्षणो धर्मः प्रबुद्धेन अपि आचरणीयः इत्याह

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ३५ ॥**

यो यस्य वर्णाश्रमनैयत्येन शास्त्रविहितो धर्मः सदाचारः स्वत्वेन व्यवस्थितः, स कुतश्चित् कारणात् मुख्येन कल्पेन अनुष्ठीयमानत्वात् 'विगुणः' अपि स्वैर्गुणैर्विरहितोऽपि सन् 'स्वनुष्ठितात्' सुष्ठु सम्पूर्णसंविधानतया अनुष्ठितादाचरितात् 'परधर्मात्' विजातीयसमाचारात् 'श्रेयान्' प्रशस्यतरः शास्त्रविहितातिक्रमविहिताननुष्ठानजप्रत्यवायदोषस्य अभावात्। यत एवं स्वधर्मेऽनुष्ठीयमाने पारलौकिकशुभफलाप्तिः, अतस्तस्मिन् 'स्वधर्मे' सति 'निधनं' मरणमपि यत्, तत् 'श्रेयः' प्रशस्यतरं तत् स्यात् परसम्बन्धिनो धर्मात् स्वनुष्ठितात् सतः य उदयो राज्यलाभादिस्तस्मादपि तस्य लोकान्तरे विरुद्धफलहेतुत्वात् ॥ ३५ ॥

एवमात्मज्ञाननिष्ठतया शास्त्रचोदितस्वकर्मानुष्ठानमपवर्गलक्षणसिद्धिहेतुरिति भगवत्प्रतिपादितसकलप्रकरणसिद्धान्तं श्रुत्वा प्रतिपादितस्वरूपस्य आत्मनः पारतन्त्र्यमेवंविधमनुपपन्नं मन्यमानोऽर्जुन उवाच

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छमानोऽपि बलादाक्रम्येव नियोजितः ॥३६॥**

'अथ' एवं भगवता प्रतिपादितलक्षणः 'अयम्' आत्मा 'केन' स्वामिना इव भृत्यः 'प्रयुक्तः' प्रेरितः सन् कुकर्मरूपं 'पापं' दुर्गतिफलं किल्बिषमनिच्छन्ननभिलष्यन्नपि 'बलादाक्रम्य' हठादिष्टविषयप्रवृत्तिं निवार्य 'नियोजितः' व्यापारित 'इव' आचरति अनुतिष्ठति ॥ ३६ ॥

अत्र उत्तरं भगवानुवाच

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥**

येन प्रयुक्तोऽयमुक्तस्वरूपानाद्यविद्यादिक्लेशपाशपरवशः पुरुषः पापमाचरति, स 'एष कामः' परिणामविरसक्षणिकसुखलवसाधनभूतविषयोन्मुखः संकल्पः, एष एव चेतनाचेतनरूपप्रतिपक्षप्रतिहन्यमानत्वात् 'क्रोधः' तदुपघातप्रवृत्तिहेतुर्द्वेषः सम्पद्यते । सोऽयमिच्छाद्वेषात्मको दोषो 'रजोगुणसमुद्भवः' रजोगुणात् विषयसुखाभिलाषात्मकरागद्वेषहेतोः प्रकृतिधर्मात् समुद्भवति, अत एव 'महाशनः' उत्तरोत्तरविवर्धमानगर्वत्वात् महदपर्यवसितमशनं विषयहरणलक्षणोऽभ्यवहारो यस्य स तथा; ततश्च सर्वस्य तस्य भोगस्य दुःखैकविपाकत्वात् 'महापाप्मा' गुरुतरपातकमयो दुर्गतिहेतुत्वात् । तदेवंविधम् 'इह' संसारे 'वैरिणं'

दुरुत्तरदारुणदुःखदायित्वादाततायिनं 'विद्धि' जानीहि । तेन प्रयुक्तोऽयं पुरुषः पापमाचरति ॥ ३७ ॥

अथ तस्य वैतत्येन स्वरूपं जिज्ञासुरर्जुन उवाच

**भवत्येष कथं कृष्ण कथंचैव विवर्धते ।**
**किमात्मकः किमाचारस्तन्ममाचक्ष्व पृच्छतः ॥ ३८ ॥**

'एष' वैरित्वेन प्रतिपादितः कामाद्यात्मको दोषः 'कथं भवति' केन प्रकारेण स्थितिलक्षणां सत्तामनुभवति, केन प्रकारेण 'विवर्धते' प्रसरति । कश्च अस्य आत्मा स्वरूपं, कश्च अस्य आचारः किमाचरतीति । 'तत्' सर्वं 'मम' संशयं 'पृच्छतः' ब्रूहि ॥३८॥

अत्र प्रश्नचतुष्टये क्रमेण उत्तरं भगवानुवाच

**एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैः सह ।**
**सुखतन्त्र इवासीनो मोहयन्पार्थ तिष्ठति ॥ ३९ ॥**
**कामक्रोधमयो घोरः स्तम्भहर्षसमुद्भवः ।**
**अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ४० ॥**
**हर्षमस्य निवर्त्यैष शोकमस्य ददाति च ।**
**भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ ४१ ॥**

'एष' रजोगुणप्रभवः कामक्रोधरूपतया प्रसृतो दोषः शरीरिणामतिप्रत्यासन्नत्वेऽपि दुर्लक्ष्यत्वात् 'परः सूक्ष्मः शत्रुः'। स च अहंकार एव पर्यवस्यति । यतः

'इन्द्रियाणि पराण्याहुः············ ।' (३।४७)

इत्यादिना तस्यैव परमसूक्ष्मत्वं प्रतिपादयिष्यति । किमात्मक इति प्रश्ने किमात्मकत्वमेव अस्य अधुनैव अभिधत्ते। स च एवंविधः शत्रुः परिवारभूतैः 'इन्द्रियैः' सहितः कामक्रोधादिनिष्णातशस्त्रप्रहारिभिः । तैरेव अयं सर्वप्राणिनो विशसति । तस्य दुर्जयत्वप्रतिपादनार्थं सर्वशत्रुविलक्षणमवस्थानमाह—सर्वदुःख-

हेतुत्वे सति 'सुखतन्त्रे' सुखात्मके वर्गे 'इवासीनः' उपविष्टोऽत एव 'मोहयन् तिष्ठति' देहाद्यात्मप्रत्ययलक्षणं विपर्ययज्ञानमारोपयन् स्थितिमनुभवतीति 'भवत्येष कथम्' इत्यस्य प्रश्नोत्तरमेतत् व्याख्यातम्, अथ 'कथं विवर्धते' इत्यस्य व्याख्यायते—'कामक्रोधमयः' कामक्रोधावुक्तरूपौ प्रकृतिर्यस्य, स तथाविधः । स्तम्भस्य गर्वस्य, तथा हर्षस्य विषादपरिणामस्य प्रमोदस्य समुद्भव उत्पत्तिस्थानम्; अत एव 'घोरः' दारुण एव कामक्रोधस्तम्भहर्षादिदोषात्मना विवर्धते उच्छ्रायं भजतीति उक्तं भवति । अथ 'किमात्मकः' इति प्रश्नोत्तरं व्याख्यायते—एष सर्वदेहिनां शत्रुरहंकारसंज्ञः 'अभिमानात्मा' अभिमानो—जात्याद्यवच्छेदभाजि गुणत्रयमयत्वादनित्यत्वादिदोषैकसमाश्रये शरीरादावहं ब्राह्मणोऽहं देवदत्तोऽहमभिजनवानहं वपुष्मानहं विदग्धोऽहमाढ्यः इत्येवमादि अनात्मन्यात्मप्रतिपत्तिनिबन्धनं मिथ्याज्ञानं—स आत्मा स्वभावो यस्य, तादृशः । अत एव 'पापकर्मभिर्दुस्तरः' सम्यग्ज्ञानाभावात् हेयोपादेयविवेकशून्यत्वे सति पापमघमयं घोरं संसारनिरयनिपातनिमित्तभूतं कर्म चेष्टितं येषां, तादृशैरासुरं सर्गं भजद्भिः पुरुषैर्दुरतिक्रमः । अथ 'किमाचारः' इत्यत्र उत्तरं व्याख्यायते—'अस्य' क्षेत्रज्ञस्य 'एषः' अहंकाराख्यः शत्रुः 'हर्षं' सत्यात्मसंविदुपलभ्यमानानन्दं 'निवर्त्य' अपसार्य 'शोकं' शोचनं 'ददाति' समर्पयति । अनेन हि शत्रुणा व्यामोहितः शरीरादि आत्मत्वेन प्रतिपन्नं व्याधिप्रियविप्रयोगाद्युपद्रवोपहन्यमानमनुशोचति कष्टं विनष्टोऽस्मि,—इति परिदेवते । अत एव 'अस्य एष' शत्रुः 'भयमपि करोति' इष्टविषयोपघातहेतुभ्यः सन्त्रासमुत्पादयति । किं कुर्वन्नेवमाचरति । प्रतिक्षणं 'मोहयन्' यथाप्रतिपादितविपर्ययलक्षणं वैचित्र्यमावहन्निति । अनेन अहं-

काराख्येन शत्रुणा इन्द्रियपरिवारेण सुखिवद्व्यवस्थितेन कामक्रोधस्तम्भहर्षादिदोषात्मना विवर्धमानेन हर्षापहारादिकमाचरता प्रयुक्तः सन् क्षेत्रज्ञः पापमाचरति ॥ ४१ ॥

अर्जुनप्रश्नं विनिर्णीय तस्यैव अहंकारस्य वितत्य स्वरूपं प्रतिपादयितुमाह

**स एष कलुषः क्षुद्रश्छिद्रप्रेक्षी धनञ्जय ।**
**रजःप्रवृत्तो मोहात्मा मनुष्याणामुपद्रवः ॥ ४२ ॥**

'स एष' यथाप्रतिपादितस्वरूपोऽहंकारः समस्तमर्त्यानाम् 'उपद्रवः' सर्वदोषनिधानसंसारहेतुत्वात् यतः 'कलुषः' गुणत्रयात्मकत्वात् नित्यमलिनः, तत एवच अनित्यत्वात् 'क्षुद्रः' भंगुरस्तथा 'च्छिद्रप्रेक्षी' बाधावकाशजागरूकः । शिष्टं स्पष्टार्थम् ॥४२॥

तेन अस्य क्षेत्रज्ञस्य किं कृतमित्याह

**धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।**
**यथोल्वेनावृतो गर्भस्तथानेनायमावृतः ॥ ४३ ॥**

एतेन अहंकारेण 'अयं' संसारिपुरुषाणामात्मा 'तथावृतो' निरुद्धशक्तित्वमापादितः । उपमानेन एतत् प्रकटयति । कथमावृतः । यथा आर्द्रेन्धनत्वादिदोषजन्मना कलंकेन धूमाख्येन 'वह्निः' अग्निः 'आव्रियते' निरुद्धभास्वरशक्तिः सम्पाद्यते, तथैव अयमात्मा मायाप्रभवेण अनेनैव अहंकारात्मना दोषेण निरुद्धस्वस्वरूपप्रत्यवमर्शात्मकस्वशक्तिः क्रियते । तथा 'यथा आदर्शो' दर्पणो रजोनिःश्वासादिसम्बन्धजन्मना 'मलेन आव्रियते' निरुद्धयथावस्थितभावस्फुरणलक्षणस्वशक्तिः क्रियते, तथैव अयमात्मा 'अनेन' आव्रियते निरुद्धजगत्पदार्थपरमार्थप्रथनसामर्थ्यः क्रियते। 'यथा गर्भः' जननीकोष्ठवर्ती जीवः 'उल्वेन' गर्भशय्यया आव्रि-

यते निरुद्धसर्वेन्द्रियपरिस्पन्दनशक्तिः क्रियते, तथैव अयमात्मा अनेन निरुद्धसर्वकर्तृत्वलक्षणस्वशक्तिः क्रियते इति। अनेन उपमानत्रयेण अहंकारस्य आत्मानं प्रति स्वभावसर्वज्ञत्वसर्वकर्तृत्वलक्षणस्वधर्मत्रयनिरोधकत्वं प्रतिपादितम् ॥ ४३ ॥

यद्यपि सर्वशक्तिनिरोधकोऽयमात्मनोऽहंकाराख्यो दोषस्तथापि ज्ञानस्य प्राधान्यविवक्षया इदमाह

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ४४ ॥**

'एतेन' यथाप्रतिपादितेन देहाद्यात्मप्रत्ययलक्षणेन शत्रुणा 'ज्ञानिनः' स्वात्मसंवेदनलक्षणमुख्यज्ञानवतश्चेतनस्य तादृशं मुख्यं 'ज्ञानमावृतं' निरुद्धं यतः कामो बाह्यार्थनिबन्धनोऽभिलाषो रूपं यस्य, अत एव असौ दुष्पूरो न केनचित् विषयेण प्राप्तेन सता पूरयितुं शक्यः। यतोऽस्य आह्रियमाणा विषया रागं विवर्धयन्त इन्द्रियाणां च उत्तरोत्तरविशिष्टतरविषयरसज्ञतां पुष्णन्तस्तेभ्यो विरतिमापादयन्ति। अत एव अनलः न अस्य अलंभावो विषयेभ्यो निवारणमस्तीति। एवंविधेन अनेन स्वभावसंवेदनलक्षणं मुख्यं ज्ञानमावृतं, तस्मिंश्च आवृते सर्वाः शक्तयोऽस्य आवृता इति तात्पर्यम् ॥ ४४ ॥

अथ किमधिष्ठाय अयं ज्ञानमस्य आवृणोतीत्याह

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४५ ॥**

'अस्य' अहंकारस्य प्रतिपादितस्वरूपस्थितिविवृद्धिविचेष्टितलक्षणचतुष्टयस्य 'इन्द्रियाणि' चक्षुरादिवागादीनि तथा 'मनः' संकल्पात्मकं 'बुद्धिः' अध्यवसायात्मिका 'अधिष्ठानम्'। एतेषु हि कृतस्थितिरयं यथोक्तं 'ज्ञानमावृत्य देहिनं' क्षेत्रज्ञं 'मोहयति'

स्वरूपानभिज्ञत्वकिञ्चिज्ज्ञत्वकिञ्चित्कर्तृत्वकारिणा मोहेन अज्ञानेन युनक्ति ॥ ४५ ॥

तदयमेवंविधः शत्रुः कथं तिरस्कार्यः इत्याह

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।**
**पाप्मानं प्रजहीह्येनं ज्ञानविज्ञाननाशिनम् ॥ ४६ ॥**

यत एवंविधोऽसौ, ततोऽस्य अधिष्ठानभूतानि मनोबुद्धिसहितानि बुद्धीन्द्रियकर्मेन्द्रियाणि सर्वाण्येव प्रथमं 'नियम्य' यथोक्तसत्यात्मस्वरूपप्रतिष्ठात्मप्रत्ययतया रागद्वेषादिदोषोन्मेषनिषेधेन निगृह्य 'एनं पाप्मानम्' अज्ञानमयं महाकिल्बिषवपुषम्, अत एव ज्ञानस्य शास्त्रादिद्वारेण परमार्थबोधस्य तथा विज्ञानस्य स्वात्मसाक्षात्कारलक्षणस्य विशिष्टस्य ज्ञानस्य नाशिनं तिरस्कारिणं परमं वैरिणं प्रजहीहि तिरस्कुरु ॥ ४६ ॥

एष च परमसूक्ष्मत्वात् परेण उद्योगेन अप्रमादादिना च पराजय्यः शत्रुरिति अस्य तां सूक्ष्मतां प्रतिपादयितुमाह

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४७ ॥**

विषयाः शब्दादयस्तावदिन्द्रियद्वारेण सर्वस्य कस्यचिदुपलभ्यतामुपगच्छन्ति, अतस्तदपेक्षया 'इन्द्रियाणि पराणि' तेभ्यः सूक्ष्माणि 'आहुः' कथयन्ति तत्त्वविदः। नहि इन्द्रियाणि शब्दादिवदुपलभ्यानि साक्षात् कस्यचित्। तेभ्यस्तथाविधेभ्यः सूक्ष्मेभ्यः 'इन्द्रिभ्यो मनः' तत्प्रवृत्तिनिवृत्तिकारणं सूक्ष्मतरम्। यथा इन्द्रियाणि कथंचित् गम्यन्ते, न तथा अतिचंचलं मनः। तथाविधात् च 'मनसो बुद्धिः परा' सूक्ष्मेत्यर्थः। यथाहि मनः कथंचित् गम्यते, न तथा निर्विकल्पकप्रत्यक्षक्षणवर्त्यध्यवसायात्मिका बुद्धिः। तस्याश्च एवंविधाया 'बुद्धेर्यः' 'परतः' परम-

सूक्ष्मत्वेन स्थितः, 'सः' पूर्वोक्तोऽहंकाराख्यः शत्रुः। यथाहि बुद्धिः कथंचिदभियुक्तैर्गम्यते, न तथा अयमविद्याप्रथमांकुरः केनचिदनुन्मिषितपरमेश्वरानुग्रहप्रभवज्ञानचक्षुषा लक्ष्यीकर्तुमपि शक्यते ॥

तस्मात्

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४८ ॥**

'एवं' यथोक्तप्रकारेण 'बुद्धेः परम्' एनं शत्रुं 'बुद्ध्वा' सुदुर्लक्ष्यत्वात् परमदुर्जयं मत्वा अत एव 'आत्मनैव आत्मानं संस्तभ्य' धैर्यं लम्बयित्वा 'दुरासदं' दुःखेन आसादयितुं परिभवितुं शक्यमेनं 'जहि' घातय । कीदृशम् । 'कामरूपं' कामो विषयेषु अभिलाषो रूपं यस्य, स तथाविधः । पूर्वं हि कामक्रोधाद्यात्मना अस्य अवस्थितिरुक्ता । तेन यद्यपि अयं सुसूक्ष्मत्वात् दुर्जयः, तथापि अस्य पूर्वोक्तेन प्रकारेण कामात्मिकामवस्थितिं निघ्नन् तद्विहनने समर्थो भविष्यस्येवेत्यर्थः । एवं भगवता क्षत्रियोचितेनैव प्रकारेण अर्जुनः प्रस्तुतोपदेशफलप्राप्तिप्रतिद्वन्द्विनोऽहंकारस्य निवर्हणे समुत्साहितः । त्वया हि महेन्द्रेण अपि दुर्जया बहवः शत्रवः सहायनिरपेक्षेण बहुशो निपातिताः, तदेनमपि शत्रुमात्मैकसहायो निपातयितुमर्हसीति ओम् ॥४८॥

विज्ञानतत्त्वतपनीयगुणप्रकर्ष-
प्रख्यापनैकनिकषो निजकर्मयोगः ।
अस्मिन्नृणां प्रकटितः परमार्थसिद्ध्यै
सोऽध्याय एष विवृतो विधिवत्तृतीयः ॥

**इति श्रीमद्राजानकरामकण्ठविरचिते सर्वतोभद्रनाम्नि वाक्यार्थान्वयमात्रे गीताविवरणे तृतीयोऽध्यायः ॥ ३ ॥**

---

# अथ चतुर्थोऽध्यायः।

एवमस्य समस्ताध्यात्मशास्त्रसर्वस्वभूतार्थगर्भस्य प्रकरणस्य ज्ञानकर्मसमुच्चयलक्षणमभिधेयं परमात्मसमापत्तिलक्षणं च प्रयोजनं प्रतिपाद्य इदानीं सम्बन्धविषययोः प्रतिपादनद्वारेण अर्जुनस्य आत्मनि पुरुषत्वमात्रप्रतिपत्तिव्यामोहनिवृत्तये परमकारणतामाविष्कुर्वन् भगवानुवाच

एवं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥
एवं परम्पराख्यातमिमं राजर्षयो विदुः।
स कालेनैव महता योगो नष्टः परन्तप ॥ २ ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

'एवम्' अनेन प्रकारेणैव यथा तुभ्यं प्रोक्तो यो योगस्तथैव 'विवस्वते' महायोगीश्वराय सवित्रे 'योगम्' एनम् 'अहं' परमेश्वर एव कस्मिंश्चित् काले निजयोगैश्वर्यपरिकल्पितनिरतिशयप्रभावमयविग्रहः 'प्रोक्तवान्' उपदिष्टवान्। कीदृशं योगम्। 'अव्ययं' परमकारणवत् न कदाचित् व्येति क्षीयते यः। स हि जगत्सर्गादिलक्षणं कर्म अनुतिष्ठन्नपि परमेश्वरः प्राक्प्रतिपादिताद्वयचिन्मात्रैकलक्षणस्वभावविमर्शैकनिष्ठतया ज्ञानकर्मसमुच्चयानुष्ठानात्मकस्य अस्य योगस्य प्रथमोऽनुष्ठाता,—इति तद्वत् योगस्य अस्य अव्ययत्वमुक्तम्। अनेन परमकारणादेव प्रवृत्तेरस्य योगस्य प्राधान्येन सम्बन्धमुक्त्वा क्रमेण अनुष्ठानसम्प्रदायतया तमेव सम्बन्धं विवृणोति 'विवस्वान्मनवे प्राह' इति—स विवस्वान् पुत्राय मनुसंज्ञाय आदिराजाय प्राह प्रोवाच। प्राहेति लिटश्छान्दस आहादेशः। सोऽपि मनुरिक्ष्वाकुसंज्ञाय पुत्रायैव 'अब्रवीत्'। एवं

परमेश्वरादेव प्रभृति परम्परया योग्यपुत्रादिशिष्यरूपप्रबन्धप्रवृत्त्या ख्यातं लोके प्रथितं सन्तमन्ये जनकप्रभृतयो 'राजर्षयो' राज्यलक्षणं कर्म कुर्वाणा अपि यथोक्तज्ञाननिष्ठत्वादृषयो मुनयः 'इमं' यथोक्तं 'विदुः' विदांचक्रुरिति अस्मिन्नर्थे च्छान्दसः प्रयोगः। महता कालेन युगसहस्रादिसंख्येन लोकस्य क्रमापचीयमानप्रज्ञादिसर्वगुणत्वात् योग्यप्रतिपन्नभावात् 'नष्टः' अन्तर्धानमागतः परमकारणे एव व्यवस्थितः इत्यर्थः। 'स एव' अभ्रष्टस्वरूपः 'अद्य' अस्मिन् काले 'मया' परमेश्वरेणैव जगदुपकाराय यादवकुलावतीर्णेन 'ते' तुभ्यं 'पुरातनो' नित्यो 'योगः प्रोक्तः' यतो मम 'भक्तोऽसि' शुश्रूषुस्त्वं तथा 'सखा' सुहृत्। अतो भक्तिसौहार्दलक्षणमुख्यशिष्यगुणसम्पन्नाय मया तुभ्यमुपदिष्टम्। यत 'उत्तमं' सर्वरहस्यानां प्रकृष्टमेतद्रहस्यम् ॥ ३ ॥

एवमनेन अस्य शास्त्रस्य सम्बन्धविषयावपि प्रतिपादितौ । निरुत्तरविज्ञानमयदिव्यचक्षुर्दानेन पुरस्तात्प्रत्यक्षीकरिष्यमाणपारमार्थिकस्वरूपस्य अर्जुनस्य स्वात्मनि यदुकुलोद्भूतमनुष्यमात्रप्रतिपत्तिनिराकरणद्वारेण भगवता पारमैश्वर्यमात्मनः कथयितुं च प्रस्तुतम्। अत एव संजातसंशयोऽर्जुन उवाच

अपरं भवतो जन्म परं जन्म विवस्वतः।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

'भवतः' तव अस्मिन् कलिद्वापरसन्धौ सम्भूतत्वात् 'अपरम्' अपकृष्टं 'जन्म' उत्पत्तिः 'विवस्वतः' आसर्गात् व्यवस्थितस्य 'परं' प्रकृष्टमित्थं 'कथमेतत्' बुध्येय त्वमैदंयुगीनजन्मा सुचिरातीतकालजन्मनेऽपि अस्मै सूर्याय एनं योगं प्रोक्तवानिति ॥ ४ ॥

अत्र भगवानुत्तरमुवाच

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥**

सत्यं मम 'तव च' अपरिसंख्येयानि 'जन्मानि' तत्तच्छरीरपरिग्रहेण 'व्यतीतानि' अतिक्रान्तानि । 'तानि' पुनस्तव च आत्मनश्च समस्तान्येव 'अहं वेद' जानामि 'त्वं' तु मम आत्मनश्च तानि न जानासि ॥ ५ ॥

अतोऽहम्

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥**

'अजोऽव्ययात्मा' नित्यत्वात् जन्मविनाशरहितोऽपि तथा सर्वभूतानां स्थावरजंगमानां स्थितिविनाशादिषु यथेष्टकर्तृत्वात् 'ईश्वरः' प्रभुरपि 'सन् स्वां प्रकृतिम्' आत्मीयं परं स्वभावमद्वयचिन्मात्रलक्षणम् 'अधिष्ठाय' तत्रैव स्थित्वा तस्मात् स्वभावादप्रच्युतः स्वमायया स्वया स्वात्माधीनया मायया द्वैतावभासनमात्रप्राणेन शक्तिविशेषेण हेतुभूतेन 'सम्भवामि' जन्मादिसत्तां परिगृह्णामि । अतो नित्यत्वादीश्वरत्वाच्च स्वेच्छापरिगृहीतत्वाच्च स्वप्रादुर्भावान् त्वादृशां च सर्वदेहिनां भूतान् भाविनो वर्तमानांश्च जन्मादिविकारान् सततमविप्लुतसर्वज्ञत्वशक्तिरहमेव जानामि ॥ ६ ॥

इत्थं स्वजन्मपरिग्रहस्य प्रयोजनमाह

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मांशं सृजाम्यहम् ॥ ७ ॥**
**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥**

'यदा यदा' यत्र यत्र काले 'धर्मस्य' वर्णाश्रमनियमविभक्तस्य

सदाचारस्य 'ग्लानिः' उपक्षयो 'भवति' ततश्च तद्विपरीतस्य 'अधर्मस्य' वर्णादिव्यवस्थाव्युत्थानहेतोर्दुष्टाचारस्य 'अभ्युत्थानम्' उद्भवो भवति, 'तदा' तत्र तत्र काले 'अहं' परमकारणभूतस्य आत्मनः कंचित् कंचिदंशं शक्तिलेशं स्वेच्छापरिकल्पितजगत्क्रीडापरिरक्षणाय 'सृजामि' उत्पादयामि । अतो देवासुरसर्गविभेदेन स्वयमवभासिते जगति दैवसर्गभाजां शास्त्रोपदेशविषयभूतानां 'साधूनां' सत्त्वगुणोत्कर्षनिर्मलप्रज्ञानां 'परित्राणाय' सत्क्रियाविघातहेतुभ्यो विघ्नेभ्यो रक्षणाय तथा 'दुष्कृतां' शास्त्रीयनियमातिक्रमात् जगत्स्थितिविप्लावकदुष्टकर्मकारिणामसतां 'विनाशाय' प्रध्वंसाय, अत एव धर्मस्य जातिदेशकालादिप्रविभक्तविशेषस्य सदाचारस्य संस्थापनार्थाय सम्यक्प्ररोपणाय प्रतियुगं तेन तेन आकारेण समुद्भवामि उत्पत्तिमत्तां दर्शयामि, नतु वस्तुतोऽहं जन्मविनाशादिभावविकारकलंकस्पर्शमनुभवामि ॥

अत एव

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥**

'एवम्' उक्तेन प्रकारेण 'जन्म कर्म च' यः प्रबुद्धो 'मे तत्त्वतः' परमार्थतो जानाति यत्र शरीरित्वेऽपि सति यथोक्तात् परतः स्वभावादप्रच्युतिः, यत्र तत्तत्क्रियाफलासंस्पर्शश्च अत एव 'दिव्यम्' अलोकसामान्यं; स तादृशो यथोक्तविज्ञाननिष्णातमतिः 'देहं त्यक्त्वा' देहेऽहंप्रतिपत्तिमुत्सृज्य 'जन्म नैति' नित्यस्वभावाभिव्यक्ते जन्मविनाशवत्त्वव्यामोहं जहाति, अतो 'मामेति' मत्स्वभावमापद्यते ॥ ९ ॥

यत एतेन

**वीतरागभयक्रोधा मन्मया मद्व्यपाश्रयाः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

यथोक्तज्ञानलक्षणेन निरतिशयशुद्धिहेतुना व्रतविशेषेण 'पूताः' पवित्राः सन्तो 'बहवो' योगिनो 'मद्भावं' मामिकां सत्ताम् 'आगताः' मद्भेदं प्राप्ता इत्यर्थः। यतो विज्ञानपरिशीलनात् 'वीतरागभयक्रोधाः' रागो विषयेषु अभिलाषः, तथा तद्विघातहेतुभ्योऽशक्यप्रतीकारेभ्यो भयं त्रासः, तथा शक्यप्रतीकारेषु क्रोधः इति। एते संसारदुर्गदुरुच्छेदनिगडभूता दोषा वीता विगतास्त्रुटिता येषां ते, अत एव 'मन्मयाः' मदेकस्वभावाः 'मद्व्यपाश्रयाः' अहमेव व्यपाश्रयो निरपायत्वात् विशिष्टोऽपाश्रयः स्थितिहेतुर्येषां, ते तथाविधाः ॥ १० ॥

ननु प्रबन्धतो भगवता एकमेव तत्त्वं यथाप्रतिपादितविशेषणविशिष्टं परमार्थसत्त्वेन प्रतिपादितं, तदेवच इदानीमहन्तया व्यपदिश्यते। तत् कथं केचिदेव मद्भावमागता इति उच्यते इति अर्जुनस्य सम्यगगृहीतपारमेश्वरक्रीडाविधेर्विकल्पमाशंक्य आह

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

सत्यमेव अहं समस्तानामन्योन्यभिन्ननानाविधस्वरूपाणां फेनबुद्बुदकल्लोलकलापानामुदधिरिव उदयास्तमयनिलय एक एव। तादृशेन च मया निजमायाशक्त्या तत्तन्नियतसामर्थ्यावच्छिन्नदेहादिप्रतिष्ठिताहंकारत्वेन नानारूपा ये क्षेत्रज्ञा अवभासिताः, तेषु मध्ये 'यथा' येन प्रकारेण यादृशेन संकल्पेन 'ये' केचन 'मां प्रपद्यन्ते' मां प्रार्थयन्ते तत्कालं मत्समापन्ना भवन्ति, 'तानहं तथैव' तत्तत्संकल्पोचितफलदानरूपेण प्रकारेण 'भजामि' संश्रयामि। 'यतः' सर्व एव 'मनुष्याः' तत्तदर्थक्रियासम्पादनार्थितावसरे 'मम' सर्वेभ्यः सर्वमनोरथप्रसाधनैकचिन्तामणेः 'वर्त्म' प्राप्तिहेतुं निर्विकल्पोत्साहलक्षणं पंथानम् 'अनुवर्तन्ते' अनुकुर्वन्ति। यथा अहं

परेण उत्साहेन एक एव सर्वं करोमि, जानामि च; तथा ते प्रतिनियतं कार्यं ज्ञेयं च कुर्वन्तो जानन्तश्च मत्समापत्तिसंवेदनशक्तिशून्यत्वादहं करोम्यहं जानामीति किञ्चित्कर्तरि, किंचिज्ज्ञे च तादृशे स्वात्मनि कर्तृत्वादिकं मन्यन्ते। किमनेन उक्तं भवति। यथा अर्कालोकेन अनुगृहीतदृष्टयस्तिर्यञ्चो बालादयश्च तत्तदर्थक्रियानिष्ठास्ते ते स्वं स्वं विषयं पश्यन्ति, नच तत्र अर्कालोकं कारणत्वेन मन्यन्ते मूढत्वात् यतस्तादृशेन व्यवहारेण व्युत्पन्नाः; तथैव सर्वे क्षेत्रज्ञास्तत्तदर्थक्रियार्थिनो मयैव तत्क्षणप्रार्थितेन स्वप्रकाशानुगृहीतसंविदो दृष्टप्रयोजनमदृष्टप्रयोजनं वा सर्वं कुर्वन्ति जानन्ति च मायाविमोहितत्वादात्मानं तत्र कारणत्वेन मन्यन्ते, नच मां तत्र कारणत्वेन मन्यन्ते ॥ ११ ॥

अत एव किं वाञ्छन्तस्ते मम वर्त्म अनुवर्तन्ते इत्याह

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

दृष्टप्रयोजनेन 'कर्मणां' तत्तदभिमतप्राप्तिलक्षणां 'सिद्धिं' कर्मफलं प्रार्थयमानाः, तथा अदृष्टप्रयोजनेन यज्ञादिना तत्तल्लोकान्तरभोग्यसुखप्राप्तिलक्षणफलाभिलाषिणः सन्तो 'देवताः' इन्द्रादिरूपा 'यजन्तः' हविर्दानादिना पूजयन्तः। किमत्र तात्पर्यम्। आ ब्रह्मणः कीटपर्यन्तं यो यः कश्चित् येन येन अभिसन्धिना यद्यत् किञ्चन चिकीर्षति जिज्ञासते वा, तत्तत्फलसम्पत्तेस्तत्कालमवश्यम्भाविनी असंचेत्यमाना मत्समापत्तिरेव एकं कारणं यस्मादस्मिन् 'मानुषे लोके' सर्वस्य प्रत्यक्षभूते 'कर्मजा' तत्तत्संकल्पमूलव्यापारसमुत्था 'सिद्धिः' फलप्राप्तिः 'क्षिप्रं' तत्कालमेव मत्समापत्तिबलादेव सम्पद्यते परमार्थतः कर्तुर्ज्ञातुर्वा अन्यस्य असम्भवात् ॥ १२ ॥

ननु त्वमेव चेदेकः कर्ता, तत् क्षेत्रज्ञभावेन कृतैः कर्मभिस्त्वमेव तत्फलेन सम्बध्यसे, ततश्च क्षेत्रज्ञवत् सुखादिसम्बन्धस्तव अपि प्रसक्त इति अर्जुनशंकां परिहर्तुकाम आह

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

सत्यं गुणविभागेन अयं सात्त्विकोऽयं राजसोऽयं तामस इत्येवंरूपेण सर्गभेदमूलेन तथा कर्मविभागेन ब्राह्मणेन अध्येतव्यं यष्टव्यं दातव्यमित्येवमादिरूपेण 'मया' यथोक्तस्वरूपेण एकेन कर्त्रा 'चातुर्वर्ण्यं सृष्टं' चत्वारो वर्णा ब्राह्मणादयो निर्मिताः । 'तस्य' एवंविधस्य चातुर्वर्ण्यस्य स्वगुणकर्मविभागसमुचितकर्मानुरूपतत्तत्फलभाजः 'कर्तारं' निर्मातारमपि 'मामकर्तारं' तद्वत् तादृक्कर्मफलसम्बन्धाभावात् कर्तृधर्मरहितं जानीहि । कुत इति हेतुगर्भं विशेषणमाह कीदृशं सन्तमकर्तारं विद्धि । 'अव्ययं' नित्यमेकस्मात् स्वरूपात् यतोऽहं न व्येमि न व्यपगच्छामि अद्वयचिन्मात्रस्वभावतामेव न जहामि । एवंच अव्ययं सन्तं मामकर्तारं 'विद्धि' । क्षेत्रज्ञा हि मन्मायोद्भावितानित्यदेहाद्यहंकारमयास्त्रिगुणाः संकल्पकारिणः सुखादिभिः फलैर्युज्यन्ते, नतु अहं गुणातीतस्वभावस्तैर्जातु युज्ये ॥ १३ ॥

ततश्च

**न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥**

'कर्माणि' पुण्यापुण्यलक्षणाः क्रियाः 'न मां लिम्पन्ति' सुखदुःखादिलक्षणस्वफलरूपेण कलंकेन न मलिनयन्ति यतो नित्यनिजानन्दतृप्तस्य मम कर्मणां 'फलेषु' तत्तदुत्तरोत्तरप्रकृष्टस्वरूपेषु अपि 'न कामः' न अभिलाषो यथाप्रतिपादितस्वरूपैकमयत्वेन

सर्वमिदमनुपश्यतः । यश्च यथोक्तेन ज्ञानामृतनिर्झरेण निर्धौत-सकलविकल्पकलंकत्वात् निर्मलप्रज्ञो योगी 'इति' एवं यथोक्तस्वरूपं 'मामभिजानाति' प्रतिपद्यते 'स' मद्वत् क्रियमाणैः 'कर्मभिर्न बध्यते' न रागादिक्लेशपाशनियन्त्रितः क्रियते ॥ १४ ॥

किंच

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

'एवं' यथाप्रतिपादिते कर्मत्वेऽपि अकर्मत्वपर्यवसायित्वात् तत्त्वं 'ज्ञात्वा' अधिगम्य 'पूर्वैरपि' मन्वादिभिः 'मुमुक्षुभिः' 'कर्म' शास्त्रचोदितं 'कृतम्' अनुष्ठितम् । 'तस्मात् त्वमपि' यथोक्तज्ञाननिष्ठत्वेन 'कर्मैव' स्वजातिविहितं युद्धादिव्यापारमेव अनुतिष्ठ । 'पूर्वैः' अतीतविप्रकृष्टकालजन्मभिस्तैस्तैः 'पूर्वतरम्' आदितरमनुष्ठितम् ॥ १५ ॥

किन्तु

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

'किं कर्म' अनुष्ठेयं 'किंच अकर्म' परिहार्यमित्यत्र प्रविभागज्ञाने 'कवयोऽपि' द्रष्टारोऽपि मुनयो 'मोहिताः' तेऽपि सम्यगेतयोर्न विभागं जानते । तस्मादकर्मपरिहारेण 'तत्' अनुष्ठेयं 'कर्म' तुभ्यं प्रकर्षेण इदानीं कथयिष्यामि, यत् विदित्वा संसारबन्धलक्षणात् 'अशुभात्' अकल्याणात् 'मोक्ष्यसे' मुक्तो भविष्यसि ॥ १६ ॥

यतः

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

सामान्येन अनुष्ठेयतया उपदिष्टस्य 'कर्मणो बोद्धव्यं' विशेषा-

त्मकं वस्तु विद्यते, अकर्मणश्च कर्मपरिहारस्य अपि 'बोद्धव्यं' विद्यते 'विकर्मणश्च' विरुद्धस्य अपि कर्मणस्तथैव 'बोद्धव्यं' विद्यते यतोऽस्य त्रिप्रकारत्वे व्यवस्थितस्य 'कर्मणो गहना' दुरवधारतत्त्वा 'गतिः' व्याप्तिः ॥ १७ ॥

सा च यथा अवधार्यते, तथा प्रतिपादयितुमाह

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥**

यथोक्तज्ञाननिष्ठतया अनुष्ठीयमाने शास्त्रचोदितस्वव्यापारे 'यः' तत्त्ववित् 'अकर्म' कर्माभावं संसारबन्धलक्षणकर्मकार्याकरणात् पुत्रेऽपि अपुत्रवत् पश्यति, तथा 'अकर्मणि' यथाविहितकर्मप्रतिषेधे पूर्वोक्तोपपत्त्या रागादिदोषानुषङ्गस्य दुरुच्छेदत्वात् बन्धलक्षणकर्मकार्यकरणात् कर्मत्वं पश्यति ज्ञानदृष्ट्या निश्चिनोति 'स मनुष्येषु' मध्ये प्रशस्यया बुद्ध्या युक्तः । 'स' एवच सम्पूर्णपुरुषार्थसम्पादकत्वात् कृत्स्नस्य अविकलस्य कर्मणः कर्ता अनुष्ठाता उच्यते । भोगमात्रफलं हि कर्म कृत्स्नमविकलांगमपि अनुष्ठितमपवर्गलक्षणफलं प्रति अहेतुत्वात् न कृत्स्नं भवति, अतस्तदनुष्ठाता न कृत्स्नकर्मकृदित्यर्थः । एवमनेन श्लोकेन कर्मणश्च अकर्मणश्च बोद्धव्यमस्ति,—इत्येतत् व्याख्यातम् ॥ १८ ॥

अथ कर्मैव अकर्म भवतीत्येतत् पूर्वमुक्तमपि दृढप्रतिपत्तये स्मारयन् विवृणोति

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**

काम्यन्ते इति कामाः कर्मफलत्वेन प्रार्थ्यमानास्ते ते भोगास्तेषु संकल्प इच्छा तेन रहिताः 'सर्वे' समस्ता दृष्टानुश्रविकविषयनिष्ठाः 'समारम्भाः' कर्मप्रवृत्तयो 'यस्य तं' यथोदितं यथोक्तात्म-

तत्त्वज्ञानरूपेण अनलेन दग्धकर्माणं दग्धानि संसारांकुरप्रसवसामर्थ्यहरणात् भस्मीकृतानि बीजानि येन तं तादृशं 'पण्डितं' विद्वांसम् 'आहुः' परमार्थविदः, यतः सर्वात्मना कृतकृत्यत्वपर्यवसायिनी विद्वत्ता, सा च यथोक्तज्ञानवत एव संभवति ॥१९॥

एवं कर्मण्येव अकर्म विद्वान् पश्यतीति व्याख्यातम्। तदेव विशिनष्टि यतः

त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ २० ॥

'सः' एवंविधो योगी परमानन्दमयपरमस्वभावसुव्यवस्थितबुद्धिः 'नित्यतृप्तः' सकलबाह्यविषयरसपरिक्षीणाकांक्षोऽत एव 'निराश्रयः' स्वरूपव्यतिरिक्तात् बाह्यादालम्बनात् निष्क्रान्तः 'कर्मफलासंगं' कर्मणां यज्ञदानतपःप्रभृतीनां फलं स्वर्गादिभोगलक्षणमासंगमासक्तिं तदेव प्रकृष्टं फलमिति तत्र लीनचित्तत्वं 'त्यक्त्वा' सहजे 'कर्मणि अभिप्रवृत्तः' अनुष्ठाने व्यवसितोऽपि 'नैव किञ्चित् करोति' तथाविधस्य योगिनः सर्वस्य कर्मणो बन्धलक्षणस्वकार्यसम्पादनासामर्थ्यात् ॥ २० ॥

यथोक्तस्य योगिनः प्रशंसार्थमेव आह

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥
यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबद्ध्यते ॥ २२ ॥

प्रागेव व्याख्यातमेतत् । यद्यपि कर्माकर्मणोरेव बोद्धव्यं वस्तु व्याख्यातम्, तथापि विकर्मणोऽपि बोद्धव्यमित्येतद्व्याख्यानेनैव व्याख्यातम् । यतः कर्मपरिहारस्य ज्ञानशून्यस्य सतो यत्र बन्धकत्वमुक्तम्, तत्र वर्णाश्रमसमयविरुद्धस्य कर्मणो बन्ध-

कत्वे का भ्रान्तिरिति तस्य अपि सर्वात्मना परिहार्यत्वलक्षणं बोद्धव्यं वस्तु व्याख्यातमेव ॥ २२ ॥

इदानीं कर्म सर्वथा कर्तव्यमिति सामान्येन कर्ममात्रमनुष्ठेयत्वेन उपदिष्टं प्राक्, तस्य

'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।' ( ३।९ )

इत्यनेन सूचितां यज्ञलक्षणविशिष्टरूपतां मोक्षैकफलत्वं च योगिस्वरूपप्रतिपादनद्वारेणैव प्रस्तावयन्नाह

**गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायारभतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

यथोक्ते ज्ञानेऽवस्थितचेतसः प्रतिलब्धप्रतिष्ठप्रज्ञस्य अत एव निवृत्तविषयाभ्यासंगस्य ततश्च 'मुक्तस्य' आत्मानात्मविवेकसमाधिसिद्धिलाभात् देहाद्यात्मप्रत्ययरूपात् महतो बन्धनात् निष्क्रान्तस्य सतो वक्ष्यमाणप्रभेदाय 'यज्ञाय' यजनाय तदर्थं 'कर्म' शास्त्रविहितां क्रियामारभमाणस्य कुर्वत एव 'समग्रं' कायिकवाचिकमानसिकभेदेन संग्रहात् त्रिप्रकारमवान्तरभेदेन तु अपरिसंख्येयं 'विलीयते' विगलति ब्रह्मप्राप्तिहेतुत्वात् विनश्वरफलारम्भकत्वलक्षणं स्वरूपमस्य नश्यतीत्यर्थः ॥ २३ ॥

कथं क्रियमाणमेव कर्म प्रविलीयते,—इति विवेकसमाधिसिद्धिनान्तरीयिकां ब्रह्माद्वैतसिद्धिं कर्मप्रविलयकारणभूतां प्रतिपादयितुमाह

**ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

'तेन' गतसंगादिविशेषणविशिष्टेन योगिना 'ब्रह्मैव गन्तव्यम्' अतः समग्रं तस्य कर्म प्रविलीयते इति सम्बन्धः । तदेतत् व्याख्यायते । तेन योगिना बृहत्त्वादिधर्मयोगात् ब्रह्मशब्दवाच्यं

परमार्थतत्त्वमेव योग्यतावशात् निर्विकल्पतया प्रकाशमानं गन्तव्यं सम्प्रदानत्वेन उपस्थातव्यम् । नहि तथाविधस्य योगिनस्तत्तत्फलाभिसंधिना तत्तत् देवतान्तरं सम्प्रदानतया गन्तव्यत्वमर्हति। कीदृशेन तेन ब्रह्मैव गन्तव्यम् । 'ब्रह्मकर्मसमाधिना' समुन्मिषिते विज्ञानात्मके दिव्ये चक्षुषि यथोक्तब्रह्माभेदेन प्रथमानं कर्म ब्रह्मकर्म, तदेव समाधिर्निरुत्तरो योगो यस्य तेन तादृशेन। कीदृशं ब्रह्म गन्तव्यम् । 'ब्रह्मणा' ब्रह्माभिन्नस्वरूपतया स्वात्मानं मन्यमानेन यजमानेन 'हुतं' तर्पितं ब्रह्मरूपतया प्रतिपन्नेऽग्नौ जातवेदसि। अन्यच्च कीदृशं ब्रह्म। 'ब्रह्मार्पणं' ब्रह्मरूपतयैव प्रतीयमानमर्पणमाज्यपयःसोमादियागद्रव्योपकरणसाधनं हस्तादि यत्र, तत् तादृशम्; तथा 'ब्रह्महविः' ब्रह्मत्वेनैव प्रतिपद्यमानं हविर्हूयमानमाज्यादि द्रव्यं यत्र, तत् तथाविधम्। इदमनेन प्रतिपादितम्—यद्यत् वस्तु यथा यथा प्रकाशते, तत्तत् प्रकाशमानत्वादेव प्रकाशादभिन्नस्वरूपमतः परमात्मव्यतिरिक्तं परमार्थतः पदार्थजातं न किञ्चित् सम्भवतीति तत्त्वविद्भिः स्वसंवेदनसंवेद्यत्वात् निष्प्रकम्पोपपत्त्युपलब्धिप्रदर्शनक्रमेण व्यवस्थापितोऽपि अयमात्मैश्वर्याद्वयनयो न यस्य कस्यचित् प्रतिपत्तिगोचरतामुपगच्छति परमेश्वरेणैव विहितनियमत्वात्। तदयमैश्वरो नियमः स्वेच्छावभासितान्योन्यभिन्नस्वरूपेषु अपि अपरिसंख्येयेषु प्रमातृषु कंचिदेव स्वेच्छावशादसावनुगृह्णाति। तस्य च अनुगृहीतमात्रस्य तत्त्वावलोकव्यवधायकसन्देहमहागिरीन्द्रनिर्दलनदम्भोलिधारा भक्तिरुन्मिषति। तत्प्रभावाच्च यथोक्तं तत्त्वज्ञानं शास्त्रात्मकमाप्तोपदेशादिना उपनमति। तस्मिंश्च विशुद्धश्रद्धासिद्धसिन्धुनिर्धौतनिखिलविकल्पकलंकया परमया प्रज्ञया निरन्तरमनुशीलयमाने देहदेहिविवेकज्ञानलक्षणमद्वैतपुरद्वारमपावृतं भवति। तत्र लब्ध-

प्रवेशोऽस्मिन् ब्रह्मार्पणविधानेऽधिकृतो योगी भवति,—इत्यत उक्तं

'गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायारभतः कर्म समग्रं प्रविलीयते ॥' (४।२३)

तेन च ब्रह्मैव गन्तव्यमिति । यज्ञाख्यस्य कर्मणः प्राधान्यात् दृष्टादृष्टविषयसकलक्रियोपलक्षणार्थत्वेन ग्रहणमिह वेदितव्यं यतः

'पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्............।' (५।८)

इत्यादिना सर्वासु क्रियासु एतां ब्रह्माद्वैतभावनामभिधास्यत्येव ॥

इदानीं वर्णाश्रमविभक्ताधिकार्यवस्थादिविभेदात् येषु येषु यज्ञप्रभेदेषु एषा भावना योगिना विधातव्या अनुष्ठातृमुखेन, तां प्रतिपादयंस्तेषां तावत् बाह्याभ्यन्तरसाधनप्राधान्येन प्रकारद्वयं तस्यैव ज्ञानयज्ञकारणभूतप्रकारद्वयसहितं श्लोकत्रयेण आह

दैवमेवापरे यज्ञं योगिनः समुपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

'अपरे' केचित् 'योगिनः' सम्प्रति अनुत्पन्नयथोक्ततत्त्वज्ञानत्वात् क्रियामात्रसमाहिता 'दैवमेव यज्ञं समुपासते' देवानामग्नीषोमप्रजापतीन्द्रादित्यादीनां प्राधान्येन इज्यमानत्वात् देवसम्बन्धिनं यागमनुष्ठानेन भजन्ते, न अन्यं यत्र ऋत्विगाज्यपयःसोमादि चेतनाचेतनं बाह्यं द्रव्यमुपकरणम् । 'अपरे' तेभ्योऽपि अन्ये तत्त्वविदस्तेनैव 'यज्ञेन' तत्तदुपकरणभावावस्थितात्ममयेन 'यज्ञम्' आत्मानमेव 'उपजुह्वति' प्रीणन्ति । क । 'ब्रह्माग्नौ' ब्रह्म तत्त्वज्ञानं, स एव परप्रकाशात्मकत्वात् सकलशुभाशुभकर्मफलदाहहेतुत्वात् च

अग्निस्तस्मिन्। एतदुक्तं भवति—ब्रह्मार्पणविधानविदो दैवमेव यज्ञं ज्ञानयज्ञत्वमापादयन्ति ॥ अथ 'अन्ये' केचन योगिनश्चित्तवृत्तिनिरोधनलक्षणसमाधिनिष्ठा अबहिःसाधनसाध्यं यज्ञमनुतिष्ठन्तः 'श्रोत्रादीनि' अक्षाणि तत्तद्ध्येयार्थसमाधिरूपेषु संयमेषु एव अग्निषु 'जुह्वति' विषयेभ्यः प्रत्याहृत्य तेषु तेषु समाधिषु आलीनानीन्द्रियाणि कुर्वन्तो यज्ञसम्पत्तिमभिमन्यन्ते इत्यर्थः । 'अन्ये' पुनः 'शब्दादीन् विषयान्' योगिनः परिहारेण श्रोत्रादिषु इन्द्रियेषु जुह्वति निषिद्धबहिष्प्रसरासु इन्द्रियवृत्तिष्वेव लब्धसंयमे चेतसि शब्दादीनामग्रहणमेव इन्द्रियेषु अग्निकल्पेषु हवनं मन्यमानास्तथाविधं यज्ञमनुतिष्ठन्तीत्यर्थः ॥ 'अपरे' केचन एवंविधस्य योगयज्ञस्य ज्ञानयज्ञत्वसम्पत्तये 'सर्वाणि' अशेषाणि बाह्यानामान्तराणां च इन्द्रियाणां कर्माणि प्राणंस्यच सामान्यरूपस्य एकस्य प्राणापाणसमानोदानव्यानादिभेदप्रवृत्तानि समस्तानि कर्माणि 'आत्मसंयमयोगाग्नौ जुह्वति' आत्मनि प्रतिपादितलक्षणे परस्मिन् कारणे यः संयमः सम्यक् चित्तस्य निबन्धनं, तदात्मको यो योगः समाधिः, स एव अग्निस्तत्र तानि निलीनानि कुर्वते । कीदृशे । 'ज्ञानदीपिते' आत्माद्वयलक्षणेन ज्ञानेन बोधेन दीपिते द्योतिते। किमुक्तं भवति। तेषु तेषु नानाविधेषु योगेषु मनःप्राणयोर्व्यापारान् हविर्वदात्मनिष्ठे समाध्यग्नौ निक्षिपन्तस्तादृशस्य योगज्ञानस्य ज्ञानयज्ञत्वमापादयन्तीत्यर्थः ॥ २७ ॥

एवं यज्ञानां व्यापारभेदेन चतुर्विधत्वं प्रतिपाद्य इदानीमाश्रमभेदप्रतिपादनद्वारेण यज्ञभेदान् प्रतिपादयितुं श्लोकद्वयं सार्धमाह

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।

द्रव्येण हविरादिना यज्ञः पाकयज्ञादिर्यागविधिर्येषां, ते 'द्रव्ययज्ञाः' तत्तद्देवतायजनप्रधानक्रतुक्रियानुष्ठायिनः सम्भवन्तीति शेषः। ते च गार्हस्थ्याश्रमवर्तिनः प्राधान्येन अत्र अभिप्रेताः, यतो गृहस्थानामेव द्रव्यसाधने देवयज्ञे मुख्यतया अधिकारः। तत्र पाकयज्ञाः सर्ववर्णसाधारणा यतः शूद्रस्य अपि

'पाकयज्ञैः स्वयं यजेत।'

इति

'विहितोऽस्य नमस्कारो मन्त्र.......... ।'

इत्यादिना तेषु अधिकारो विहितः। तथा अन्ये 'तपोयज्ञाः' तपसा तेन तेन वर्णविशेषविभक्तेन नियमेन यज्ञो यागविधिर्येषां ते प्राधान्येन वानप्रस्थाश्रमिणोऽत्र गृह्यन्ते तेषामेव मुख्यतया तपोनिष्ठत्वात्।

'आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम्।'

इत्यादिना शूद्रस्य अपि अत्र अधिकारात् तपोयज्ञेषु अधिकारः। तथा अन्ये 'योगयज्ञाः' योगेन यमनियमाद्यंगनिर्वर्त्येन सबीजनिर्बीजरूपेण चित्तवृत्तिनिरोधैकलक्षणेन समाधिना यज्ञो येषां, ते योगयज्ञाः प्राधान्येन चतुर्थाश्रमिणस्तेषामेव प्राधान्येन योगपरत्वात्। अत्रापि शूद्रस्य अधिकारो विहितो यतो भगवता व्यासमुनिनैव चतुर्वर्णसाधारणान् धर्मान् निर्दिशता तन्मध्ये आत्मज्ञानमुक्तम्। तथाच जनकपराशरसंवादे

'विशेषधर्मान् वर्णानां प्रब्रूहि भगवन्मम।
तथा सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि॥'

इति प्रश्ने विशेषधर्मानुक्त्वा भगवान् पराशरः

'आनृशंस्यमहिंसा चाप्रमादः संविभागिता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एवच ॥
स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥'

अत्रैव अन्यत्र

'नचापि शूद्रः पततीति निश्चयो
नचापि संस्कारमिहार्हतीति वा ।
श्रुतिप्रवृत्तं नच धर्ममश्नुते
नचास्य धर्मप्रतिषेधनं कृतम् ॥'

अत्रैव अन्यत्र अपि

'सर्वे वर्णा धर्मकार्याणि सम्यक्
कृत्वा राजन् सत्यवाक्यानि चोक्त्वा ।
त्यक्त्वाधर्मं दारुणं जीवलोके
यान्ति स्वर्गं नात्र कार्यो विचारः ॥'

( म०भा०शा०प० ३०२अ० )

इति । 'स्वाध्यायज्ञानयज्ञाश्चापरे' स्वाध्यायो वेदवेदांगस्मृतीतिहासपुराणतर्कदंडनीतिवार्तादेर्यथास्वं स्वस्य शास्त्रस्य अध्ययनम् । तत्र प्राधान्येन ब्रह्मचर्याश्रमिणोऽधिकृता यतो मुख्यतया तेषां स्वाध्यायनिष्ठत्वं व्यवस्थितम् । तत्र च कस्मिंश्चिदंशे कथञ्चित् शूद्रस्यापि अधिकारो यतः 'स्वयं यजेत' इति पाकयज्ञेषु तस्य अपि अधिकाराभ्युपगमात् तदितिकर्तव्यताज्ञानहेतोः कस्यचित् शास्त्रावयवस्य केनचित् प्रकारेण अध्ययनमवश्यमेव प्रसक्तम् । तथा ज्ञानयज्ञा ज्ञानेन प्रबन्धप्रतिपादितात्माद्वैतबोधात्मना यज्ञो यागविधिर्येषाम् । तत्र सर्ववर्णाः सर्वाश्रमिणो

गृह्यन्ते। ततः शूद्रस्य अपि अधिकारः। तथाच उक्तमिहैव परब्रह्मस्वरूपमात्मानं व्यपदिशता भगवता

'मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम्॥' (९।३३)

इति। नच अतिशयोक्तिमात्रमेतत् यतो मुनिनैव मोक्षधर्मेषु पिंगलासुलभाद्याः स्त्रियः, तुलाधराद्याश्च वैश्याः, धर्मव्याधादयः शूद्रा आविर्भूततत्त्वज्ञानास्तत्र तत्र उदाहृताः। तदनेन ज्ञानयज्ञेन पूर्वोक्ता यज्ञभेदा ज्ञानयज्ञतामाप्नुवन्तीति उक्तं भवति 'संशितव्रताः' इति विशेषणं स्वाध्याययज्ञानामत्यन्तनियमपरत्वात् ज्ञानयज्ञानां च परमार्थनिष्ठत्वात् मुख्ययतिलक्षणयोगात् वेदितव्यम्। अथ प्राणायामयज्ञस्य साधारण्यात् पृथक् स्वरूपं प्रतिपादयन्नाह—'अपरे' केचित् योगिनः 'अपाने' पूरकवृत्तिव्यवस्थिते शारीरे मरुति 'प्राणं' रेचकवृत्तिव्यवस्थितवायुं 'जुह्वति' प्राणाख्यं वायुं हविर्भावेन कल्पयित्वा अपानं च अग्नित्वेन यागविधिमनुतिष्ठन्तीत्यर्थः। रेचितः प्राणो यदा अपानवृत्त्यात्मना परावर्तमानः स्वरूपं जहाति, तदा असावपाने हुतो भवतीति कृत्वा 'अपाने जुह्वति प्राणम्' इति उक्तम्। अनेनैव क्रमेण 'प्राणे' अग्निभावेन परिकल्पिते 'अपानं' हविर्भूतमन्ये 'जुह्वति' इति। रेचकवृत्तिपूर्वकत्वेन पूरकवृत्तिविश्रान्तिरूपतया पूरकवृत्तिपूर्वकत्वेन च रेचकवृत्तिविश्रान्तिरूपं प्राणायामक्रमद्वयं प्रतिपाद्य कुम्भकवृत्तिरूपं क्रमं प्रतिपादयितुमाह 'अपरे' अन्ये प्राणापानयोर्द्वयोरपि गती व्यापारौ 'रुद्ध्वा' स्तम्भयित्वा यावच्छक्ति 'प्राणायामपरायणाः' तथाविधानां रुद्धानां प्राणानामायामश्चिरकालावस्थानात् दीर्घीकरणं परायणं निष्ठा येषां, ते तादृशाः प्राणायामपरायणाः। अनेन रेचकपूरकवृत्त्योरपि प्राणानामायाम

एव उक्तो वेदितव्यः । ते च एवंविधा 'नियताहाराः' मात्राकालावच्छिन्नहितपवित्राशिनः सन्तः 'प्राणान्' नानानाडीवाहिनो वायूनाज्यभूतान् मध्यमेषु 'प्राणेषु' अग्निभूतेषु 'जुह्वति' तत्र लीनान् कुर्वते मध्यमप्राणवृत्त्यवलम्बिनस्तिष्ठन्ति । अयं प्राणयज्ञक्रमः प्रतिपादितः । एषोऽपि पूर्वोक्तज्ञाननिष्ठतया अनुष्ठीयमानो ज्ञानयज्ञत्वमापद्यते यतः पूर्वयोर्द्वयोः प्रकारयोः प्राणोदयास्तमयसन्धिसमाहितत्वेन परमात्मसमापत्तिहेतुतामापद्यमानयोर्विज्ञानयज्ञता जायते । तृतीयेऽपि क्रमे मध्यमप्राणपरिणतचित्ततया असौ जायते । अस्य च प्राणायामक्रमस्य योगांगत्वेन व्यवस्थितस्य अपि पुनर्वचनं केवलस्यैव यज्ञविशेषप्रतिपादनार्थं वेदितव्यम् ॥ २९ ॥

एवमनुष्ठातृभेदेन यज्ञभेदान् प्रतिपाद्य सर्वेषामपवर्गफलत्वं यथा भवति, तथा प्रतिपादयितुमाह

**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**
**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**

'एते' यथोक्तविविधयज्ञानुष्ठातारः 'सर्वेऽपि' समस्ता एव निर्विशेषतया 'सनातनं' नित्यमक्षयं 'ब्रह्म' परमात्मतत्त्वं 'यान्ति' गच्छन्ति तदेव सम्पद्यन्ते इत्यर्थः । कीदृशाः । 'यज्ञविदः' सन्तो यदि यथाप्रतिपादितब्रह्मार्पणविधानक्रमेण यज्ञं यथोक्तं नानारूपं यागं जानन्ति निर्विकल्पतया प्रतिपद्यन्ते, ततस्तथाभूतेन यज्ञविधिना 'क्षपितकल्मषाः' विनाशिताज्ञानलक्षणमुख्यमहापातकाः सन्तः, तथा अनुष्ठितात् यज्ञात् शिष्टं तादृग्यागविधानानन्तरमाहरणीयं यत्, तदेव ब्रह्मार्पणविधानदृष्ट्या ब्रह्ममयत्वादमृतमनुत्तरानन्दास्वादसुन्दरं सुधारसं भुञ्जते परसंविन्मयस्वात्मपरिपोषाय चर्वयन्ति ये, तथाविधाः सन्तो यथोक्तं ब्रह्मलक्षणं

पदं प्राप्नुवन्तीत्यर्थः । ब्रह्मार्पणज्ञानव्यतिरेकेण एतान् यागविशेषाननुतिष्ठन्तस्तेभ्यस्तत्तत् नानारूपं परिमितं फलं प्राप्नुवन्तीति अर्थात् प्रतिपादितं भवति ॥

यस्तु केवलेन क्रियामात्रेण ज्ञानक्रियासमुच्चयेन वा अनयोरेकतमेन अपि विधिना यज्ञं न कश्चिदनुतिष्ठति, तस्य

**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥**

'अयज्ञस्य' उभयरूपतया अपि यज्ञरहितस्य 'अयं लोकः' दृष्ट एव नास्तिकत्वात् सर्वजनद्वेष्यस्य सतो 'नास्ति' । यदुक्तं

'सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव ।
नास्तिकोऽपि ह्युद्विजते जनः किं पुनरास्तिकः ॥'

इति। तस्य एवंविधस्य पापशीलस्य 'कुतोऽन्यः' एतस्मात् लोकात् परः स्वर्गापवर्गात्मकफलभोगास्पदमदृष्टसंज्ञो भवति ॥ ३१ ॥

अथ एतेषां सर्वयज्ञानां कर्मजत्वप्रतिपादनेन ज्ञानयज्ञत्वापत्तिं प्रतिपादयितुमाह

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

एवं 'यथोक्तेन' प्रकारेण भूरिप्रकाराः 'यज्ञाः' 'ब्रह्मणः' वेदादेः शास्त्रस्य 'मुखे' तद्द्वारेणेत्यर्थः 'वितताः' स्वगतिविशेषप्रतिपादनक्रमेण विस्तारिताः। 'तांश्च सर्वान्कर्मजान्' वाङ्मनःकायव्यापारनिर्वर्त्यत्वात् क्रियासमुद्भवान् 'विद्धि' न अन्यथा एषामात्मलाभोपपत्तिरिति निश्चिनु । येऽपि हि बुद्धिमात्रसाधना यज्ञास्तेषु तादृक्सूक्ष्मबुद्धिव्यापाराव्यभिचारः स्थित एव । ततः सहसृष्टत्वादशक्यपरिहाराणां कर्मात्मकानां यज्ञानां यथोक्तज्ञाननिष्ठतया अनुष्ठानमपवर्गसिद्धिरिति । 'एवं ज्ञात्वा' सम्यक् प्रतिपद्य 'विमोक्ष्यसे' स्वयमेव केवलीभविष्यसि न निमित्तान्तरमपेक्षि-

ष्यसे इति समुच्चयज्ञानस्य मोक्षं प्रति सौकर्यप्रतिपादनाय विमोक्ष्यसे इति कर्मकर्तरि प्रयोगः ॥ ३२ ॥

अथ एतस्य ज्ञानप्रशंसार्थमाह

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

'द्रव्यमयाद्यज्ञात्' इति यथोक्तप्रतिपादितप्रभेदयज्ञोपलक्षणार्थं वेदितव्यम् । तेन सर्वेभ्यो यज्ञेभ्यो 'ज्ञानयज्ञः श्रेयान्' प्रशस्यतरः । ज्ञानमयो हि यज्ञः सर्वान् द्रव्ययज्ञादीन् मोक्षफलान् सम्पादयति, तेन ज्ञाने सति सर्वयज्ञा ज्ञानयज्ञा एव भवन्तीति उक्तं भवति । सर्वयज्ञनिष्ठत्वेन हि ज्ञानस्य ज्ञानयज्ञत्वं, मोक्षफलं ज्ञानं, नतु पृथक् यस्मात् यथोक्ते 'ज्ञाने' द्रव्ययज्ञादिविभागेन 'सर्वं' समस्तं 'कर्माखिलं' स्वगतिविशेषापेक्षया समग्रं 'ज्ञाने परिसमाप्यते' प्रविलयं गच्छति कृतमपि दग्धबीजवत् स्वफलप्रसवसामर्थ्यं न भजते ॥ ३३ ॥

एवंविधं च

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

'तत् ज्ञानं' तुभ्यं 'ज्ञानिनः' परमात्मसमापत्तिलक्षणनिरुत्तरफलप्राप्त्युपायभूतबोधयुक्ता गुरव 'उपदेक्ष्यन्ति' प्रतिपादयिष्यन्ति । किं शास्त्रमात्रज्ञाः । नेति आह 'तत्त्वदर्शिनः' यथाप्रतिपादितस्य परमार्थस्य स्वसंवेदनेन द्रष्टारः । केन हेतुना उपदेक्ष्यन्ति । 'प्रणिपातेन' पादप्रणामपूर्वेण सर्वात्मना प्रह्वत्वेन, तथा 'परिप्रश्नेन' परितः समन्तात् सर्वसंशयच्छेदार्थं यः प्रश्नः पुनः पुनः प्रार्थनापूर्वमनुयोगः, तेन, तथा 'सेवया' आसन्नस्वसमर्पणात् सर्वत्र

निर्विकल्पया शुश्रूषया। निर्व्याजभक्तिश्रद्धाराधिता गुरव एवंविधं महोदयमर्थमुपदिशन्तीति 'विद्धि' निश्चयेन जानीहि ॥ ३४ ॥

कीदृशं तत् ज्ञानमिति आह

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पांडव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

'यज्ज्ञात्वा' सम्यक् प्रतिपद्य 'पुनः' तत्प्रतिपत्तेरुत्तरकालम् 'एवम्' अवश्यानुष्ठेये वैरिवधलक्षणे स्वधर्मे एव अधर्मप्रतिपत्तिरूपेण प्रकारेण 'मोहं' विपर्ययलक्षणमज्ञानं न प्राप्स्यसि; 'येन' च ज्ञानेन करणभूतेन सर्वभूतानि चराचरप्राणभृतो 'मयि' परमकारणे, तथा 'आत्मनि' स्थितानि 'द्रक्ष्यसि' । किमुक्तं भवति । परमकारणाभिन्नात् स्वात्मनः सर्वभूतानां वास्तवमभेदमनेन ज्ञानेन साक्षात्करिष्यसि । अत्र स्वयं ज्ञानमुपदिशन्नपि 'ज्ञानिनस्ते ज्ञानमुपदेक्ष्यन्ति' इति भगवान् यदाह, तत्र साक्षात्तत्त्वानुभवलक्षणे विशेषज्ञाने अर्जुनस्य अभिकांक्षोत्पादनं प्रयोजनम् । यतः क्रमेण उत्पन्नविशेषज्ञानजिज्ञासातिशयं भगवांस्तत्त्वमनुभावयिष्यत्येव ॥ ३५ ॥

युद्धलक्षणे स्वधर्मेऽनुष्ठीयमाने कुत एव ते पापसम्बन्धो यतोऽस्य ज्ञानस्य अयं प्रभावः

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥**

'अपि चेदसि' यद्यपि 'सर्वेभ्यः पापेभ्यः' समस्तेभ्यः पातकिभ्यो ज्ञातिगुर्वादिवधादिदुष्कृतकारित्वात् 'पापकृत्तमः' तदपेक्षया अतिशयेन दुष्टकर्मकारी, तथापि अस्य ज्ञात्रादिवधलक्षणस्य कर्मणः स्वधर्मत्वे सति 'वृजिनं' तज्जं पापं समस्तं सागरमिव दुर्लंघ्यं यथोक्तज्ञानलक्षणेन प्लवेन यानपात्रेण लंघयिष्यसि ३६

यतः

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ३७ ॥

'यथा' काष्ठानि दीप्ततरोऽनलो भूतिमात्रशेषाणि करोति, 'तथा' तेनैव प्रकारेण सर्वाणि निःशेषाणि कर्माणि पुनःफलदानसामर्थ्यक्षपणात् ज्ञानं निर्दहति । अनेन स्वधर्मत्वेन अवस्थितानां परमघोराणामपि सर्वेषां कर्मणां नैष्फल्यापादनसमर्थं ज्ञानमेतदिति उक्तम्, नतु शास्त्रविहितानाम् । यथोक्तं प्राक्

'श्रेयान्स्वधर्मो विगुणः................।' ( ३।३५ )

इत्यादिना ॥ ३७ ॥

किंच घोरस्य अपि कर्मणो मोक्षलक्षणोत्तमफलप्राप्तिपर्यवसायिना अनेन

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥

यस्मात् 'ज्ञानेन' तुल्यं पावकमन्यत् वस्तु जगति न सम्भवति 'तत्' च अस्य पावनत्वं 'योगसंसिद्धः' ज्ञानसंस्कृतेन यथोक्तेन कर्मसमाधिना सम्यक्सिद्धः प्राप्तपरमात्मसमापत्तिलक्षणप्रकृष्टफलः सन् योगी 'कालेन' अभ्यासतीव्रत्वातीव्रत्वानुसारिणा शीघ्रेण चिरेण वा 'स्वयमेव' आत्मनैव लभते स्वीकरोति ॥ ३८ ॥

तस्य च एवंप्रभावस्य ज्ञानस्य लाभक्रममाह—

श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥

श्रद्धा आप्तोपदिष्टेऽर्थे निर्विकल्पफलसंभावना, यद्वशात् प्राप्तफलस्यैव चेतसः संप्रसाद उत्पद्यते । सा च परमेश्वरप्रसादसुर-

पादपप्रथममंजर्या भक्त्या सहैव उत्पद्यते । तद्वान् तया युक्तः संशयात्मकघोरविघ्नविनाशात्, 'तत्परः' नान्यचेताः, तथा 'संयतेन्द्रियः' प्राक्प्रतिपादितेन क्रमेण वशीकृतसकलाक्षवर्गः परमपावनं 'ज्ञानम्' अभियुक्तः कुतश्चित् परमेश्वरेच्छाप्रेरितात् साक्षात्कृतपरमार्थादवाप्नोति । तच्च प्राप्य नित्याभ्यासपरिशीलनात् सुदृढप्रतिपत्त्या स्वीकृत्य 'अचिरेण' अल्पीयसैव कालेन 'परां' निरुत्तरां 'शान्तिं' सकलविकल्पविप्लवविनाशनिश्चलं शमं स्वात्मोपलब्धिजनितां निर्वृतिम् 'अधिगच्छति' प्राप्नोति ॥ ३९ ॥

एतद्गुणविहीनस्तु

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥

'अज्ञः' ज्ञानरहितो 'नश्यति' परापरफलप्राप्त्यभावात् संसार एव निमज्जति । कीदृशः स विनश्यति । 'अश्रद्दधानः' यः परमेश्वरानुग्रहाद्विना न किञ्चित् श्रद्दधाति सम्भावयति यतः श्रद्धाविरहात् 'संशयात्मा' सर्वत्र निश्चयप्रतिपत्त्यभावात् सन्देहमयबुद्धिः । अतश्च तथाविधस्य सर्वत्र सन्दिग्धबुद्धेः 'नायं' दृष्ट एव 'लोकोऽस्ति, नच परः' स्वर्गापवर्गलक्षणोऽदृष्टः । ततश्च 'सुखमपि' तस्य नास्ति । संशयितस्य हि वैद्यादिना आप्तेन उक्ते व्याध्यादिप्रतीकारहेतौ भेषजादौ सन्दिह्यमानमतेर्व्याध्यादिनाशाभावादयमेव लोको नास्ति, कुतः परः, सुखं वा लोकद्वयोपभोग्यमिष्टफलं भविष्यति ॥४०॥

यः पुनरेतद्व्यतिरिक्तलक्षणस्तं

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४१ ॥

योगेन यथोक्तेन ज्ञानसंस्कृतकर्मसमाधिना संन्यस्तानि अनित्यसुखात्मकफलाभिसन्धिविरहात् त्यक्तानि क्रियमाणानि एव

तिरस्कृतानि कर्माणि येन तादृशं, तथा ज्ञानेन सदसत्पदार्थनिश्चयप्रतिपत्तिरूपेण यथोक्तेन बोधेन संच्छिन्नो निकृत्तमूलः संशयः सन्देहो येन तं तादृशम्, अत एव सत्यात्मप्रतिपत्तिवशात् 'आत्मवन्तं न कर्माणि' शुभाशुभानि 'निबध्नन्ति' सुखदुःखलक्षणफलदानेन न स्वतन्त्रीकुर्वन्ति ॥ ४१ ॥

यत एवं

तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैवं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

'तस्मात्' प्रबन्धप्रतिपादितात् कारणात् 'योगं' शास्त्रविहितेषु कर्मसु यथोक्तज्ञानसंस्कृतेषु समाधिं यथोक्तम् 'आतिष्ठ' समाचर अत्र 'उत्तिष्ठ' प्रोद्युक्तो भव । किं कृत्वा । 'एवं' सर्वदोषैकहेतुं 'संशयं' यथोक्तेन ज्ञानखड्गेन 'च्छित्त्वा' मूलादेव निपात्य । कीदृशं संशयम् । 'हृत्स्थं' हृदयगतम् 'अज्ञानसम्भूतं' मोहप्रभवम् । अनेन हृदयगतत्वेन मोहप्रभवत्वेन च अदूरवर्तित्वमसारमूलत्वं च सुच्छेदत्वप्रतिपादनार्थमुक्तमिति ओम् ॥ ४२ ॥

कल्याणैकनिकेतनस्य जगतां घोराघविध्वंसिनो
धर्मस्यास्य सुरापगाम्भस इव ब्रह्मात्मकस्योद्भवम् ।
आख्यायात्मन एव यत्र भगवान् पार्थाय सर्वातिगं
स्वं माहात्म्यमसूचयत्स विवृतोऽध्यायश्चतुर्थः क्रमात् ॥

इति श्रीमद्राजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे चतुर्थोऽध्यायः ॥४॥

---

## अथ पञ्चमोऽध्यायः ।

अथ द्वितीयाध्यायपरिसमाप्तौ बुद्धिप्रशंसावाक्यानि प्राक् च कर्मयोगवचनानि श्रुत्वा तेषां च परस्परविरुद्धत्वं मन्यमानेन अर्जुनेन

'ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन' ( ३।१ )

इत्यादिना प्रश्नो यः कृतोऽभूत्, स भगवता यद्यपि निर्णीत एव तृतीये; तथापि चतुर्थाध्यायपरिसमाप्तौ

'योगसंन्यस्तकर्माणं ज्ञानसंच्छिन्नसंशयम्' ( ४।४१ )

इत्यत्र योगसंन्यासशब्दौ श्रुत्वा संन्यासं त्यागं मन्यमानः पुनरुत्पन्नसंशयोऽर्जुन उवाच—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यः श्रेयानेतयोरेकस्तं मे ब्रूहि विनिश्चितम् ॥ १ ॥

हे 'कृष्ण कर्मणां' त्यागं 'प्रशंससि' स्तौषि, पुनश्च तेषामेव 'योगम्' अनुष्ठानेन स्वीकारं स्तौषि । तदेतयोर्विरुद्धयोः कर्मत्यागस्वीकारयोः संन्यासयोगशब्देन उक्तयोर्यौगपद्येन अनुष्ठानं तावत् न संभवति । अतो द्वयोर्मध्यात् 'एकः' संन्यासो वा योगो वा 'यः' एव 'श्रेयान्' प्रशस्यतरः 'तं मे' निःसन्देहतया 'ब्रूहि' ॥१॥

अथ शब्दविशेषमात्रजनितं संशयमर्जुनस्य परिहर्तुं भगवानुवाच—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥

सत्यं द्वावपि एतौ कर्मणां संन्यासयोगौ त्यागस्वीकारौ भिन्नानुष्ठातृपुरुषानुष्ठीयमानापवर्गलक्षणाभ्युदयसंपादकौ भवतः । यतः

केवलज्ञानवादिनः सर्वात्मना कर्मणां त्यागेन अपवर्गमिच्छन्ति, समुच्चयवादिनस्तु कर्मणामत्यागेन अनुष्ठानेनेति द्वयोरपि फलश्रुतिरस्ति; किन्तु 'तयोः' संन्यासयोगयोर्मध्यात् 'संन्यासात्' त्यागात् तमपेक्ष्य 'कर्मयोगो' विहितकर्माचरणं 'विशिष्यते' उक्तवक्ष्यमाणहेतुपर्यालोचनया प्रकृष्यते ॥ २ ॥

यथा विशिष्यते, तथा आह—

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धाद्विमुच्यते ॥ ३ ॥

समुच्चयानुष्ठाता कुर्वन्नपि कर्माणि नित्यं संन्यासी सदात्यक्तकर्मा बोद्धव्यः । कोऽसौ । 'यो न' किञ्चित् 'द्वेष्टि न' किञ्चित् 'काङ्क्षति' । कस्मात् स नित्यसंन्यासीत्याह यस्मात् 'निर्द्वन्द्वः' द्वेषाकाङ्क्षाशब्दप्रतिपादितात् द्वेषरागलक्षणात् द्वन्द्वात् निष्क्रान्तः कर्माण्यपि कुर्वन् 'सुखम्' अक्लेशं 'बन्धात्' संसारलक्षणात् दुर्गात् 'मुच्यते' स्वयमेव मोक्षमाप्नोति । तदिदमत्र तात्पर्यम्—संसारकाराकुहरस्थानां रागद्वेषावेव दुरुच्छेदौ बन्धनपाशौ; तावेव यथोक्तात्मज्ञानासिना येन च्छिन्नौ, तस्य क्रियमाणान्यपि कर्माणि अकृतकल्पानि,—इत्यसौ नित्यसंन्यासीति उक्तः, यस्तु परिहरन्नपि कर्माणि रागद्वेषौ च्छेत्तुं न प्रभवति, स संन्यस्तकर्मा अपि कर्मकृदेव तत्कृतस्य तत्फलस्य बन्धस्य अविरामात् । यथाच सर्वकर्मणां परित्यागानुपपत्तिः केषांचन वा परित्यागे बन्धकारणभूतरागद्वेषानुपरमस्तथा प्रागेव प्रतिपादितं, प्रतिपादयिष्यते च ॥ ३ ॥

इत्थं च समुच्चिते ज्ञानकर्मणी प्राक् साङ्ख्ययोगशब्दाभ्यां ये प्रतिपादिते, त एव संन्यासयोगशब्दाभ्यामुक्ते । ततः किं ते संशयकारणमित्याह—

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥

साङ्ख्यं यथाप्रतिपादितात्मतत्त्वज्ञानम् । योगस्तदविरहविधानविहितबन्धसामर्थ्यानां विहितानां कर्मणामनुष्ठानम् । तौ नित्यमन्योन्यावियोगप्रतिलभ्यसंपूर्णस्वरूपत्वादभिन्नौ । 'बालाः' तत्त्वज्ञानव्यवहारव्युत्पत्तिरहितत्वात् बालिशाः 'पृथक्' भिन्नपुरुषानुष्ठेयतया विविक्तावस्थानौ 'प्रवदन्ति' व्याचक्षते 'नतु पण्डिताः' परमार्थविदः । यत 'एकमपि' सांख्यं योगं वा 'सम्यक्' यथाप्रतिपादितेन रूपेण 'आस्थितः' समाश्रितः सन् 'उभयोः' द्वयोरपि साङ्ख्ययोगयोः 'फलं' कैवल्यलक्षणं 'विन्दते' लभते । किमुक्तं भवति । यथा उक्तसाङ्ख्यापरसंज्ञविज्ञानसमाश्रयणं प्रबन्धप्रतिपादितोपपत्त्या यथाविहितकर्मानुष्ठानरूपं योगमन्तरेण फलपर्यवसायि न भवत्येव, योगोऽपि साङ्ख्यरहितस्तथैवेति ॥४॥

तदेव इह द्रढयितुमाह—

यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरनुगम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥

साङ्ख्येन ज्ञानेन संबद्धाः पुरुषा लक्षणया साङ्ख्या इति उक्ताः, तद्वत् योगसंबन्धात् योगाः । तैरेवंविधैः साङ्ख्यैर्यथोक्तज्ञानवद्भिः 'यत् स्थानं' विश्रान्तिपदं 'प्राप्यते' निरुत्तरोपेयतया समाश्रीयते, तत् एव 'योगैरनुगम्यते' पश्चात्कालतया स्वीक्रियते । ज्ञानपूर्वत्वादनुष्ठानस्य यत् सांख्यैः प्राप्यते, तद्योगैरनुगम्यते इत्युक्तं; न पुनः कैवल्यलक्षणैकफलसंपादने तुल्यहेतुत्वात् तयोर्भेदोऽस्ति । ततः 'साङ्ख्यं योगं चैकमेव यः पश्यति' जानाति 'स एव पश्यति' तस्यैव सज्ज्ञानात्मिका दर्शनशक्तिः, नतु यो ज्ञानेन केवलेनैव मोक्षः, कर्मयोगेन सर्वेण अपि बन्ध इति पश्यति ॥५॥

तदाह—

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥**

'अयोगतः' योगात् यथोक्तनीत्या कर्मानुष्ठानसमाधानात् विना 'संन्यासः' पुनर्बन्धसंबन्धाभावफलः कर्मत्यागः प्राप्तुमासादयितुं 'दुःखं' कृच्छ्रेण आप्यत इत्यर्थः । यस्मात् 'योगयुक्तः' योगे कर्मसमाधौ युक्तो यथोक्तज्ञानैकतानतया नित्यसंबद्धः सन् 'मुनिः' भूत्वा शीघ्रमेव 'ब्रह्म' परमात्मलक्षणं परं तत्त्वम् 'अधिगच्छति' आत्मतया समासादयति । किमुक्तं भवति । ज्ञाननिष्ठत्वेन स्वकर्मानुष्ठानं मुनित्वकारणं ब्रह्मप्राप्तिलक्षणस्य फलस्य अच्छलाविसंवाद्युपायभूतत्वात्, नतु केवलं ज्ञानमात्रं सर्वात्मना कर्मत्यागानुपपत्तेस्तस्य अनुपायत्वादिति ॥ ६ ॥

कस्मात् योगयुक्तस्यैव ब्रह्म सुप्रापमित्याह

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

यतो 'योगयुक्तः कुर्वन्नपि' कर्माणि 'न लिप्यते' ततो न चिरेण ब्रह्म अधिगच्छतीति संबन्धः । तदेतत् व्याख्यायते—योगे ज्ञानकर्मसमुच्चयानुष्ठानसमाधौ युक्तस्तत्परतया नित्यसमाहितो योगी संसारिपुरुषाविशेषेण समाचरन्नपि स्वकर्म बन्धहेतुना तत्फलेन सुखाद्यात्मना न लिप्यते न मलिनात्मतां नीयते । यतोऽसौ 'विशुद्धात्मा' अहंप्रत्ययैकलक्षणो यो निसर्गनिर्मलचिन्मात्रस्वरूप आत्मा तस्य तावती अशुद्धिर्यदनाद्यविद्यावशात् वेद्यैकस्वरूपे जात्यादिविविधावच्छेदभाजि प्रतिनियते देहमात्रे स्वात्मप्रतिपत्तिः, तदभावमात्रमेव अस्य विशुद्धिः, इत्थं विशुद्ध आत्मा यस्य, स तथाविधः सत्यस्वभावप्रतिष्ठिताहंभावतया प्राप्तस्वाभाविकप्रसाद इ-

त्यर्थः। ततश्च 'विजितात्मा जितेन्द्रियश्च' अत्र आत्मेन्द्रियशब्दाभ्यां ज्ञानक्रियाप्रपञ्चो विवक्षितः। स उभयात्मापि विजितः स्वशक्तित्वेन स्वेच्छाविधेयप्रवृत्तिनिवृत्तित्वात् वशीकृतो येन, स पदद्वयेन तथोक्तः। एवंहि योगयुक्तः कर्मयोगी शुद्धात्मा सन् क्रियासु प्रवर्तमानोऽपि मन्यते—या इयमकृत्रिमप्रकाशात्मकस्वभावपरामर्शैकरूपा मम अव्यतिरिक्ता शक्तिः, सा एव स्वेच्छानिर्मितज्ञेयकार्यस्वभावविषयप्रकाशनाय प्रसरन्ती ज्ञानक्रियाभेदेन द्विप्रकारतया अवभासते। तस्याश्च ज्ञानरूपो यो भेदः, सोऽन्तःकरणवर्गः; यः क्रियारूपः, स बहिष्करणवर्ग इति। सूर्यस्य यथा प्रभारूपा शक्तिः करणचक्रात्मना अवभासते, तथैव इयं मम स्वशक्तिरेव अन्तःकरणबहिष्करणभावेन विजृम्भते। नच प्रकाशमानत्वेन संबद्धैराभ्यन्तरबाह्यरूपैर्विषयैरेषा कलुषीकर्तुं पार्यते। नहि दिनकरकिरणाः प्रकाश्यैर्नीलपीतादिभिर्भावभेदैः स्वाभासेन उपरञ्जयितुं शक्यन्ते, स्वतन्त्रा एव तान् प्रकाशयन्ति। तथैव एतेऽपि अन्तःकरणबहिष्करणरूपाः शक्तिभेदा ममेति, एवं विजितात्मा जितेन्द्रियश्च। ननु एवमपि विशुद्धात्मतादिव्याख्यातविशेषणविशिष्टत्वं न उपद्यते कर्मयोगिनः। यतो विषयेषु प्रवृत्तिस्तेभ्यश्च निवृत्तिरुपादेयत्वं हेयत्वं च विना न संभवति, तत्संभवे च रागद्वेषकलङ्को दुर्निवारः, तस्मिन् सति कुतो विशुद्धात्मत्वादीति। अत्र परिहारार्थं हेतुगर्भं विशेषणमाह 'सर्वभूतात्मभूतात्मा' इति सर्वाणि भूतानि अशेषाः स्थावरजङ्गमा विषयभावमापन्नाः पदार्थास्तेषामात्मभूतस्तत्स्वरूपत्वं प्राप्त आत्मा स्वभावो यस्य, स तथाविधः। किमत्र तात्पर्यम्। कर्मयोगी किल येषु विषयेषु अन्तर्बहिष्करणवृत्तिद्वारेण प्रवृत्तिनिवृत्ती भजते, तेषु तस्य यथोक्तज्ञाननिष्णातप्रज्ञत्वा-

देवंविधा सुस्थिरा प्रतिपत्तिर्यथा य इमे चेतनाचेतनरूपाः पदार्था विषयभावमापन्नास्ते संवेद्यमानताव्यतिरेकेण न तत्तत्स्वरूपं प्रतिलभन्ते, ततः स्वसंविदेव तेन तेन रूपेण अवभासते, तत्त्वतो न एतत् वस्त्वन्तरं किञ्चिदिति परमेश्वरप्रसादापनीतमायातिमिरत्वादेकस्मिन् परमार्थसति आत्मतत्त्वे निर्वृत्ते निवृत्तद्वित्वावभासविभ्रमया सम्यग्दृशा सर्वमन्तःकरणबहिष्करणविषयात्मकं पदार्थजातं परमात्मस्वरूपादत्यन्तमभिन्नतया निभालयन् योगयुक्तः सहजासु शास्त्रविहितासु क्रियासु प्रवर्तमानो न शुद्धात्मत्वादिविशेषणव्यभिचारं भजते ॥ ७ ॥

तमेतं कर्मयोगिनः समाधिमासनप्राणजयप्रत्याहाराद्यभ्यासपरिकर्मनिरपेक्षं यथोपस्थितविषयसंस्पर्शेऽपि अविलुप्तपरवैराग्यं सर्वदा सर्वथा सर्वस्य सुलभपरमात्मप्रतिष्ठालाभलक्षणं निरतिशयरूपं फलं वितत्य प्रतिपादयितुमाह—

**नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छञ्श्वसन्स्वपन् ॥ ८ ॥**
**प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

अतोऽसौ 'युक्तो' व्याख्यातस्वरूपः कर्मयोगसमाहितः कुर्वन्नपि न लिप्यते । यतो 'नैव किञ्चित्करोमीति' मन्यते सर्वासु क्रियासु लोकवत् वर्तमानोऽपि नैष्कर्म्यफलमेव प्रतिपद्यते इति संबन्धः । किं कुर्वन्नेवं मन्यते । 'पश्यन्' इत्यादिना सर्वेन्द्रियवृत्तीः प्राणवृत्तीश्च प्रवर्तयन्नपि । 'इति धारयन्' एवंविधामस्य कर्मयोगस्य यथोक्तफलप्राप्त्युपायभूतां धारणामुद्वहन् । कथं धारयन् । दर्शनादिक्रियासु प्रवृत्तान्यपि 'इन्द्रियाणि' प्राणाश्च 'इन्द्रियार्थेषु' स्वेषु स्वेषु विषयेषु 'वर्तन्ते' संबन्धमात्रं तैरनुभवन्ति, नतु तेषु स्वविषयसंबद्धेषु नित्य-

निरतिशयचित्प्रकाशस्वभावस्य मम लोकवत् रागादिकलङ्कस्पर्शोऽन्तः संभवतीति । 'पश्यन्' इत्यादिना 'निमिषन्' इत्यन्तेन ग्रन्थेन सर्वेन्द्रियप्राणवृत्तयः संगृहीताः । तथाच बुद्धीन्द्रियवृत्तयः श्रवणस्पर्शनदर्शनरसनजिघ्रणरूपाः क्रममनपेक्ष्य 'पश्यन्' इत्यादिना 'अश्नन्' इत्यन्तेन पदपञ्चकेन प्रतिपादिताः । एवमेव वचनग्रहणगमनविसर्गप्रजननरूपाः कर्मेन्द्रियवृत्तयः 'प्रलपन् गृह्णन् गच्छन् विसृजन्' इति पदचतुष्टयेन प्रतिपादिताः । यतो विसृजन्निति पदेन विसर्गप्रजननरूपे द्वे वृत्ती प्रतिपादिते; स्वपन्नित्यनेन मनोवृत्तिः प्रतिपादिता, स्वापावस्थायां हि मन एव वृत्तिमनुभवति, नेन्द्रियाणि; उन्मिषन्निमिषन्नितिपदद्वयेन बुद्धिवृत्तिः प्रतिपादिता, निश्चयात्मिका हि बुद्धिवृत्तिरिति सा भावविषयत्वेन भवन्ती उन्मेषशब्देन उक्ता, अभावविषयत्वेन भवन्ती निमेषशब्देन । भावाभावौ हि बुद्धिवृत्तिरेव निश्चिनुते । अहङ्काररूपा तु वृत्तिः पश्यञ्शृण्वन्निति कर्तृतया व्यपदिष्टे पुरुषे एव वर्तते इति । एता अन्तर्बहिष्करणवृत्तयः । श्वसन्नित्यनेन प्राणवृत्तिः प्रतिपादिता । प्राणधारणमेव हि श्वसनमिति । तदिदमस्य वाक्यस्य तात्पर्यम्—

'यस्मिन् सर्वं.................... ।
.................................. ॥'

इति व्याख्यातस्वरूपस्य परस्य तत्त्वस्य आत्मन एव परमेश्वरस्य तादृक्स्वभावपरामर्शमात्रात्मिका या शक्तिरव्यतिरिक्ता, सैव तदिच्छावभासितज्ञेयकार्यात्मकजगत्क्रीडनकविषयत्वेन प्रसरन्ती तन्मायाजनितविपर्ययदर्शनानां सांसारिकपुरुषाणां संग्रहेण ज्ञानक्रियारूपा अपि अन्तर्बहिष्करणप्राणवृत्तिभेदेन चतुर्दशमार्गप्रसृततत्वेन अवभासमाना संसारबन्धहेतुत्वेन पर्यवस्यति;

परमेश्वरानुग्रहादेव तु उन्मिषितपरिमृष्टद्वैतकलङ्कनिर्मलनिजज्ञानचक्षुषां सर्वव्यवहारव्यापृतानामपि यथोक्तस्वभावमात्रपरामर्शैकरूपतया यथोक्तकर्मयोगिनामवभासमाना परमात्मसमापत्तिलक्षणमोक्षफलप्राप्त्यर्थमेव कल्पते इति। अतो युक्तो नैव किञ्चित्करोमीति मन्यते इत्यादि उक्तम् ॥ ९ ॥

इदानीमेतदेव प्रकटयितुमाह—

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

'ब्रह्मणि' परमात्मनि सर्वाणि क्रियमाणानि 'कर्माणि आधाय' तच्छक्तित्वेन विनिवेश्य अत एव 'सङ्गं' स्वरूपव्यतिरिक्तत्वेन अवभासमानेषु विषयेषु निमग्नचित्तत्वं लौकिकं 'त्यक्त्वा' यथोक्तया ज्ञानदृशा परमेश्वरभावानुप्रविष्टो 'यः करोति' सर्वाः क्रियाः समाचरति 'स' लौकिकवत् 'पापेन' कर्मफलरूपेण सुखाद्यात्मना 'न लिप्यते' न कलुषीक्रियते 'अम्भसा' सलिलेन निर्व्यवधानतया सुसंश्लिष्टमपि कमलदलमिव ॥ १० ॥

यत एवमतः—

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मसिद्धये ॥ ११ ॥**

कायग्रहणेन कर्मेन्द्रियाणि, मनोबुद्धिग्रहणेन बुद्धीन्द्रियाणि अत्र गृह्यन्ते। एतैः 'केवलैः' तद्विषयादहङ्काराद्यपरिग्रहात् विशुद्धैः पृथग्भूतैर्वा 'कर्म' यथास्वं व्यापारं शास्त्रचोदनया शरीराद्यव्यभिचारितया च दुस्त्यजं 'योगिनः' कर्मयोगसमाहिताः 'कुर्वन्ति' अनुतिष्ठन्त्येव, किन्तु यथोक्तस्य सत्यस्य आत्मनः सिद्धयेऽहन्ताप्रतीतिनिष्पत्तये 'सङ्गं त्यक्त्वा कुर्वन्ति'। किमुक्तं भवति। सङ्गत्याग एव संन्यासः, न कर्मत्यागः ॥ ११ ॥

स च सङ्गत्यागः कर्मफलत्यागात् प्रबन्धप्रतिपादितात् भवतीत्याह—

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥

यो ज्ञाननिष्ठतया कर्मणि 'युक्तः' सन्ननभिसन्धानेन 'कर्मफलं त्यक्त्वा नैष्ठिकीं' निष्ठायां परस्यां काष्ठायां स्थितां 'शान्तिं' द्वैतप्रत्ययलक्षणक्षोभरहितसत्यात्मस्वरूपविश्रमात्मकं प्रशमं समधिगच्छति, यस्तु निसर्गदुस्त्यजे कर्मणि सर्वदा प्रवृत्तः सन् युक्तो न भवति यथोक्तेन क्रमेण समाहितो न भवति, सोऽवश्यमेव फलसङ्गित्वात् 'बध्यते' संसारे नियम्यते ॥ १२ ॥

अथ एवंविधयोः कर्मयोगसंन्यासयोरध्यायेऽस्मिन् प्रबन्धेन प्रतिपादितयोरुपसंहारावसरे स्वरूपानुवादपूर्वं तदनुष्ठातुर्नैष्ठिकीं फलसिद्धिं स्फुटीकर्तुमाह—

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥

इह मनःशब्देन बुद्धिरेव विवक्षिता । तत् च द्विविधं मनः लौकिकं, योगिसंबन्धि च। तत्र अचिन्त्येश्वरमायाशक्तिवशादुद्भूतद्वैतप्रत्ययतिमिरमयं लौकिकं येन लोक एकमेव परमार्थसत्तत्त्वं नानात्वेन मन्यते, योगिसंबन्धि तु येन भगवदनुग्रहाविर्भावितविद्याशक्तिविमलीकृतेन योगिनः सर्वभावान् यथोक्तपरमात्मैकरूपतया मन्यन्ते । तदेवंविधमुभयात्मकत्वं मनसो मुनिनैव अनुगीतासु भगवद्वचसैव अर्जुनबोधायैव इतिवृत्तविरचनक्रमेण प्रदर्शितम् । यदाह—

'उभे वाङ्मनसी गत्वा भूतात्मानमपृच्छताम् ।
आवयोः श्रेष्ठमाचक्ष्व च्छिन्धि नौ संशयं विभो ॥

मन इत्येव भगवांस्तदा प्राह सरस्वतीम् ।
अहं कामदुघा तुभ्यमिति तं प्राह वागथ ॥

स तामाह—

स्थावरं जङ्गमं चैव विद्ध्युभे मनसी मम ।
स्थावरं मत्सकाशे वै जङ्गमं विषये तव ॥'

इति । एवंविधेन सुस्थिरपरमात्मस्वरूपमननैकनिष्ठत्वात् स्थिरतया स्थावरशब्दोक्तेन परमेश्वराभ्याशवर्तिना 'मनसा' अन्तःकरणेन 'सर्वकर्माणि' चित्तवाक्कायनिर्वर्त्याः सर्वाः क्रियाः शास्त्रचोदिताः शरीराव्यभिचारिणीश्च 'संन्यस्य' बन्धहेतुनानाफलाभिसन्धित्यागात् ब्रह्मण्येव निक्षिप्य तेनैव क्रमेण 'वशी' जितात्मा स्वीकृतस्वभावः सन् कर्मयोगी 'सुखमास्ते' जोषमवतिष्ठते निसर्गनिवृत्तनिखिलक्लेशसंपर्कनिरुत्तरानन्दमये स्वात्मनि विश्राम्यतीत्यर्थः । कीदृशः सन्नास्ते । अस्मिन्नेव 'पुरे' देहे एव अधिष्ठानसामान्यात् गृहत्वेन निरूपिते, अत एव कीदृशे । 'नवद्वारे' चक्षुःश्रोत्रघ्राणच्छिद्राणि षट् द्वाराणि दर्शनश्रवणजिघ्रणक्रियाप्रवृत्तिवर्त्मानि, तथा मुखपायूपस्थानि त्रीणि रसनविसर्गक्रियाप्रवृत्तिवर्त्मानीति नव द्वाराणि यस्मिंस्तत्र । अद्वयचिन्मात्रपरमात्मस्वभावविश्रान्तत्वात् सर्वाः क्रियाः सर्वाणि कार्याणि स्वरूपमात्रत्वेन प्रतिपद्यमानो 'न कुर्वन्' इतरशरीरिवत् कर्माभिमानमननुभवन् । केचित् किल प्रतिशरीरं भिन्नान् शरीरिणः स्वाभाविकेन प्रतिनियतेन कर्तृत्वेन युक्तान् मन्यन्ते, तथा 'न कारयन्' न अन्यान् प्रयोजयन् । अपरे हि केचन संनिधिमात्रेण जडायाः प्रकृतेः क्रियाप्रवृत्तौ प्रयोजकमात्मानं मन्यन्ते, अस्य तु उभयथा अपि कर्तृत्वं प्रतिषिध्यते । अयं हि परमात्मसमापन्नत्वात् न करोति न कारयति ॥ १३ ॥

अत एव परमात्मस्वरूपं स्मारयन्नाह—

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

यस्माद्द्वयचिन्मात्रैकस्वभावप्रतिष्ठत्वात् 'प्रभुः' ईश्वरः परमात्मा वास्तवेन रूपेण 'लोकस्य' तन्मायामहिमोद्भावितपरस्परभेदस्य जीववर्गस्य 'न कर्तृत्वं' तासु तासु क्रियासु प्रतिनियतासु प्रतिनियतफलासु अनुष्ठातृत्वं 'सृजति' नापि पुण्यपापलक्षणानि 'कर्माणि' असौ कस्यचित् सृजति, नच सुखाद्यात्मकैस्तत्फलैः संबन्धम् । अतस्तत्स्वरूपसमापन्नः कर्मयोगी तादृश एव भवतीति पूर्वश्लोकेन संगतिः । ननु यद्येवं यथोक्तस्वरूपमात्रनिष्ठत्वादीश्वरो न करोति, न कारयति; तत् कुतोऽयं जगद्व्यवहार इत्याह 'स्वभावस्तु प्रवर्तते' इति स्वभावशब्देन प्रकृत्यपरपर्याया मायाशक्तिरेव अचिन्त्यस्वरूपा उच्यते, सा प्रवर्तते अनन्तभावभेदोद्भूतविचित्रजगद्गन्धर्वनगरावभासनाय प्रसरति । सा हि वास्तवसर्वभावाभेदाख्यातिमात्रजीविता प्राक्प्रतिपादितया नियत्या सर्वमिदमाभासयति ॥ १४ ॥

एवमवभासमानमपि एतत् तत्त्वज्ञानदृशा परामृश्यमानं यथोक्तपरमात्मस्वरूपात् न व्यतिरिच्यते । ततः परमेश्वरस्य प्रतिनियतकार्यकर्तृत्वादिर्न वास्तवो धर्मः । तस्मात् मायाकृत एव बन्धमोक्षविभ्रमोऽयमिति प्रतिपादयितुमाह—

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**
**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

'विभुः' यथाप्रतिपादितस्वरूप ईश्वरो 'न कस्यचित्' जन्तोः परमार्थतः 'पापं' बन्धकारणभूतं कल्मषम् 'आदत्ते' अपहरति येन असौ जन्तुस्तदपहरणादपवर्गलक्षणं श्रेयः प्राप्नोति । नच मोक्षकारणं 'सुकृतं कस्यचिदादत्ते' येन असौ तदादानात् संसारबन्धलक्षणमश्रेयः प्राप्नोति । कस्तर्हि बन्धहेतुर्जन्तूनां मोक्षहेतुर्वेत्याह 'अज्ञानेन' पारमार्थिकपरमात्माभेदाप्रथनमात्रस्वरूपेण ज्ञानाभावेन मिथ्याज्ञानेन संतमसेन इव पदार्थस्वरूपं 'ज्ञानं' यथाप्रतिपादिततत्त्वप्रथनात्मको बोध 'आवृतं' संप्रति तिरस्कृतम् । 'तेन' हेतुना सर्वप्राणिनः 'मुह्यन्ति' शरीरादावात्मप्रतिपत्तिग्रहणलक्षणविपर्ययज्ञानमयदृष्टयो बन्धमनुभवन्ति ॥ 'येषां' पुनः 'तत्' यथाप्रतिपादितम् 'अज्ञानं' यथोक्तेन 'आत्मनः' ज्ञेयस्य तत्त्वस्य 'ज्ञानेन नाशितम्' अपध्वंसितं, 'तेषां' परमेश्वरानुग्रहात् यथोक्तकर्मयोगसंन्यासानुष्ठानाधिकृतानां योगिनां 'तत्' ज्ञानं 'परं' प्रकृष्टमुपेयं परमात्मस्वरूपलक्षणं वस्तु 'प्रकाशयति' प्रथयति । कथम् । 'आदित्यवत्' यथा आदित्यो भगवान् समयाभ्युदितः सन् दुर्निवारमपि सान्द्रमन्धकारं प्रभामात्रेण पर्यस्य दृश्यं वस्तु सर्वं निःसंशयतया प्रकटीकरोति, तथैव ज्ञानमीश्वरानुग्रहेच्छावसरोन्मिषितं सत् स्वरूपतिरोधानकारणमज्ञानं तिरस्करोतीति उपमानार्थः ॥ १५,१६ ॥

तदेवंविधं यत् परवस्तुप्रकाशकमज्ञानप्रध्वंसकं च ज्ञानं, तदभ्यासफलप्रतिपादनाय आह—

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धौतकल्मषाः ॥ १७ ॥

बुद्धिर्नानाभूतबोध्यवस्तुसाधनभूतं कारणं प्राधान्यात्, तया

समस्तः करणवर्ग उपलक्षितो बोद्धव्यः, आत्मशब्देन च बोद्धा पुरुष उच्यते इति । तत्र यथोक्ते ज्ञाने एव पर्यवसिता बुद्धिर्येषां, ते 'तद्बुद्धयः' तथा तत्रैव ज्ञाने आत्मा येषां, ते 'तदात्मानो' यथोक्तज्ञाननिष्ठाहंप्रतीतय इति सकललोकव्यवहारनिबन्धनं बुद्ध्यात्मलक्षणं द्वयमद्वैतज्ञानमयं येषां, ते तथाविधाः । तथा निष्ठाशब्देन परमोपेयवस्तुसीमा अत्र उच्यते, परायणशब्देन च तत्प्राप्त्युपायो विवक्षितस्तत् परोऽय्यते येनेति । तत् ज्ञानं यथोक्तं निष्ठा येषां, ते 'तन्निष्ठाः' तदेव परायणं येषां, ते 'तत्परायणाः' इति उपेयोपायलक्षणद्वयं योगिव्यवहारविषयं यथोक्तज्ञानात्मकमेव येषां, ते एवंविधास्तत्त्वज्ञाननिबन्धनसकलसंसारापवर्गविषयपदार्थसार्थाः, अत एवंविधेन ज्ञानेन निर्धौतं निःशेषेण प्रक्षालितमज्ञानरूपं कल्मषं पापं येषां, ते तथाविधा योगिनः 'अपुनरावृत्तिं गच्छन्ति' अभूयःसंभवं मोक्षमाप्नुवन्तीत्यर्थः ॥ १७ ॥

अथ ईदृशानां योगिनां सकललोकविलक्षणां चित्तवृत्तिं प्रतिपादयितुमाह—

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

विद्या शास्त्रं, विनयस्तदर्थानुष्ठानविषयो नियमविशेषस्ताभ्यां संपन्नः संबद्धो यो ब्राह्मणस्तस्मिंस्तथा गवादिषु तिर्यक्षु भयाहारमैथुनमात्रपर्यवसितसर्ववृत्तिषु तथा 'श्वपाके' मनुष्यभावेऽपि तिर्यक्प्राये 'पण्डिताः' यथोक्ततत्त्वज्ञानप्रबुद्धाः 'समदर्शिनः' समं सामान्यमेकमशेषविशेषणासंस्पृष्टस्वभावं चिन्मात्रं द्रष्टुं प्रतिपत्तुं शीलं येषां, ते तथाविधाः । किमनेन उक्तं भवति । ये समुज्जृम्भितदिव्यज्ञानचक्षुषस्ते मायोपहतदृष्टिभिर्नानात्वेन

परिदृश्यमानं समस्तं भावजातं ब्रह्मैकरूपतया नित्यमालोकयन्ति। नच एवं मन्तव्यं, यथा ते ब्राह्मणादौ विहितं समाचारं श्वपचादिषु प्रयुञ्जते, श्वपचादिषु विहितं ब्राह्मणादिष्विति विकर्मणि स्थिताः सन्तः पारमेश्वरीं जगद्व्यवस्थां व्युत्थापयन्ति। ते हि यथास्थितमेव जगद्भावविस्तारं ब्रह्मात्मकं पश्यन्ति, नतु व्युत्थानमाचरन्तीति ॥ १८ ॥

तामेव समदर्शितां विवृणोति—

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ १९ ॥**

यो 'ब्रह्मवित्' आगमतो यथोक्तब्रह्मतत्त्ववेदी 'स्थिरबुद्धिः' प्रबलैरपि विकल्पैरप्रकम्प्यमतिरत एव 'असंमूढः' हेयोपादेयवस्तुनोरसन्दिग्धबुद्धिः सन् तस्मिन् शास्त्राधिगते 'ब्रह्मणि' परमात्मनि 'स्थितः' सततपरिशीलनात् विश्रान्तः, स प्रियाप्रियप्राप्त्या प्रहर्षोद्वेगौ विषमदर्शित्वपिशुनौ संसारिपुरुषोचितौ न भजते। ततो ब्राह्मणगवादिषु 'पण्डिताः समदर्शिन' इति उक्तम् ॥ १९ ॥

ईदृशे च ब्रह्मणि स्थितिः सर्वथा बाह्यविषयपरिहारेणैव भवतीति केवलज्ञानवादिनां पक्षः। स पूर्वोक्तोपपत्त्या न संभवति, कथंचित् वा संभवन्नपि सच्छूल इति शास्त्रविहितविषयतयैव ब्रह्मणि स्थितिर्निर्विप्लवेति समुच्चयपक्षमेव निर्वाहयितुमाह—

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यः सुखम्।**
**स ब्रह्म योगयुक्तात्मा सुखमव्ययमश्नुते ॥ २० ॥**

'आत्मनि' परस्मिन् तत्त्वे स्वभावसिद्धं यत् 'सुखं' नित्यानन्दलक्षणो धर्मस्तत् 'बाह्यस्पर्शेषु' इदन्तावधार्येषु शब्दादिषु अविरुद्धेषु 'असक्तात्मा' सम्यग्ज्ञानवशादात्मैकनिष्ठत्वे सति अनिमग्नान्तःकरणो यो योगी 'विन्दति' उपलभते 'स योगयुक्तात्मा' योगे क-

र्मसमाधौ युक्तात्मा ज्ञाननिष्ठतया नित्यावहितान्तःकरणः 'सुखम्' अक्लेशेन 'अव्ययम्' विच्छिन्नं कृत्वा 'ब्रह्म' परमकारणम् 'अश्नुते' स्वात्मतया व्याप्नोति ॥ २० ॥

कथं बाह्यस्पर्शेषु आत्मवर्ति सुखं योगी न विन्दतीति प्रतिपादयितुमाह—

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २१ ॥**

हिशब्दो हेतौ । यस्मात् 'ये संस्पर्शजाः' शब्दादिविषयसंपर्कजन्मानो 'भोगाः' कामाः 'ते' जन्मविनाशयुक्तत्वादनित्याः सन्तः प्राप्तेषु सत्सु वियोगजस्य दुःखस्य अव्यभिचारादप्राप्तेषु च प्रार्थनात्मकस्य दुःखस्य अव्यभिचारात् 'दुःखयोनय एव' दुःखमेव ते जनयन्ति । ततः 'तेषु' भोगेषु 'बुधः' ज्ञानवान् 'न रमते' न प्रीतिमनुभवति । किमनेन उक्तं भवति । कर्मयोगी सत्यं संसारिपुरुषवदिन्द्रियैर्विषयान् भजते, नतु तज्जनितेन सुखेन असौ सुखितो भवति । स हि स्वाभाविकमात्मवर्ति सुखमनुभवतीति ॥ २१ ॥

बुधस्य एवंविधस्य एव योगित्वं च सुखित्वं च प्रतिपादयितुमाह—

**शक्नोतीहैव यः सोढुं प्राक् शरीरविमोचनात् ।**
**कामक्रोधोद्भवं वेगं स योगी स सुखी मतः ॥ २२ ॥**

'य इहैव' अस्मिन् शरीरे तिष्ठन् तदव्यभिचारविषयसंबन्धवशात् रागद्वेषादिजं संरम्भमात्मैकनिष्ठतया 'सोढुम्' अवधारयितुं देहत्यागादर्वागेव 'शक्नोति' प्रभवति 'स योगी' समाहितः । 'स च सुखी' निरुत्तरानन्दलक्षणसमाधिफलवान् । यतस्तत्त्वविदोऽन्ये हि केवलज्ञानवादिनो विषयेभ्यः पलायमाना योगमभ्यस्यन्ति । तेषामन्तरप्रेप्सुषु तेषु आततायिषु सत्सु इहैव देहे दुर्ल-

भो योगस्तत्फलं चेति यदि परं ते देहत्यागे तदवाप्स्यन्ति। यस्तु कर्मयोगी सत्सु एव विषयेषु अविलुप्तात्मस्थितिः; स जीवन्नेव मुक्त इति स एव योगी, स एव सुखीति उक्तम् ॥ २२ ॥

अत एव तत्स्वरूपमाह—

अन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स पार्थ परमं योगं ब्रह्मभूतोऽधिगच्छति ॥ २३ ॥

सुखं तत्तत्क्रियाफलभूता निर्वृतिः, आरम्यतेऽस्मिन्निति आरामः सुखानुभवाधिकरणं, ज्योतिस्तदुभयव्यक्तिहेतुः प्रकाशः, तत् त्रितयमपि अन्तरात्मनि एव यस्य स तादृशः सर्वत्र संवेद्यमाने वस्तुनि विगलितानात्मप्रत्ययोऽत एव 'ब्रह्मभूतो' ब्रह्म परमात्मस्वरूपं प्राप्तः 'परमं योगं' निरुत्तरं समाधिम् 'अधिगच्छति' प्राप्नोति ॥ २३ ॥

यस्मात्—

लभन्ते ब्रह्म निर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २४ ॥

ये महात्मानः 'छिन्नद्वैधाः' त्रुटितद्वैतप्रत्ययात्मकसंसारबन्धश्रृङ्खला यतः 'क्षीणकल्मषाः' विनष्टाखिलाज्ञानमयमहापातका 'ऋषयः' सम्यग्दर्शिनः, अत एव स्वरूपव्यतिरिक्तं वस्तुजातमपश्यन्तः, सर्वभूतानामात्मन इव हितेऽनुकूले वस्तुनि 'रताः' अभिनिविष्टास्ते 'निर्वाणं' तापत्रयेण असंस्पृष्टत्वात् प्रशान्तं 'ब्रह्म' परं तत्त्वं 'लभन्ते' प्राप्नुवन्ति, नतु ये व्यतिरिक्तत्वेन विषयान् मन्यमानास्तेभ्यः पलायन्ते । ते हि द्वैतबन्धादनिर्मुक्ता एव ॥ २४ ॥

एतदेव विशिनष्टि—

कामक्रोधविमुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम् ॥ २५ ॥

ये रागद्वेषादिदोषरहितत्वेन यतचेतसो निगृहीतान्तःकरणाः, नतु विषयवियुक्तत्वेन; तेषां 'विदितात्मनां' विज्ञातपरमकारणस्वरूपाणां मुख्यलक्षणयुक्तानां 'यतीनां' परमयोगिनां यथोक्तं 'निर्वाणं ब्रह्म अभितः' सांमुख्येन 'वर्तते' ॥ २५ ॥

ततो नैष्कर्म्ययोगिनः सकाशात् कर्मयोगिनो विशेषं प्रतिपादयितुमाह—

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २६ ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २७ ॥

'यः' एवंविधो 'मुनिः' यतिः सन् 'मोक्षपरायणः' मोक्षं परमेति तत्प्राप्तिकामः, नतु मुक्तो हेयोपादेयवस्त्वालम्बनचित्ततया रागद्वेषादिदोषावियोगात्; यस्य तु इच्छाभयक्रोधाः पूर्वव्याख्याता दुर्वाराश्चित्तदोषाः 'सदा' नित्यमेव निसर्गनिर्दोषस्वात्ममात्रप्रतिष्ठत्वात् विशेषेण अपुनरावृत्तिलक्षणेन गताः प्रध्वस्ताः, स तादृशः कर्मयोगी 'मुक्त एव' यतोऽस्य आत्मनः सामान्यसंविल्लक्षणा स्वभावशुद्धा शक्तिर्यदा मायावशात् स्वरूपाविमर्शिनी सती नानादेहाद्यहंप्रत्ययनिरुद्धा हेयोपादेयवस्त्वनुसारिणी विषयित्वमनुभवति, तदा रागादिदोषोपरक्तं चित्तमिति सैव उच्यते; यदा तु तैर्दोषैर्विद्यावशात् वियुज्यते, तदा नित्यानन्तनिरुपमनैर्मल्यैकलक्षणं स्वरूपं प्रतिपद्यमाना संविन्मात्ररूपैव अवशिष्यते । तदुक्तं

'चित्तमेव हि संसारो रागादिक्लेशदूषितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥'

इति । तदेवं सत्स्वेव विषयेषु रागादिदोषोन्मेषशून्यत्वात् परमात्मसमापन्नः कर्मयोगी जीवन्नेव मुक्तः । यस्तु एतद्व्यतिरिक्तलक्षण

एवंविधो योगी, स यदि परं मोक्षप्रवण एव; नतु मुक्तः। कीदृशः 'यतेन्द्रियमनोबुद्धिः' यतानि निगृहीतानि इन्द्रियाणि करणानि मनश्चित्तं संकल्पात्मकं बुद्धिरध्यवसायात्मिका येन स तादृशः। किं कृत्वा एवंविधः। 'बाह्यान्' ग्राह्यत्वेन व्यतिरिक्तान् शब्दादीन् 'स्पर्शान्' इन्द्रियैः स्पृश्यमानत्वात् स्पर्शशब्दवाच्यान् विषयान् 'बहिः कृत्वा'। इन्द्रियैरग्रहणेन चेतसो व्यतिरिच्येत्यनेन विशेषणेन इन्द्रियाणां विषयेभ्यः प्रत्याहारलक्षणं योगाङ्गं प्रतिपादितम्। तेन च पूर्वभावीनि आसनप्राणजयादीनि अङ्गानि आक्षिप्तानि। अन्यत् किं कृत्वा। 'भ्रुवोरन्तरे' भ्रूमध्ये 'चक्षुः' दर्शनशक्तिं कृत्वेत्यनेनापि धारणालक्षणं योगाङ्गमुक्तम्। भ्रूमध्यलक्षणे देशे तेजोमात्रालम्बनतया चित्तस्य बन्धो हि अनेन उक्तः। किंच 'नासाभ्यन्तरचारिणौ' नासायाः सव्यापसव्यनाडीद्वयात्मकस्य मुखावयवस्य अभ्यन्तरे चरितुं शीलं ययोस्तौ तथाविधौ प्राणापानसंज्ञौ शारीरौ मारुतौ 'समौ' यौगपद्येन तुल्यरूपतया वहनात् समानौ संपाद्येत्यनेन एकाग्रबुद्धिसंपाद्यं ध्यानलक्षणं योगाङ्गमुक्तम्। एकवस्त्वालम्बने हि अन्तःकरणे ध्यानसंपत्तिः, तद्बलात् विषुवद्वर्तिं प्राणापानौ समाश्रयत इति त्रिविधेन कर्मणा यतेन्द्रियमनोबुद्धिर्योगी प्रत्याहारधारणाध्यानपर्यन्तं योगाङ्गं कर्म प्राप्तो भवति, नतु बुद्धेरत्यन्ततिरोधानाभावात् समाधिमसावधिरूढः। स हि अस्य देहविमुक्तिं विना न सिध्यति आदेहस्थितेर्बुद्धिवृत्तिसंस्कारशेषस्य सत्त्वाभ्युपगमात्। एवं चित्तवृत्तिनिरोधलक्षणयोगाभ्यासनिष्ठस्य योगिनः सकाशात् सदा स्वरूपप्रतिष्ठसंवित्कर्मयोगी विशिष्टः प्रतिपादितः ॥ २७ ॥

स हि—

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २८ ॥

'मां' निर्वाणं ब्रह्मशब्देन उक्तमनुत्तरमुपेयं परमात्मानं 'ज्ञात्वा' आत्मत्वेन प्रतिपद्य 'शान्तिं' निःशेषविकल्पक्षोभविरतिलक्षणां निर्वृतिम् 'ऋच्छति' गच्छति मत्स्वरूपज्ञानादेव मुच्यत इत्यर्थः । कीदृशं मां ज्ञात्वा । 'यज्ञतपसां भोक्तारम्' इह नानायज्ञतपःप्रभृतयः क्रियाः शास्त्रेण अनुष्ठेयतया चोदिताः । तासामज्ञानमोहिता अनुष्ठातारः परस्परभिन्नमात्मानं तत्तत्फलभोक्तारं मन्यन्ते, परमार्थविदस्तु कर्तृभेदाभावात् सर्वक्रियाफलानामहमेवैकः कर्ता च भोक्ता चेति यज्ञतपसां भोक्तारम् । तथा 'सर्वलोकमहेश्वरं' सर्वस्य कस्यचित् जन्तुजातस्य क्रीडामात्रप्रयोजनतया स्वेच्छामात्रेणैव नानात्वेन अवभासितस्य महेश्वरं तासु तासु क्रियासु एकविनियोक्तृत्वात् परमं प्रभुं, तथा परमार्थतो भेदाभावात् सर्वेषां भूतानां 'सुहृदं' सर्वदा निसर्गनिर्दोषस्वात्ममात्रप्रतिष्ठितत्वात् न कस्यचित् द्विष्टं, नापि अनुरक्तम् । एवंविधं मां ज्ञात्वा मद्वदेव कर्मसु प्रवर्तमानः कर्मयोगी शान्तिं मुक्तिमाप्नोतीति पूर्वस्मात् योगिनो विशिष्टत्वमेव अस्य प्रतिपादितमिति ॥ २८ ॥

यत्रैकतां यमुनया गगनापगेव
संन्यासधीरुपगता सह योगबुद्ध्या ।
अध्यायमेनमभिगच्छत सर्वतीर्थ-
सारं प्रयागमिव पञ्चममात्मसिद्ध्यै ॥

**इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे पञ्चमोऽध्यायः ॥ ५ ॥**

---

## अथ षष्ठोऽध्यायः ।

आत्मज्ञानविहितकर्मसमुच्चयानुष्ठानरूपस्य सकलप्रकरणसिद्धान्तस्य प्रथमेन अध्यायेन प्रस्तावनामात्रमुपक्रान्तं, द्वितीयेन ज्ञानकर्मणोः स्वरूपमुपदर्शितं, तृतीयेन तयोरेव ज्ञानकर्मणोर्भिन्नानुष्ठातृविषयत्वभ्रान्तिरपाकृता, चतुर्थेन एवंविधसमुच्चयानुष्ठानरूपस्य योगस्य परस्मात् कारणात् प्रवृत्तिरुपदर्शिता, कर्मणश्च नानारूपत्वं; पञ्चमेन ते एव ज्ञानकर्मणी संन्यासयोगाविति प्रदर्शितम् । इदानीं तयोर्ज्ञानकर्मणोः समुच्चयेन अनुष्ठातव्यतया उपदिष्टयोः किं सर्ववर्णाः सर्वाश्रमिणश्च अधिक्रियन्ते, उत नियताः केचनेति संशयनिरासार्थं सर्वसाधारण्यमस्य प्रतिपादयितुमध्यायान्तरेण आह—

श्रीभगवानुवाच

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥**

'कर्मफलं' तस्य तस्य कर्मणो यज्ञादेः क्रियमाणस्य फलं स्वर्गादिभोगात्मकम् 'अनाश्रितः' अनभिसन्धानादनालम्बितः सन् 'यः' पुमान् 'कार्यं' शास्त्रेण कर्तव्यमिति वर्णाश्रमनियमेन चोदितं 'कर्म करोति' अनुतिष्ठति 'स संन्यासी' त्यागवान् 'योगी च' समाहित उच्यते । तेन सर्ववर्णाः सर्वाश्रमिणश्च अत्र मोक्षफलसमुच्चयानुष्ठानेऽधिकृता इति उक्तम् । कर्मफलानभिसन्धानमात्रं च संन्यासलक्षणं, तद्वच्च विहितकर्मानुष्ठानं च योग इति संग्रहेण सकलप्रकरणप्रतिपाद्योऽर्थः सिद्धान्तीकृतः । ततश्च यथाप्रतिपादितात्मज्ञानैकतानान्तःकरणतया व्यतिरिक्तसुखात्मकफलनिरभिकाङ्क्षः सन् रागादिदोषनिर्मुक्तस्वभावत्वादधिकारका-

लात् प्रभृति प्रस्तुतं कर्म योऽनुतिष्ठति, स ब्राह्मणोऽस्तु क्षत्रियो वैश्यः शूद्रो वा ब्रह्मचारी गृहस्थो वानप्रस्थो यतिर्वा, स एव 'संन्यासी योगी च' भवति; 'न' पुनः 'निरग्निः' एव 'अक्रियः' एव वा। निरग्न्यक्रियशब्दाभ्यां ब्रह्मचारी यतिश्च लक्ष्यते। यतः केचित् अनयोरेव आश्रमयोरपर्यालोचितपरमार्थत्वात् नैष्कर्म्याभिमानिनो हेतुत्वं मन्यमाना ब्रह्मचारियत्योरेव संन्यासितां योगितां च प्रतिजानते। यो हि ब्रह्मचर्यादेव परिव्राजकधर्ममाश्रितः, स दारपरिग्रहाभावादनाहिताग्निः सन् मूलादेव परिहृतयज्ञादिक्रियो ब्रह्मचारी एकः संन्यासी च योगी च तेषां मतः; यो वा आश्रमत्रयानुष्ठिताः स्वाध्याययागदानाध्यापनयाजनप्रतिग्रहादिकाः सकलाः क्रियाः परित्यज्य निराशिषमाश्रममाश्रितः, स यतिर्द्वितीयः संन्यासी योगी च तेषां मतो द्वयोरपि अनयोरेव बन्धहेतूनां क्रियाणां त्यागे सति मोक्षफलभागित्वात्॥ १॥

तदेतत् केवलज्ञानवादिमतमनुपपन्नमेवेति प्रतिपादयितुमाह—

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन॥ २॥

एते ज्ञानमात्रवादिनः संन्याससंज्ञया नैष्कर्म्यरूपं 'यम्' अर्थं कथयन्ति 'तं योगं' कर्मानुष्ठानमेव त्वं जानीहि। यस्मात् संन्यासं विना योगस्तेषु नास्ति, किन्तु स संन्यासः संकल्पस्य फलाभिलाषस्य एव उपपद्यते, नतु कर्मणः सर्ववर्णेषु सर्वाश्रमेषु च कर्माविरहात्। यौ किल यतिब्रह्मचारिणौ परिव्राजकौ कर्मत्यागित्वेन अभिमतौ, तौ गृहस्थवानप्रस्थोचितं कर्म त्यजतः; स्वं तु यतित्वादिसिद्धिकारणं कंचित् कर्मविशेषमनुतिष्ठत एव। यथेष्टाचरणे हि तयोर्विकर्मस्थतैव पर्यवस्यति। तस्मात् संकल्पमात्रसंन्यासित्वात् संन्यासित्वं सिध्यतीति योगी यः सर्वदा सर्वथा स्वानन्दामृतनित्य-

तृप्तपरमात्मलक्षणे ब्रह्मणि प्ररूढाहंप्रत्ययतया संन्यस्तकर्मफलसंकल्पः, स योगी कर्मणि समाधिमान् भवति, न अन्य इति ॥

यथोक्तयोः संन्यासयोगयोरेकपुरुषानुष्ठातृनिष्ठयोः सर्वे वर्णाः सर्वाश्रमिणश्च अधिकृता अनेन श्लोकेन प्रतिपादिताः, किन्तु अनुष्ठातुर्यथोक्तयोगविषया आरुरुक्षावस्था च संभवतीति तत्कृतं तस्य भेदं प्रतिपादयितुमाह—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

'मुनेः' झगिति प्राप्तमात्रज्ञानत्वात् मनननिष्ठस्य अनुष्ठातुर्यथोक्तं 'योगमारुरुक्षोः' आरोढुकामस्य तत्र निर्विघ्नवां प्रतिष्ठां लिप्समानस्य 'कर्म' वर्णाश्रमक्रमागता सा सा क्रिया 'कारणं' योगारोहहेतुः । 'तस्यैव' तथाविधस्यैव कारणभूतं कर्म अजहत एव

'पश्यञ्शृण्वन् स्पृशञ्जिघ्रन्...............' ( ५।८ )

इत्यादिना पूर्वोपदिष्टनिर्व्यवधाननित्याभ्यासवशात् 'योगारूढस्य' योगे लब्धप्रतिष्ठचित्तत्वे परमात्मसमापन्नस्य 'शमः' संकल्पविकल्पक्षोभक्षयः 'कारणं' प्रयोजकं निमित्तम् । किमुक्तं भवति । आगममात्रेण प्राप्तोपदेशस्य प्राथमकल्पिकस्य योगिनो योगप्रतिष्ठालाभोत्सुकस्य अपि तत्प्राप्तिकारणं कर्मैव उपेयतया वर्तते । तस्मिंश्च श्रद्धादराभ्यां सम्यगनुष्ठिते, ज्ञाने च प्रसादकाष्ठां प्राप्ते तत्कर्म अत्यजत एव शमः परमोपेयत्वात् कारणं संपद्यते ॥३॥

अत एव प्रशान्तस्य योगारूढस्य लक्षणमाह—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

'यदा हि' यस्यामेव अवस्थायां 'इन्द्रियार्थेषु' अविरुद्धेषु विषयेषु इन्द्रियैः स्पृश्यमानेषु अपि 'कर्मसु' वा तत्प्राप्तिहेतुषु यज्ञतपःप्रभृ-

तिषु क्रियमाणेषु अपि 'नानुषज्जते' सहजानन्दतृप्तत्वात् न आसक्तिं भजते, केवलं पवन इव पदार्थजातं स्पृशन्नपि स्वभावव्योमप्रतिष्ठ एव भवति; 'तदा' सर्वेषां संकल्पानां फलाभिसन्धीनां संन्यासित्वात् त्यागित्वात् 'योगारूढः' योगे कर्मसमाधावारूढो लब्धप्रतिष्ठः 'उच्यते'। तदेवंविधस्य परमप्रशान्तब्रह्मसमापत्तिकारणस्य योगारूढत्वस्य न आत्मव्यतिरेकेण बाह्यं किञ्चित् साधनं भवितुमर्हति ॥ ४ ॥

अतः—

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥
बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अजितात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥
जितात्मनः प्रशान्तस्य परात्मसु समा मतिः ।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७ ॥

दुर्वारद्वैतप्रत्ययपवनपरिक्षोभितभीषणविकल्पकल्लोलसहस्रसंकुलापारगम्भीरभवसागरनिमग्नम् 'आत्मानं' स्वभावम् 'आत्मनैव' यथोक्तज्ञानोपदेशप्रत्युदितोत्साहेन 'उद्धरेत्' यथोक्तयोगलक्षणं तीरदेशमारोपयेत्, नतु एनं विस्मृतस्वबलतया उपेक्षितं तत्रैव 'अवसादयेत्' मज्जयेत्। यतोऽस्य उद्धरणावसादहेतुतया उपकारी प्रतिकूलश्च 'आत्मैव' न अन्यः । कथमित्याह 'तस्य' पुरुषस्य संबन्धिनः 'आत्मनः' 'आत्मैव' स्वभाव एव 'बन्धुः' सर्वापत्प्रतीकारकृत् स्वजनः । यदुक्तं

'आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् ।
कोऽन्यो हिततरस्तस्माद्य एनं वारयिष्यति ॥'

इति। कस्य आत्मैव बन्धुः। 'येन' पुरुषेण स 'आत्मा' स्वस्वभावः

'आत्मनैव' ज्ञानामृताभ्यवहाराभ्यासलब्धबलेन 'जितः' प्रविमर्शगोचरापादानात् वशीकृतः । येन तु असावात्मा प्रमातृपरेण सता उपेक्षितः सन् न जितो न वशीकृतः, तस्य तथाविधस्य अयं 'शत्रुत्वे' सर्वेच्छाव्याघातकारित्वे वर्तते । तथाच उक्तं

'न तत्कुर्यादसिस्तीक्ष्णः सर्पो वाथ विषोल्वणः ।
अरिर्वा नित्यसंक्रुद्धो यदात्मा दुरधिष्ठितः ॥'

इति । यथोक्तस्य आत्मजयस्य फलमाह—जितो यथोक्तेन प्रकारेण वशीकृत आत्मा येन तस्य 'जितात्मनः' अत एव 'प्रशान्तस्य' स्वस्वभावनिर्दोषपरमात्मसमापत्तिवशात् निवृत्तविकल्पविप्लवस्य परेषु व्यतिरिक्तत्वेन प्रतिपन्नेषु सर्वदेहिषु तथा आत्मनि अहन्ताप्रतीयमाने तुल्या सामान्यसंविदेकस्वरूपग्राहिणी 'मतिः' भवति; तथा 'शीतोष्णसुखदुःखादिषु' बाह्याभ्यन्तरनिमित्तजेषु द्वन्द्वोपप्लवेषु, तथा परेण प्रयुज्यमाने माने पूजायां, तथा अवमाने पराभवे तथैव समाना मतिर्भवति । न तस्य सर्वगतादेकस्मात् स्वभावनिर्विकारात् परमात्मनोऽहंप्रतीतिर्व्यतिरिच्यते, नानाविधेषु विकारकारणेषु उपस्थितेषु अपि तस्य सत्ये स्वात्मनि अनुसन्धानं लोकवत् न विच्छिद्यते इत्यर्थः ॥७॥

स च एवंविधो योगारूढ उच्यते इत्याह—

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥**

ज्ञानं शास्त्रतः स्वरूपावगममात्रं, विज्ञानं शास्त्रावगतस्य तत्त्वस्य साक्षात्कारः, ताभ्यां तृप्तो निराकाङ्क्षः आत्मा स्वभावो यस्य स तथा, अत एव 'कूटस्थः' प्राप्तपरमार्थसत्त्वनित्यात्मप्रत्ययत्वात् कूटस्थः शैलादिवत् निष्प्रकम्पो यतो 'विजितेन्द्रियः' वशीकृतबाह्यान्तःकरणः, नतु तद्वशः; एवं लोभादिदोषरहितत्वात्

समौ लोष्टाश्मानौ मृत्पिण्डपाषाणौ काञ्चनं च हेम यस्य, स तथाविधो 'युक्तः' योगारूढ 'उच्यते' ॥ ८ ॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

यस्य सुहृदरिप्रभृतिषु प्रीतिद्वेषहेतुषु नानाविधेषु अन्योन्यभिन्नरूपेषु जन्तुषु समा ब्रह्मलक्षणनिर्विशेषैकतत्त्वदर्शित्वादेकरूपा बुद्धिः, स 'विशिष्यते' नैष्कर्म्ययोगिनः सकाशात् प्रकर्षं लभते । स हि यत् वस्तु समाधिप्रतिपक्षत्वात् परिहरति, यच्च तदानुगुण्यात् स्वीकुरुते, ताभ्यां द्वेषप्रियाभ्यां द्वेषरागदोषौ प्रकाश्येते । यस्तु सर्वसाम्यं प्राप्तः, स क्रियासु वर्तमानोऽपि समबुद्धित्वात् ब्रह्मभूत एवेति विशिष्यत इति उक्तम् । सुहृदादीनां भेदो व्याख्यायते— सुहृत् यः स्वभावतः शोभनहृदयः, मित्रं मैत्रीकरणनिर्वृत्तसौहृदम्, अरिः शत्रुः कारणवशात् द्वेष्टा, द्वेष्यस्तु विनापि कारणमप्रियः, उदासीनः न मित्रं न शत्रुः, मध्यस्थो यः केनापि प्रकारेण मित्रत्वममित्रत्वं च आश्रयितुमर्हति, बन्धवो ज्ञातयः, साधवः शास्त्रोदितसदाचारनियताः, पापास्तद्विपरीता दुष्टाचारसंकल्पाः । तेषु सर्वेषु समबुद्धित्वमस्य कर्मयोगिन एव बोद्धव्यम्—यत् शत्रुभावं प्रतिपन्नेषु शास्त्रचोदितत्वात् न्याय्यवधादिकर्मप्रवृत्तावपि निर्विकारैकात्मनिष्ठत्वम्, नतु शत्रौ शास्त्राविहितत्वादन्याय्या मित्रप्रवृत्तिः । यद्येवमभविष्यत्, तत् तत्र आत्मज्ञानमर्जुनस्य उपदिश्य 'तस्माद्युध्यस्व' इति उपसंहारे न अभ्यधास्यत । तस्मात् कर्मयोगिनस्तत्र तद्वर्णाश्रमक्रमागतां तां तां शास्त्रचोदितां क्रियामनतिक्रमत एव सर्वभावसाम्यभावना अत्र विवक्षिता ॥ ९ ॥

अत एव आह—

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १० ॥**

'इहैव' अस्मिन्नेवंविधक्रियाकारिणि शरीरे वर्तमानैः 'तैः सर्गः' पुनर्भवो 'जितः' अधःकृतः, 'येषां' यथाप्रतिपादिते 'साम्ये' सर्वभावाभेदे 'मनः' चित्तं 'स्थितं' लब्धप्रतिष्ठम् । 'ब्रह्म' एकं हि वैषम्यकारणभूतरागादिरहितत्वात् 'निर्दोषम्' अतस्तदेव 'समं' सर्वथा सर्वदा सर्वत्र विशुद्धसंविन्मात्रैकस्वरूपम् । 'तस्मात्' ये साम्ये स्थिताः 'ते ब्रह्मणि एव स्थिताः' इति उक्तम् ॥ १० ॥

यथोक्तसाम्यानतिक्रमसमाहितस्य चित्तवृत्तिनिरोधलक्षणमपि योगमितरक्रियावदहोरात्रमध्ये व्यवस्थिताभ्यासकालं विशिष्टेतिकर्तव्यतान्वितमपि कर्मयोगिनः श्लोकषट्केन अभ्यनुजानन्नाह—

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ ११ ॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ १२ ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १३ ॥
समं कायशिरोग्रीवं धारयन्नचलः स्थिरः ।
संपश्यन् नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १४ ॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १५ ॥
युञ्जन्नेवं सदात्मानं मद्भक्तोऽनन्यमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १६ ॥

क्रमेण एतत् व्याख्यायते । 'योगी' प्रबन्धप्रतिपादितप्रतिपादयिष्यमाणस्वरूपेण प्रस्तुतव्याख्यानयोगान्तरविलक्षणपरिकर्मणा सर्वकालदेशाविरोधिना समाधिविशेषनिरपेक्षेण समस्तान्तर्बहि-

ष्करणप्राणवृत्तिषु अपि अनिरुद्धप्रसरेण कर्मयोगेन योगवान् शास्त्रविहितत्वात् 'आत्मानम्' अन्तःकरणं जीवात्मानं वा 'सततं' प्रत्यहं व्यवस्थापितनियतकालानतिक्रमेण 'रहसि' ऐकाग्र्यबाधकरहिते देशे 'स्थितः' यत 'एकाकी' केवलः 'यतचित्तात्मा' यतं विनिगृहीतं चित्तं मनो येन तादृश आत्मा क्षेत्रज्ञो यस्य, स तथाविधः सन् परमात्मनि समादधीत चित्तवृत्तिनिरोधलक्षणमपि योगमनुतिष्ठेदित्यर्थः; किन्तु 'निराशीः' आशिषः फलाशंसातो निष्क्रान्तो मोक्षलक्षणेऽपि फले प्रार्थनादैन्यरहितः, तथा 'अपरिग्रहः' सर्वत्र ममत्वाभिमानरहितः, तथा मच्चित्तत्वादिवक्ष्यमाणधर्मयुक्तो 'युञ्जीत' इत्यनेन कर्मयोगसमाधानाप्रमत्तेन अयं योगोऽभ्यसनीय इति उक्तम् । अस्य इदानीं परिकर्म अभिधीयते। किं कृत्वा युञ्ज्यात्। आत्मनः 'शुचौ देशे' यत्याद्यपेक्षया पुण्यसरित्परिसरगिरिगुहादौ, गृहस्थापेक्षया सूपलिप्तविविक्तसदनादौ विशुद्धे स्थाने 'आसनं' समाधिविष्टरं 'प्रतिष्ठाप्य' स्थितिं प्रापय्य । कीदृशम् । 'स्थिरं' निश्चलं तथा सुखित्वार्थमुच्छ्रायनिम्नत्वातिशयरहितं, तथा चैलं वस्त्रं, अजिनं मृगादिचर्म, कुशा दर्भाः, तदुत्तरं तत्प्रधानम् । तेन गृहस्थस्य चैलाजिनोत्तरम्, यत्यादेः कुशोत्तरम्, एवं 'तत्र' स्थिरसुखे 'आसन उपविश्य' 'एकाग्रं' ध्येयत्वेन परिगृहीतैकवस्तुनिष्ठं 'मनः' चित्तं 'कृत्वा' अत एव 'यतचित्तेन्द्रियक्रियः' यता निषिद्धबहिष्प्रसराश्चित्तेन्द्रियाणां मनसोऽक्षाणां च क्रियाः संकल्पविकल्पशब्दादिग्रहणरूपाणि कर्माणि येन, तथाविधः सन्; 'योगं' चित्तवृत्तिनिरोधात्मकं 'युञ्ज्यात्' समादधीत । किमर्थम् । 'आत्मविशुद्धये' आत्मनोऽन्तःकरणस्य बाह्योपरागलक्षणमलक्षालनाय क्षेत्रज्ञस्य वा देहाद्यहंप्रत्ययरूपकलङ्कपरिमार्जनाय । एवं चित्तसमा-

धानमभिधाय तत्साधनभूतं कायसंस्थानमाह । कायः कण्ठादधः शरीरं शिरो मूर्धा ग्रीवा कन्धरा 'कायशिरोग्रीवं' तत् 'समम्' अवक्रमृजु 'धारयन्' बिभ्रत्, तथारूपोऽपि 'अचलः' निष्प्रकम्पोऽङ्गमेजयत्वादिचित्तविक्षेपकारणरहितः 'स्थिरः' तथा 'स्वं नासिकाग्रं' घ्राणप्रान्तं 'संपश्यन्' अत एवच 'दिशः' काष्ठा 'अनवलोकयन्' अप्रेक्षमाणः । दिक्षु दृग्विक्षेपपरिहारार्थं नासिकाग्रसंदर्शनमुक्तम्, नतु तत् लक्ष्यीकर्तव्यमिति अभिप्रायः । इत्थं विहितसमस्तसमाधिपरिकरस्य परमात्मसमापत्तिलक्षणमोक्षप्राप्तिहेतुं विशेषणं प्रतिपादयितुमाह 'प्रशान्तात्मा' प्रशान्तः सन्देहादिविकल्पक्षोभरहित आत्मा अन्तःकरणं यस्य स, तथा सर्वात्मत्वमवगम्य सर्वतश्चराचरभूतजातात् 'विगतभीः' निवृत्तसाध्वसः; तथा 'ब्रह्मचारिव्रते स्थितः' ब्रह्मचारिणः कामसंकल्पवर्जनं व्रतं तस्मिन् स्थितः, इति सर्वार्थविषयप्रार्थनारहितत्वमनेन विशेषणेन उक्तम् । इत्थं 'मनः संयम्य' सर्वतश्चित्तं निगृह्य मय्येव परमात्मनि एकस्मिन् तत्त्वे चित्तं संवेदनं यस्य स तथाविधो 'युक्तः' समाहितः सन् 'मत्परः' तथाविधात् योगादनन्यविषयमना 'आसीत' तिष्ठेत् । 'एवम्' एतद्विशेषणविशिष्टः 'सदा' प्रत्यहम् 'आत्मानम्' अन्तःकरणं 'युञ्जन्' समादधानः सन् 'मद्भक्तः' मामेव आत्मत्वेन समाश्रितोऽत एव 'अनन्यमानसः' अन्यस्मिन् विषयान्तरे न यस्य मानसं मद्युक्त इति पाठे तु मय्येव युक्तो मत्समापत्तिमेव समाधिफलत्वेन प्रतिपन्नः सन् 'मत्संस्थां' मयि वर्तमानां 'शान्तिं' स्वाभाविकसर्वविकाररहितत्वलक्षणं प्रशमम् 'अधिगच्छति' स्वीकुरुते । कीदृशीं शान्तिम् । 'निर्वाणपरमां' निर्वाणं शरीरादावनात्मनि आत्मप्रत्ययादिक्षोभविरतिरूपा निर्वृतिः परमं प्रकृष्टफलतया स्थितं यस्यां सा तथोक्ता ताम् ॥ १६ ॥

इत्थमस्य योगस्य कर्मसमाधिलक्षणमहायोगात् निर्वर्तिनो यथोक्ताद्वैतात्मज्ञाननिष्ठतया अनुष्ठेयतया अभ्यनुज्ञातस्य अन्यदपि परिकर्म प्रतिपादयितुमाह—

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १७ ॥**
**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १८ ॥**

एष यथोक्तो 'योगः' एवंविधस्य अनुष्ठातुः 'नैव अस्ति' नैव संभवति। कीदृशस्य। अत्यर्थमश्नतः सौहित्यपर्यन्तं भुञ्जानस्य, तथा 'एकान्तं' सर्वथानश्नतः 'अपि नास्ति' तथा 'अतिस्वप्नशीलस्य' नित्यं निद्रारतस्य, तथैव सदा 'जाग्रतः' उन्निद्रस्य अपि। अत्यशनात् हि कायगौरवशूलाभिष्यन्दादयो दोषाश्चित्तमकर्मण्यं संपादयन्ति, अत्यन्तानशनाच्च धातुक्षयादयः शक्तिहानिमावहन्ति, अतिस्वप्नादालस्यादय उद्योगभङ्गमत्यन्तनिद्रापहारादजीर्णादयो दौर्मनस्यादिकमापादयन्ति॥ अतो 'युक्ताहारविहारस्य' युक्तो हितमात्रकालावच्छिन्नत्वादुपपन्न आहारो भोजनं विहारश्चङ्क्रमणादिर्यस्य तादृशस्य, तथा 'कर्मसु' दृष्टादृष्टविषयेषु व्यापारेषु युक्ता चित्तशरीरानवसादित्वपर्यवसायिनी चेष्टा मनःकायव्यापारो यस्य तस्य तादृशस्य, तथा युक्तौ यथाकालभावित्वात् न्याय्यौ स्वप्नबोधौ निद्राजागरौ यस्य, तस्य तादृशस्य योगिन एष 'योगो दुःखहा भवति' अभ्यस्यमानः क्लेशं हन्ति सुखेन संपद्यते इत्यर्थः॥१८॥

एवमाहारविहारनियममुक्त्वा सिद्धिलक्षणं योगमाह—

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १९ ॥**

'यदा, अस्य योगिनः समाध्यभ्यासकाष्ठां प्राप्तस्य 'चित्तं वि-

नियतं' निगृहीतं सत् सम्प्रज्ञातसमाधिभूमिका वितर्कविचारानन्दास्मितानुगता अतिक्रान्तं सत् स्थूलसूक्ष्मेषु ध्येयेषु लब्धसंयमत्वात् तानि त्यक्त्वा एकस्मिन् ध्येये 'आत्मन्येव' स्वभाव एव 'अवतिष्ठते' अवस्थितिं प्रतिष्ठां संयमं लभते, 'तदा' तस्यां दशायामात्मैकारामत्वात् सर्वेभ्यो व्यतिरिक्तेभ्यो भोगेभ्यः स्पृहारहितो निरभिकाङ्क्षः सन्नसौ 'युक्तः' सम्पन्ननिर्बीजसमाधिः 'इति उच्यते' ॥ १९ ॥

तस्य आत्मध्याननिष्ठस्य योगिचित्तस्यैव योगशब्दवाच्यस्य उपमानमाह—

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनि ॥ २० ॥

'आत्मनि' निरुत्तरे ध्येये 'योगं' समाधिं युञ्जानस्य 'योगिनः' सर्वतः प्रत्याहृतत्वात् यतं निगृहीतं चित्तं येन तादृशस्य, 'सा उपमा' तदुपमानं तत्त्वज्ञैः 'स्मृता' । 'यथा दीपः' प्रद्योतको निवृत्तवातदेशे स्थितः सन् 'नेङ्गते' न प्रकम्पते, तथैव आत्मालम्बने समाधौ स्थितं योगिचित्तं न प्रकम्पते इति उपमेयवाक्यमध्याहार्यम् । अनेन दीपोपमानेन प्रत्यासन्नप्रबलविपक्षत्वात् यत्नसंरक्षणीयत्वं योगिचित्तस्य प्रतिपादितम् ॥ २० ॥

अथास्य परस्य योगस्य लक्षणमाह—

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २१ ॥
सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २२ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २३ ॥

तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २४ ॥

'तं योगसंज्ञितं' समाध्याख्यमर्थं 'विद्यात्' जानीयात् । कं तम् । 'यत्र' यस्मिन् 'निरुद्धं' निवृत्तबहिष्प्रचारतया नियमितं यत् चित्तं 'योगसेवया' योगस्य समाधेः प्राप्यस्य अन्यस्य सेवया सेवनादाश्रयणादुपलब्धपरमोपेयत्वात् तत्रैव विश्रान्तं सत् योगान्तरविषयं प्रयत्नमुत्सृजति, तस्यैव योगस्य निरुत्तरत्वात् । अत एव तस्यामवस्थायां योगी 'यत्र आत्मनैवात्मानं पश्यन्' स्वसंवेदनेन स्वरूपमनुभवन् 'आत्मनि' स्वभावे एव अधिकरणभूते 'तुष्यति' परां प्रीतिं प्रतिपद्यते, तं योगं विद्यादिति सम्बन्धः । तदानीं हि निवृत्तसकलबाह्योपरागं चित्तमात्मसमापन्नं सत् शुद्धसंवेदनलक्षणतद्धर्मत्वेन अवतिष्ठते । तथा 'यत्र आत्यन्तिकम्' अनन्तं निरुपमस्वरूपानुभवचमत्कारमयं 'सुखं' सहज आनन्दोऽभिव्यज्यते । कीदृशं सुखम् । 'अतीन्द्रियं' श्रोत्रादीनि बाह्येन्द्रियाणि अतीतमतिक्रान्तम् , अत एव 'बुद्धिग्राह्यं' बुद्ध्या तात्कालिक्या बोधलक्षणया, आत्मनः स्वशक्त्यैव ग्राह्यं संवेद्यम् 'अयं' योगी 'वेत्ति' जानाति, तं योगं विद्यात् । तथा 'यत्र स्थितः' यस्मिन् लब्धविश्रान्तिरयं योगी 'तत्त्वतः' परमात्मरूपात् परमार्थात् 'न च्यवते' न वियुज्यते । तथा 'यं' योगमासाद्य 'ततोऽधिकं' तस्मादुत्कृष्टम् 'अपरम्' अन्यं 'लाभम्' इष्टप्राप्तिं योगी 'न मन्यते' न बुद्ध्यते । अत एव प्रागुक्तं—यत्र स्थितस्तत्त्वतो न च्यवत इति । अत एव 'यस्मिन् स्थितः' संरूढो निवृत्तेतरव्यापृतिः सन् योगी 'गुरुणापि' प्रबलेनापि केनचिन् मानसेन शारीरेण वा 'दुःखेन न विचाल्यते' न ततो व्युत्थाप्यते, तं योगसंज्ञितमर्थं विद्यात् । कीदृशम् । 'दुःखसंयोगवियोगं' दुःखं विषयेषु इन्द्रियप्रवृत्तिजनितो

राजसः क्लेशः, तेन संयोगः संसारिदशायां सम्बन्धः, तस्मात् वियोगो विरहस्तं, हेयवस्तुप्रार्थनाजन्मना दुःखेन सम्बन्धाभाव एव वियोग इत्यर्थः । 'स' एवंलक्षणो 'योगः' परः समाधिर्निरुत्तरानन्दलाभलक्षणमहाबलहेतुः 'निश्चयेन' निःसन्देहत्वेन 'अनिर्विण्णचेतसा' अनुद्विग्नमनसा 'योक्तव्यः' समाधातव्यः । अलब्धभूमिकस्य हि योगिनः प्रथमं सन्देहः, आरुरुक्षतश्च अभ्यासदशायां क्लेशः सम्भाव्यते इति निश्चयेन अनिर्विण्णचेतसा स योक्तव्य इति उक्तम् ॥ २१–२४ ॥

एवं बाह्यविषयपरिहारक्रमेण चित्तवृत्तिनिरोधलक्षणां समाधिसिद्धिमभिधाय पुनरपि प्रकृतकर्मयोगक्रममेव समाश्रयन् तत्सिद्धिं प्रदर्शयितुमाह—

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २५ ॥
शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ २६ ॥
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २७ ॥
प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २८ ॥
युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति ॥ २९ ॥

क्रमेण एतत् व्याख्यायते । 'शनैः शनैः' उत्तरोत्तरविशेषारोहणक्रमेण, नतु सहसैव 'उपरमेत्' बाह्येषु विषयेषु आसङ्गात्, तथा देहादावात्माभिमानात् निवर्तेत । केन साधनेन । 'बुद्ध्या' सम्यग्ज्ञानेन । कीदृश्या । 'धृतिगृहीतया' धृतिः परमात्मनि

अहंकारावष्टम्भलक्षणं धैर्यं तया गृहीता स्वीकृता या बुद्धिस्तया तादृश्या। सात्त्विकी हि धृतिर्या बुद्धिं धारयति, सा अत्र योगे साधनत्वमर्हति, यस्या धृतेर्लक्षणं वक्ष्यति—

'धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः ।

योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥' (१८।३३)

इति । पूर्वं किं कृत्वा उपरमेत् । 'मनसैव' परेण मोक्षविषयेणैव चेतसा प्राक् स्थावरसंज्ञया उक्तेन 'संकल्पप्रभवान्' विषयग्रहणव्यग्रजङ्गममनःसमुत्थान् 'सर्वान्' दृष्टानुश्रविकभेदेन समस्तान् तथा प्रत्येकमशेषानविद्यमानसंस्कारमात्रान् 'कामान्' भोगान् 'त्यक्त्वा' परिहृत्य तथा तेनैव मनसा, नतु विषयविषयेण 'इन्द्रियग्रामं' करणवर्गं 'समन्ततः' सर्वेभ्यो विहितेभ्योऽपि शब्दादिभ्यो 'विनियम्य' रागादिदोषपरिहारात्मना विशेषेण निगृह्य, इत्यनेन प्रस्तुतसमुच्चयानुष्ठानसाध्यकर्मयोगविषयं कामत्यागस्य इन्द्रियनियमस्य च पूर्वोक्तं क्रममेव स्मारयति । एवमनेन क्रमेण 'आत्मसंस्थं' मुख्ये आत्मनि ब्रह्मापरनाम्नि सम्यक् स्थितं लब्धविश्रान्ति 'मनः'अन्तःकरणं 'कृत्वा' सम्पाद्य तद्व्यतिरिक्तं वस्त्वन्तरं न किञ्चिद् ध्यायेत् । तदानीं हि सर्वं ब्रह्मरूपतयैव प्रकाशते । एवंविधेन अभ्यासक्रमेण 'यतो यतो' यस्मात् यस्मात् कुतश्चिद्बन्धनभूतात् आभ्यन्तराद् बाह्याच्च 'मनः' चेतो 'निश्चरति' निर्गच्छति, 'ततस्ततः' तस्मात् तस्मात् नियम्य 'प्रतिषिध्य' 'आत्मनि' परमकारण एव 'वशं नयेत्' तत्रैव निबध्नीयात् । यतः स्वभावत एतत् 'चञ्चलं' चपलं तथा प्रार्थितेऽपि विषये न चिरमवतिष्ठते इति 'अस्थिरम्' यस्मात् तस्मिन्नात्मवशं नीते सति 'एनं' योगिनं 'प्रशान्तमनसं' विषयसुखौन्मुख्यक्षोभविरतिनिर्वृतचेतसं सन्तं स्वयमेव 'उत्तमं' नित्यनिरवद्यस्वभावत्वादुत्कृष्टं 'सुखं' सहज आनन्दः 'उपैति'

उपगच्छति। कीदृशं योगिनम्। 'शान्तरजसं' शान्तं विलीनं रजो विषयप्रवृत्तिहेतुर्गुणो यस्य, अत एव 'ब्रह्मभूतं' परमात्मसमापन्नं यस्मात् 'अकल्मषम्' अविद्यमानाज्ञानलक्षणकिल्विषकलङ्कम्। एवमनेन यथोक्तेन क्रमेण पूर्वमेव प्रबन्धप्रतिपादितेन 'नियतमानसः' सम्प्रयतान्तःकरणो 'योगी सदा' सर्वासु अवस्थासु 'पश्यन् शृण्वन्' (५।८) इत्यादिना प्रतिपादितासु 'आत्मानं युञ्जन्' समादधानः 'सुखेन' आसनप्राणायामप्रत्याहारध्यानधारणादिक्लेशाभावादनायासेन ब्रह्मणा परमात्मना 'संयोगं' अभेदम् 'अत्यन्तं' नित्यमेव 'अधिगच्छति' प्राप्नोति ॥ २५–२९ ॥

इत्थं सिद्धनिरुत्तरसमाधेः कर्मयोगिनो लोकोत्तरं व्यवहारं प्रतिपादयितुमाह—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ३० ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३१ ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३२ ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३३ ॥

यथोक्तेऽस्मिन् कर्मयोगे युक्तात्मा समाहितः 'सर्वत्र' सर्वदा सर्वथा अवहितचित्तो योगी 'आत्मानम्' अद्वयचिन्मात्रैकलक्षणतया उक्तस्वरूपं सर्वभूतेषु परस्परं भिन्नत्वेन अवस्थितेषु चराचरेषु प्राणिषु स्थितं पश्यति, यदात्मनः सामान्यचिन्मात्रं रूपमेकं तदात्मकान्येव भूतानि प्रेक्षते इत्यर्थः। तथोक्तस्वरूपे स्वात्मनि 'सर्वभूतानि' विगलितान्योन्यभेदानि पश्यति, इत्यात्मनः सर्व-

भूतानां चाभेददर्शनं प्रतिपादितमेव । अभेददर्शनप्रतिपादनपरमेतत् । यथा चैतत् सम्भवति तथा प्रतिपादितमेव प्राक्, तथापि स्मृत्यर्थं पुनरुच्यते । आत्मा नामायं सुखदुःखग्राह्यग्राहकमूढत्वशून्यत्वादिसकलविकल्पविरहविशुद्धसंवित्प्रकाशैकलक्षणः, तस्य संवेदितृत्वं नामाव्यभिचारी गुणः । तेन यद्यत् संवेत्ति तत्तत् संवेद्यमानमेव तेन तेन रूपेण आत्मानं लभते । संवेद्यमानता च निर्विकल्पावस्थापूर्विका भवति । तेन यत्किञ्चित् यदा यदा यत्र यत्र येन येन प्रमात्रा संवेद्यते, तत्तदद्वयानन्तचिन्मात्रस्वरूपमिति आत्मनः संवेदितुर्वेद्यानां च सर्वभूतानां नास्ति वास्तवः कश्चिद्भेदः, केवलमचिन्त्यपरमेश्वरमायोद्भावितो वेद्यवेदकविकल्पः सर्वमिदमन्योन्यं विभिन्नतया अवभासयति । स च परमेश्वरप्रसादादुन्मिषितया विद्याख्यया दिव्यया दृशा तत्त्वविद्भिस्तादृशो विभाव्यमानो यदा विगलति, तदा भिन्नसेतुसागरसलिलवत् सर्वमिदमात्मतया ऐक्येनावभासते । ज्ञानकर्मसमुच्चयानुष्ठानात्मनि चास्मिन् महायोगे प्रत्युदितविद्याशक्तिरेवाधिकृता इति । कर्मयोगी 'सर्वत्र' स्थावरे जङ्गमे च भूतग्रामे 'समदर्शनः' अद्वैतात्मतत्त्वैकदर्शी इत्युक्तः । यश्च आत्मा सोऽहमेव इत्यभेदं भगवान् प्रतिपादयितुमाह—'यो' योगी 'सर्वत्र' भावजाते 'मां' यथोक्तात्मतत्त्वैकरूपमुक्तया उपपत्त्या 'पश्यति' 'मयि च सर्वं' तथैव 'पश्यति' 'तस्य' तत्त्वदर्शिनः 'अहं न प्रणश्यामि' नादृश्यो भवामि, सोऽपि मे स्वरूपभूतत्वात् 'न प्रणश्यति' नादृश्यत्वमापद्यते, इति कर्मयोगसिद्धस्य योगिनः स्वात्मनश्च अभेदप्रतिपादनपरमेतद् भगवद्वचनम् । किञ्च 'यो' योगी 'सर्वत्र' सर्वस्मिन् देहप्रभृति सुखं दुःखं वा अन्यं वा कंचित्प्राणिधर्ममुक्तया

उपपत्त्या संवेद्यमानस्य संविदात्मकत्वापत्तिरूपतया 'समं' संविन्मात्रैकस्वभावं 'पश्यति' बुध्यते । कथम् । 'आत्मौपम्येन' आत्मानमुपमानीकृत्य स्वानुभववदित्यर्थः । स 'सर्वथा' सर्वेण केनचित् साधारणेन प्रकारेण वर्तमानोऽपि 'मयि वर्तते' मदभिन्नोऽहमेवासावित्यर्थः । 'स' एवंविधो योगी सर्वासु अवस्थासु अविलुप्तनिरुत्तरसमाधिफलास्वादो दुर्वारविघ्नवृन्दानुबन्धदुःसाधयोगाङ्गानुष्ठाननिष्ठोपलभ्यसमाधिफलपूर्वोक्तयोग्यपेक्षया परमो निरुत्तरातिशययुक्तः ईश्वरवत् सर्वसाम्यदशाधिरूढत्वात् जीवन्मुक्त इत्यर्थः ॥ ३०—३३ ॥

अथ सम्प्रति अननुभूतत्वादस्य सर्वसाम्यप्रतिपत्तिफलस्य समाधेरसम्भाव्यतां मन्यमानोऽर्जुन आह—

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं पराम् ॥ ३४ ॥**
**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३५ ॥**

हे कृष्ण 'योऽयं' समनन्तरं कर्मयोगलक्षणोऽन्ययोगविलक्षणो 'योगस्त्वया प्रोक्तः' एतस्य 'परां स्थितिं' प्रकृष्टां प्रतिष्ठां 'न पश्यामि' न तर्कयामि 'चञ्चलत्वात्' अनवस्थितत्वात् । यस्मात् तत्साधनं 'मनश्चञ्चलं' प्रकृतिचपलमतः 'प्रमाथि' प्रमथनशीलं, यतः कृच्छ्रलब्धामपि भूमिकामुन्मार्गप्रवणत्वादाशु विनाशयति । नच तद्व्यावर्तयितुं शक्यं यतो 'बलवत्' अस्य विषयान् प्रत्यभिधावतः शैलेन्द्रशिखरविशीर्यमाणसलिलौघवत् दुर्धरं बलं, यतो जन्मसहस्राभ्यस्तेषु विषयरसेषु दृढासक्तत्वात् 'दृढं' । 'तस्य' एवंविधस्यास्य मनसो 'निग्रहम्' उत्पथात् प्रतिषेधनं सुतरां

'दुष्करं' दुस्साधं सम्भावयामि, कस्येव 'वायोरिव' यथा वायुः स्वाच्छन्द्येन दिक्षु प्रसरन् निग्रहीतुमशक्य एवमेतन्मनः ३४–३५

अथ एतदभ्युपगमपूर्वमुत्तरं भगवानाह—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३६ ॥

नास्त्यत्र संशयः, इदं 'चलं' स्वभावचपलं 'मनः' दुःखेन निग्रहीतुं शक्यते; किन्तु 'अभ्यासेन वैराग्येण च' उपायद्वयेन 'गृह्यते' नियम्यते । अभ्यासश्चात्र कर्मयोगे 'पश्यञ्शृण्वन्' (५।८) इत्यादिप्रागुक्तक्रमेण सर्वेन्द्रियवृत्तिषु विहितविषयौन्मुख्येन प्रवर्तमानासु सर्वप्राणवृत्तिषु च शरीराव्यभिचारित्वात् तथैव प्रवर्तमानास्वपि उपदेशानुसारिणा क्रमेण यथोक्ते स्वात्मनि निवेशात्मकस्थितिलाभविषयो यत्नः, वैराग्यं च अनिषिद्धविषयस्पर्शानुभूयमाने सुखे सहजानन्दनिरुपमास्वादाविस्मरणादनासङ्गः, ताभ्यामेवंविधाभ्यां कर्मयोगाधिकृतपुरुषैकगोचराभ्यामभ्यासवैराग्याभ्यामेतत् सुचञ्चलमपि चित्तं नियन्तुं शक्यमेव ॥ ३६ ॥

अत एव—

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३७ ॥

यतो व्याख्याताभ्यासलक्षणसाधनाभावात् 'असंयतात्मना' अनियमितान्तःकरणेन पुरुषेण एष 'योगो दुष्प्रापः' दुर्लभः । 'वश्यात्मना' विधेयान्तःकरणेन पुनः पुरुषेण 'यतता' यतमानेन नित्यमविच्छिन्नोत्साहतया प्रयत्नं कुर्वता 'उपायतः' यथोक्तज्ञानलक्षणादुपायात् स्वीकर्तुं 'शक्य' एव ॥ ३७ ॥

अथ उपायस्य ज्ञानरूपस्य श्रुतिमात्रावगतत्वाद् अभ्यास-

वैराग्ययोश्च अत्यन्तदुःसाधत्वादात्मनश्च संसारिधर्मानुपरमाद् योगस्य दुरवापत्वं मन्यमानः, श्रद्धामात्रस्य एकस्य कारणस्य योगं प्रति उपायत्वं स्यान्न वा इति संशयानोऽर्जुन उवाच—

अयतः श्रद्धयोपेतो योगाच्चलितमानसः।
लिप्समानः सतां मार्गं प्रमूढो ब्रह्मणः पथि ॥ ३८ ॥
अनेकचित्तो विभ्रान्तो मोहस्यैव वशं गतः।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३९ ॥

आप्तोपदिष्टादुपायात् निःसंशयतया फलस्य सम्भावना श्रद्धा इति किलोक्ता, तयोपेतः श्रद्धावान् अत एव 'सतां' सत्पुरुषाणामुत्तमफलार्थिनां पुंसां 'मार्गं' पन्थानं प्रेप्सुरपि यदि 'योगात्' उक्तलक्षणात् समाधेः 'चलितमानसः' विच्युतचित्तवृत्तिः, अत एव 'अयतः' यत्नशून्यः; ततश्च 'ब्रह्मणः' परस्य उपेयस्य तत्त्वस्य 'पथि' प्राप्त्युपायरूपे मार्गे 'प्रमूढः' प्रकर्षेण मूढः सम्यग्ज्ञानरहितः। अतश्चोपायानिश्चयात् 'अनेकचित्तः' विकल्पाकुलत्वात् प्रतिक्षणं चञ्चलत्वाद् बहुविधमनोवृत्तिरत एव 'विभ्रान्तः' न क्वचिल्लब्धस्थितिः, यतो 'मोहस्यैव' अज्ञानस्य 'वशं गतः' विधेयतां प्राप्तः स्यात्। तदेतया दोषसामग्र्या 'योगसंसिद्धिं' समाधिलाभमप्राप्तः सन् 'कां गतिं गच्छति' तस्यैवंविधस्य श्रद्धामात्रैकालम्बनस्य परिशिष्टोपायरहितस्य देहादूर्ध्वं कीदृशे योन्यन्तरे गमनमित्यर्थः ॥ ३८–३९ ॥

तदेव पृच्छति—

कच्चिन्नोभयविभ्रंशाच्छिन्नाभ्रमिव नश्यति।
अप्रतिष्ठो महाबाहो विनाशं वाधिगच्छति ॥ ४० ॥
एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः।
त्वदन्यः संशयस्यास्य च्छेत्ता नह्युपपद्यते ॥ ४१ ॥

'कच्चित्' इति अभीष्टप्रश्ने। अपि नाम एवं श्रद्दधानः पुरुषः स्वर्गापवर्गलक्षणस्य गतिद्वयस्यापि भ्रंशाभावादेकतरगतिं प्रति आशासम्भवे 'छिन्नाभ्रमिव' पवनविशीर्णो जलदो यथा विनश्यति तद्वत् पुनः सन्धानमापद्यते, उत गतिद्वयोपायनिश्चयाभावात् 'अप्रतिष्ठः' निरवलम्बनः सन् आत्यन्तिकमेव 'विनाशं' प्राप्नोति अपुनरुत्थानायैव संसारश्वभ्रे पतति, इत्येतमेवंविधं सन्देहं मम विनाशयितुम् 'अर्हसि' यतस्त्वत्तः सर्वसंसारिगतिवेदिनः सर्वज्ञाद् 'अन्योऽस्य' यथोक्तस्य 'संशयस्य' परिहर्ता न सम्भाव्यते। यत उक्तं भगवता—

'बहूनि मे व्यतीतानि' (४।५) इत्यत्र श्लोके सर्वजन्तूनां नानागतिवेदित्वम् ॥ ४० ॥ ४१ ॥

अथैवंविधसंशयच्छेदाय भगवानुवाच—

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।**
**न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति ॥४२॥**

'तस्य' एवंविधस्य भोगापवर्गलक्षणसिद्धिबीजभूतश्रद्धागुणसंस्कृतचित्तस्य पुंसः क्वचिदपि विषये 'विनाशः' सर्वदुर्गतिहेतुः ज्ञानभ्रंशलक्षणस्तिरोभावो न विद्यते। क्व न विद्यते। 'इहामुत्र' वा, इहेति दृष्टानुश्रविकभोगाधिकरणे संसारे इत्यर्थः। अमुत्रेति एतस्मादन्यत्र स्वात्मप्रतिष्ठाहेतौ अपवर्गे इत्यर्थः। यतः 'कल्याणवान्( कृत् )' कुशलाभिनिवेशी न 'कश्चिद् दुर्गतिम्' अज्ञानदूषितत्वाद् दुष्टां योनिं प्राप्नोति। श्रद्धावतश्च कल्याणकारित्वमवश्यमेव स्थितम्। श्रद्धा हि नाम परमेश्वरप्रसादकल्पद्रुमस्य बीजकणिका तं भोगापवर्गलक्षणफलसम्पत्तिसमृद्धमकृत्वा न निवर्तते, केवलं मृदुमध्यादि (धि)मात्रत्वादितारतम्यात् कालविशेषापेक्षिणी स्वकार्यं निर्वर्तयति ॥ ४२ ॥

यत एवमतः—

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४३ ॥
अथवा योगिनामेव जायते श्रीमतां कुले ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४४ ॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् ।
ततो भूयोऽपि यतते संसिद्धौ कुरुनन्दन ॥ ४५ ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन् ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४६ ॥
प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४७ ॥

'योगभ्रष्टः' योगाद्यथोक्तज्ञाननिष्ठतया शास्त्रविहितस्वकर्मानुष्ठानलक्षणात् समाधेः 'भ्रष्टः' परमेश्वरसमापत्तिलक्षणं फलमप्राप्यैव विच्युतः सन् श्रद्धाबीजे सत्यपि ईश्वरेच्छावशादेव सम्प्रति तीव्रसंवेगाभावाद् यत्नादिसहकारिसामग्रीसाकल्याद्धि कार्या(ला)न्तरापेक्षिफलः सन् 'पुण्यकृतां' प्रकृष्टयज्ञदानतपःप्रभृतिशुभकर्मकारिणां सम्बन्धिनो लोकान् तत्कर्मोचितभोगाधिकरणभूतानि भुवनानि 'प्राप्य' आसाद्य तत्र च तत्कर्मानुरूपाः 'शाश्वतीः समाः' सहस्रसंख्यानि वर्षाणि 'उषित्वा' निवासमनुभूय ततस्तादृशकर्मफलोपभोगान्ते कर्मभूमौ अस्यां 'शुचीनां श्रीमतां' शुद्धाभिजनकर्मणां लक्ष्मीवतां 'कुले' अन्वये 'अभिजायते' जन्म लभते । येन योगाभिवाञ्छालेशकलुषितचित्तत्वात् असम्यगनुष्ठितात् कर्मयोगाद् भ्रंशः प्राप्तस्तस्य एषा गतिर्निर्दिष्टा । यस्य तु अपवर्गप्रवणत्वेऽपि सति कुतश्चित् प्रतिबन्धात् कर्मयोगः सम्यक् न निर्वृत्तः, स इमां गतिमाप्नोति इति पक्षा-

न्तरोपन्यासेन आह—अथवा योगभ्रष्टो 'योगिनां' यथोक्तकर्मसमाधिनिष्ठानामत एव 'धीमतां' प्रकृष्टज्ञानयुक्तत्वात् प्रशस्यबुद्धिमतां 'कुले' अन्वये 'जायते' समुत्पद्यते, 'ईदृशमेतत्' एवंविधानां योगिनां कुले 'जन्म दुर्लभतरं' कर्मयोगभ्रष्टमन्तरेण न केनचित् प्राप्तुं शक्यम्। तस्मिंश्च जन्मनि 'तं बुद्धिसंयोगं' तादृशं बुद्ध्या ज्ञानसंस्कृतया धिया सम्बन्धं लभते। कं तं। 'पौर्वदैहिकम्' पूर्वस्मिन् देहे भवं, यत्र ज्ञानक्रियासमुच्चयानुष्ठानरूपो योगस्तेनाश्रितः सन् न निर्वाहितः। तत्र किल तथाविधयोगसमाश्रयणहेतुभूतज्ञानसंस्कृतया बुद्ध्या सम्बन्धोऽस्याभूदेव, स च परमेश्वरानुग्रहं विना न भवति; सच परमेश्वरानुग्रहो नादत्तफलो विरमति, अतः कुतश्चित् विघ्नलेशात् कंचित् कालं विलम्ब्य पुनरभिव्यज्यत एव, ततस्तद् बुद्धियोगमाहात्म्याद् 'भूयः' पुनरपि प्रयत्नमारभते संसिद्धिनिमित्तं योगफलावाप्त्यर्थं, यस्मात् तेनैव पूर्वजन्मसम्बद्धेन मन्देनापि अभ्यासेन योगविषयेण संस्कारात्मना अवस्थितेन 'अवशः' अनिच्छन्नपि 'ह्रियते' आत्मसात् क्रियते। कस्मात् तेन अभ्यासयोगेन ह्रियते इत्याह—यस्मात् कर्मसमाधिलक्षणस्य 'योगस्य' 'जिज्ञासुरपि' स्वरूपं ज्ञातुकामोऽपि 'शब्दब्रह्म' शास्त्रात्मकं तत्त्वं 'अतिवर्तते' अतिक्रामति निश्चयाभावाद् योगविषया प्रवृत्तिरेव न सम्भवति, संशयितस्य च शास्त्रमुपकारकमतो 'योगजिज्ञासुः शब्दब्रह्मातिवर्तते' इति उक्तम्। स पुनर्योगी 'प्रयत्नात्' उद्योगात् 'यतमानः' योगमनुतिष्ठंस्तदनुष्ठानसंस्कारवशाच्च 'संशुद्धकिल्विषः' प्रक्षालिताज्ञानमयकिल्विषकलङ्को बहुभिर्जन्मभिः परां काष्ठामधिरूढे तादृशि ज्ञाने 'ततः' अनन्तरं 'संसिद्धः' सम्यक् प्राप्तप्रापणीयः 'परां गतिं' परमात्मसमापत्तिलक्षणां, प्रकृष्टां भूमिं प्राप्नोति, यतः परं गम्यान्तरं न विद्यते ॥ ४२–४७ ॥

एवंविधस्य कर्मयोगिनः प्रशंसार्थमाह—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४८ ॥

सुतीव्रस्यापि तपोमात्रस्य अन्तवत्फलत्वात् 'तपस्विभ्यः' 'योगी' नित्यनिरुत्तरानन्दमयसमाधिमान् 'अधिकः' प्रकृष्टः, 'ज्ञानिभ्योऽपि' केवलज्ञानमात्रशरणेभ्यः, तथा 'कर्मिभ्यः' यज्ञादिकेवलकर्मवद्भ्यः 'अधिकः', 'तस्मात्' त्वं यथोपदिष्टं योगं स्वीकृत्य सर्वोत्कृष्टो योगी भव ॥ ४८ ॥

केचन योगिनो दर्शनभेदात् सम्भवन्ति, तेषामपि अयमेवंविधो योगी प्रकृष्टतम इति प्रतिपादयन्नध्यायमुपसंहरति—

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४९ ॥

समस्तानां 'योगिनां' मध्ये स योगी 'युक्ततमः' अतिशयेन युक्तः समाहितो मम मतः, कोऽसौ 'यः श्रद्धावान्' सर्वसिद्धिभूतया श्रद्धया युक्तः सन् 'मद्गतेन' अन्तरात्मना, यथा प्रतिपादितज्ञानगत्या 'मां' परमात्मानमीश्वरमेकं तत्त्वं परमोपेयतया 'गतेन' प्रपन्नेन 'अन्तरात्मना' अन्तःकरणेन 'भजते' वाङ्मनःकायव्यापारान् मत्परानेव कुर्वन् मद्भक्तो भवति, यथोक्तज्ञानविधिना यथोक्तमत्स्वरूपावगमपूर्वं मामेव य उपास्ते, स एव समाहिततम इति ॥ ४९ ॥

याता यस्याङ्गभावं दधति यदि परं योगतामन्ययोगा-
स्तं योगं ज्ञानकर्मव्यतिकरसुकराभ्यासवैराग्यगम्यम् ।
सम्यङ् संप्राप्तुकामैः परमगुरुरिति श्रद्धया पर्युपास्यः
षष्ठोऽध्यायोऽयमार्यैरवहितमतिभिस्त्यक्तसर्वान्यकार्यैः ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
षष्ठोऽध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः ।

एवं यदङ्गभावमापन्नानां योगान्तराणां योगत्वसिद्धिः तस्य ज्ञानकर्मसमुच्चयरूपस्य निरतिशयस्य योगस्य अनुष्ठातुः मद्भक्तस्य कर्मयोगिनोऽपि सतः तव ज्ञेयशेषो विद्यत एव इत्यात्मन एव जगत्कारणत्वादि प्राक्सूचितप्रायं ज्ञेयान्तरं स्फुटतया प्रतिपादयितुं भगवानुवाच—

मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रितः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

षष्ठाध्यायपरिसमाप्तौ 'मद्गतेनान्तरात्मना यो मां भजते स युक्ततमः' इति यदुक्तं, तदेव 'मय्यासक्तमना मदाश्रितश्च' इत्यनेन पदद्वयेन' इह अनूदितम्, ततश्च मत्स्वरूपं ज्ञात्वा मां भजंस्त्वं 'यथा' येन प्रकारेण सन्देहरहितं कृत्वा 'समग्रं' संपूर्णस्वरूपं 'मां ज्ञास्यसि' प्रतिपत्स्यसे, तदिदानीं 'शृणु।' अयं हि जगत्प्रपञ्चः स्वतःसिद्धनित्यप्रधानपरिणामतया कैश्चित् प्रतिपन्नः, अन्यैः परमाणुपाकप्रभवत्वेन, इतरैः क्षणिकज्ञानसन्तानभ्रमजन्यतया, परैश्च अन्यथा चेति, किमत्र तत्त्वं स्यादित्यस्ति संशयस्यावकाशः, तन्निश्चयार्थं चेदं वक्ष्यमाणमवधारय, तदवधारणादेव च समग्रं मत्स्वरूपज्ञानं भविष्यति इति ॥ १ ॥

तदेवाह—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा न पुनः किञ्चिज्ज्ञातव्यमवशिष्यते ॥ २ ॥

'इदं' समनन्तरप्रस्तुतं जगत्प्रपञ्चपरमार्थप्रतिपत्तिविषयं मत्स्वरूपसाकल्यसंवित्तिविषयं च 'ज्ञानं' उपपत्त्युपन्यासरूपं शास्त्रं तदुभयसाक्षात्कारहेतुना विशिष्टेन ज्ञानेन सहितं 'अशेषतः'

कथयिष्यामि, यत्प्रतिपद्य भूयो बोद्धव्यं वस्त्वन्तरं 'न किञ्चिदवशिष्यते', यदवगमात् विदितसकलवेद्यः कृतकृत्यो भविष्यसीत्यर्थः ॥ २ ॥

एतयोश्च ज्ञानविज्ञानयोर्यत्संवेदनमेव फलं पर्यवस्यति, तच्च परमरहस्यत्वात् न सर्वसुलभं यतः—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

इह निरवधौ प्राणिसर्गप्रपञ्चे मनुष्यत्वमेव तावत् दुर्लभं। ते हि मनुष्याः कर्मभूमिलब्धजन्मानश्चतुर्वर्गसिद्ध्यधिकारिणः। तेषां 'मनुष्याणां सहस्रेषु' मध्ये 'कश्चिदेव' तथाविधकर्मपरिपाकवशादुत्पन्नसंसारविरागः 'सिद्धये' पुनर्जन्माभावलक्षणप्राप्तये 'यतति' तत्तदुपायाहरणप्रयत्नपरो भवति। न तु तावत्सिद्धिं प्राप्नोति; तेषामपि यतमानानां 'सिद्धानां' तत्तद्दर्शननिश्चितमोक्षलक्षणां सिद्धिं प्राप्तानामपि मध्ये 'कश्चिदेव' प्रकृष्टपुण्यपरिणामवशादवाप्तमदनुग्रहाविर्भावितयथोक्तनिरतिशयश्रद्धाभक्तिप्रसादितविवेकजज्ञानप्रभावात् यथाप्रतिपादितस्वरूपं 'मां वेत्ति' आत्मत्वेन प्रतिपद्यते ॥ ३ ॥

तज्जगत्स्वरूपप्रतिपादनपूर्वमुपदेष्टुमाह—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

योऽहं सततचिन्मात्रस्वरूपाप्रच्युत एव अचिन्त्यनिजमायाशक्तिमाहात्म्यात् जडचेतनविभागेन द्विरूप इव अवभासमानो जगत्क्रीडामिमां निर्वर्तयामि, तस्य मे सुखदुःखमोहा-

त्मकतया सर्वभावानुगतसत्त्वादिगुणत्रयरूपा जडा या 'प्रकृतिः' सा 'इयमष्टधा' अष्टाभिः प्रकारैः 'भिन्ना' विभागं प्राप्ता । के ते अष्टौ प्रकाराः । भूमिरित्यादयः, तत्र भूम्यादिभिः पञ्चभिः अप्ययक्रमनिर्दिष्टैः प्रकारैः कारणभूतानि सूक्ष्माणि निर्दिष्टानि वेदितव्यानि, तैश्च कार्यभूतानि पृथिव्यादीनि पञ्च स्थूलभेदानि एकैकापायपञ्चादिगुणानि संगृहीतानि, बुद्धिकर्मेन्द्रियवर्गश्च दशसंख्यः, इति भूम्यादिभिः पञ्चभिः तत्त्वविंशतिराक्षिप्ता । मनश्च सर्वेन्द्रियनायकं, बुद्धिर्निश्चयात्मिका, अहङ्कारो देहादिषु अनात्मभूतेषु आत्मप्रत्ययः, इति त्रिविधमन्तःकरणमिति त्रयोविंशतिसंख्यः कार्यकारणवर्गः । तदनुगुणं च त्रैगुण्यात्मकं प्रधानं कारणमिति तत्त्वचतुर्विंशतिरूपा जडत्वेन अवभासमाना प्रकृतिः । इयं च 'परा' वक्ष्यमाणजीवभूतप्रकृत्यपेक्षया स्थूला, यतोऽसौ जडा वेद्या परतन्त्रा विनश्वरा सती चेतनाद् वेदकात् स्वतन्त्रात् नित्याच्च जीवतत्त्वात् अपकृष्टा, अत एवाह—'इतः' उक्तायाः प्रकृतेः पुनः 'अन्यां' विलक्षणां 'परां' प्रकृष्टां 'जीवभूतां' मायावशात् अन्योन्यभिन्नत्वेन अवभासमानक्षेत्रज्ञत्वं प्राप्तां 'विद्धि' जानीहि । कीदृशीम् । 'यया' कर्तृभूतया 'इदं' यथोक्ततत्त्वव्रातमयं 'जगद्धार्यते' जीवलक्षणपरप्रकृतिनिबद्धा जगत्पदार्थस्थितिः । एवं मायावभासितपरापरभेदेन जडचेतने द्वे प्रकृती ॥ ४ ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

'एवं' यथाप्रतिपादितस्वरूपे मदीये प्रकृती 'योनिः' उत्पत्तिकारणं येषां तादृशि 'सर्वाणि भूतानि इत्युपधारय' निश्चयेन बुद्ध्यस्व । जीवभूता हि प्रकृतिश्चित्स्वरूपत्वाव्यभिचारात् वस्तुतः

परमकारणात् परमात्मनो मत्तः परमेश्वरादभिन्नापि मन्मायावशात् भेदमिव आपन्ना जडया प्रकृत्या अनादित्वेन सम्बद्धा सती तामेव गुणात्मिकां प्रकृतिं महदादिभावेन परिणतामात्मत्वेन अभिमन्यमाना सुखादिसाधनभावेन चेतनाचेतननानाभावरूपं विषयमपेक्षते,—इत्यनादिः प्रकृतिपुरुषसम्बन्धो जगतः कारणमिति एते प्रकृती सर्वभूतानां योनिरित्युक्तम् । तथाच वक्ष्यति—

'यावत्किञ्चित्संभवति सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ इति ॥' (३।२९)

इति । एवं जगत्कारणभूतयोरेतयोर्मत्सम्बन्धिन्योः प्रकृत्योर्मन्मायैव एवमवभासने कारणमित्याह 'अहम्' इति । 'कृत्स्नस्य' सर्वस्य निरवधिचराचरभूतभेदमयस्य 'जगतः' 'प्रभवः प्रलयश्चाहं' मत्त एव एतत् प्रभवति, मय्येव एतत् प्रलीयते इत्यर्थः । मत्सङ्कल्पमात्रोद्भावितया माययैव एते जडाजडे प्रकृती आभास्येते, तन्निबन्धनौ च सर्गसंहाराविस्येतयोर्जगत्प्रभवप्रलययोरहमेव मूलकारणमित्यर्थः ॥ ६ ॥

अत एव ममैव परमकारणत्वात् स्वरूपलाभे कारणान्तरापेक्षा नास्तीत्याह[1]—

**मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

जडा प्रकृतिरपरा इत्युक्ता, तदपेक्षया जीवभूता परा इति । एतयोस्तु कारणभूतोऽहं 'परतरः' इति 'मत्तः' अन्यत् किञ्चित् वस्त्वन्तरं 'न' संभवति यत् मत्कारणत्वेन परतमं स्यात्, अहमेव

---

१ 'इत्यर्थमाह' ख. पाठः ।

कारणं निरुत्तरमित्यर्थः। यत 'इदं सर्वं' भावजातं 'मयि' सर्वाश्रयभूते 'प्रोतं' अनुस्यूतम्। कथम्। एकस्मिन् तन्तौ यथा परस्परपृथग्भूता अपि 'मणिगणाः' व्यवस्थितिमनुभवन्ति, तथा मन्मायोद्भावितान्योन्यभेदाश्चराचरा भावा मय्येव एकस्मिन्नाश्रये तिष्ठन्तीत्यर्थः ॥ ७ ॥

ननु उभे एते जडाजडे मम प्रकृती, प्रकृतिश्च स्वभाव उच्यते, तत् कथमद्वयचिन्मात्रस्वरूपस्य जडात्मकत्वात् विनश्वरश्चेतनोऽपि परस्परावच्छेदात् नानारूपस्वभाव उपपद्येतेति वास्तवं प्रमात्रद्वैतं प्रतिपादयितुमाह—

रसोऽहमप्सु कौन्तेय प्रकाशः शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥
पुण्यः पृथिव्यां गन्धोऽस्मि तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥
बलं बलवतां चाहं कामरागविवर्जितम्।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

संवेद्यमानाः सन्तः सर्वे भावास्तं तमात्मानं लभन्ते संवेद्यमानताव्यतिरिक्तेन प्रकारान्तरेण कस्यांचिदवस्थायां केषामपि अनुपलम्भात्। इत्थं वास्तव एक एव संवेदिता संविदन्नेव भावान् सृजति। ततो भावरूपा संवेदितुरेव शक्तिर्विजृम्भते, न अन्यत् तद्व्यतिरिक्तं किञ्चिदिदम्; अतः परापरे मे प्रकृती स्वभावभूते इति स्वतःसिद्धं प्रमात्रद्वैतं गर्भीकृत्य उपक्रम एव यदुक्तम्, तत् रसोऽहमित्यादिना श्लोकचतुष्टयेन उपपादयति। तत्र यो यस्य प्राधान्येन वर्तते गुणः, स एव तस्य आत्मा,—इति अपां रस

एव आत्मा, स च अहम् । यत उक्तेन न्यायेन रस्यमानतया संवेद्यमाना आपो रसरूपमात्मानं लभन्ते, ततो रसयितुरेव रसात्मिका शक्तिः । ममैव च अनुभवितृत्वलक्षणस्वभावाव्यभिचारात् रसयितृत्वं, ततः 'अप्स्वहं रसः' इत्युक्तम् । यथा अप्सु रस आत्मत्वेन व्यवस्थितः, एवं 'पृथिव्यां गन्धः' शशिरविविभावसुषु तेजोलक्षणभूतभेदेषु 'प्रकाशः' तेजःशब्दाभिहितो रूपगुण आत्मत्वेन व्यवस्थितः । तथा 'खे' नभसि शब्दगुणः । एवं वायौ स्पर्शगुणोऽपि अत्र परिसंख्येयः,–इति भूतपञ्चके गन्धादिप्रधानगुणात्मना पूर्वोक्तेन न्यायेन अहं व्यवस्थित इति पूर्वोक्तेन विभागेन भूतपञ्चकसंगृहीततत्त्वविंशतिरूपजडप्रकृतिविभागो मम स्वभावः,–इति उपपादितम् । पुण्यशब्दश्च अत्र प्राधान्यापेक्षया सर्वगुणेषु विशेषणत्वेन अनुवर्तनीयः । एवंभूतेषु प्राणिषु 'धर्माविरुद्धः कामः' संकल्पो मनोऽहम् । तथा 'नृषु' जीवेषु 'पौरुषम्' अहङ्कारात्मकं पुरुषत्वमहमेव । तथा 'बुद्धिमतां बुद्धिरहम्' एवेति । मनोऽहङ्कारबुद्धिलक्षणमन्तःकरणं पुरुषाणां प्रधानं धर्मत्रयं पूर्वोक्तेन न्यायेन अहमेवेति त्रिभिरेतैः सहितस्त्रयोविंशतिभेदः कार्यकारणवर्गः [[1]अहंकारहेतुतामापद्यते, नतु सर्वसाम्यदर्शिनो योगिन इत्यर्थः । तथा ज्ञानस्य परां निष्ठां निरतिशयां चतुर्थीं काष्ठां ज्ञानलक्षणां मद्भक्तिं मत्स्वरूप.........:] चतुर्विंशेन[2] प्रधानेन अनुगतो जडप्रकृतिप्रपञ्चो ममैव स्वभावः,–इति व्यवहितैः पदैः प्रतिपादितम् । एवमेव 'सर्वभूतेषु जीवनं' प्राणनं प्रधानं, तदपि अहमेव । तथा 'सर्ववेदेषु[3] प्रणवः' ओंकारः स्वोदिताविकृतध्वन्यात्मकोऽहमेव । स हि प्रकृतिभूतत्वात् सर्ववेदेषु प्रधानं, तस्य

१ बन्धचिह्नान्तर्गतं ख-पुस्तके नास्ति । २ 'विंशप्रधानेन' ख. पाठः ३ 'सर्वेषु' क. पाठः ।

विकारभूता हि सर्वे वेदाः। तथा सर्वक्रियासु तपोमयी क्रिया प्रधानं, ततः 'तपस्विषु' वर्तमानं 'तपः' अहमेव। 'कामराग-विवर्जितं बलं बलवतां' प्रधानं, तदपि पूर्वोक्तेन न्यायेन अहमेव। तथा 'तेजस्विनां' प्रभावातिशययुक्तानां 'तेजः' प्रभावो मुख्य-स्तदपि अहमेव। एवमनेन क्रमेण 'सर्वभूतानां बीजं' हेतुरहमेवेति जडचेतनभेदेन द्विप्रकारा प्रकृतिर्ममैव स्वभावः,—इत्यनेन प्रकारेण विप्रकृष्टसमन्वयैः पदैः प्रतिपादितम्। एवं रसोऽहमित्यादि प्रा-धान्यविवक्षया उपलक्षणमात्रत्वेन प्रतिपादितम् ॥ ८—११ ॥

परमार्थतस्तु पूर्वोक्तेन न्यायेन तत् पदार्थजातं किंचन न संभ-वति, यत् न अहमिति प्रतिपादयितुमाह—

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेह तान् विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

अपर्यन्ते भावप्रपञ्चे प्रकृतिपरिणामरूपत्वात् सर्वस्य भावस्य त्रैगुण्ये व्यवस्थिते केचित् सत्त्वप्रधाना गुणीभूतरजस्तमस्काः, केचिदेवमेव रजःप्रधानाः, केचित् तमःप्रधाना इति तारतम्य-भेदादानन्त्यमनपेक्ष्य त्रित्वेन संगृहीता इति 'ये' केचन 'सात्त्विका राजसास्तामसाश्च' भावाः संभवन्ति, 'तान्' पूर्वोक्तेन न्यायेन 'मत्त एव' परमेकारणात् जातान् जानीहि। किंतु 'तेषु' मत्का-र्यज्ञेयरूपतया लब्धात्मकेषु भावेषु सत्सु 'नाहं' भवामि न तत्स-त्ताधीनसद्भावता मम स्वभावसिद्धनित्योपलब्धृमात्रधर्मकस्य विद्यते। 'ते' तु तथारूपाः 'मयि' सति भवन्ति उक्तोपपत्त्या मत्सत्ताधीनसद्भावाः सर्व एव भावा इत्यर्थः ॥ १२ ॥

१ 'स्थिते' ख. पाठः। २ 'प्रकाशरूपात्' ख. पाठः।

नन्वेवं स्वशक्तिमात्रोपादानतया सर्वकर्ता परमेश्वर एक एव अयमात्मा, तत् कुतोऽयं जीवानां व्यामोहो यदेते कारणान्तरलब्धात्मकं किञ्चिदेव स्वविषयभूतं वस्तु जानन्ति कुर्वन्ति चेति। अत्र वक्ष्यमाणं स्वमायाशक्तिवैभवं गर्भीकृत्य उत्तरमाह—

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥ १३॥

'सर्वं जगत्' सकलो जीवलोकः 'एभिः' सात्त्विकादिभिः पूर्वं प्रतिपादितैः 'गुणमयैः' सुखदुःखमोहपर्यवसायिप्रतिपत्तिभिः 'भावैः' संवेद्यैः पदार्थैर्यथास्थितस्वभावप्रत्यवमर्शव्यवधायकतया 'मोहितं' जनितान्योन्यभिन्नदेहाद्यात्मप्रत्ययलक्षणाज्ञानतिमिरं 'एभ्यः' सर्वेभ्यो भावेभ्यो वेद्यैकस्वरूपत्वादनित्येभ्यः 'परं' व्यतिरिक्तस्वभावं, अत एव 'अव्ययं' अविद्यमानयथाप्रतिपादितस्वरूपप्रच्युतिलक्षणक्षयं 'मां' परतत्त्वं 'नाभिजानाति' न प्रतिपद्यते॥ १३॥

ननु प्रबन्धतो यथाप्रतिपादितेन प्रकारेण त्वमेव परमेश्वरः परमात्मा एकं तत्त्वं विजृम्भसे, तत् क एते गुणा नाम यन्मयैर्भावैर्मोहितं जगत् मां न जानातीत्युक्तम्। अत्र आह—

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥ १४॥

See SPK Vivrti of RK 133-34

यत् ब्रवीषि क एते गुणा नाम। 'एषा हि गुणमयी दैवी माया' इत्थं देवनात् क्रीडनात् देवस्य सतो मम संबन्धिनी असती अपि सत्यवदाभासयन्ती मदीया शक्तिः। मम किल पारमार्थिकी परा शक्तिरेकैव, सा अहमिति यथोक्तं मम स्वरूपं परा-

१ 'नन्वेवं शक्ति' ख.।

मृशन्ती[1] विद्येति उच्यते, इदमिति तु परामृशन्ती[2] 'मम माया' इति व्यवह्रियते । इदमिति तु परामर्शो व्यतिरिक्तवेद्यार्थोद्भावनेन स्वरूपं लभते । तच्च वेद्यं जडचेतनभेदेन संग्रहतो द्विप्रकारकमेव, अवान्तरभेदपरिकल्पनया अनन्तमपि सुखदुःखमोहभेदात् त्रिविधप्रत्ययरूपतया वेद्यत्वेन पर्यवस्यत्[3] सत्त्वादिगुणत्रयात्मकतया सर्वं संगृहीतम्, अतो विश्वभावमयी गुणमयी मम मायेत्युक्तम् । अतः क्रीडैकप्रयोजनस्य अपि मम इच्छैव गुणमयत्वेन विजृम्भमाणा न केनचित् परेण अतिक्रमितुं शक्येति 'दुरत्यया' इत्युक्ता[4] । ननु यद्येवमेषा[5] न केनचिदन्यथाकर्तुं पार्यते, तत् सर्वथा संसारविभ्रमानुपरमे प्रसक्ते निरर्थक[6] एव अयमपवर्गमार्गाप्त्युपायोपदेश[7] इति । अत्र आह 'मामेव' एकं यथोक्तस्वरूपं परमेश्वरं परमात्मानं मदनुग्रहेच्छाबोधिताः सन्तो 'ये प्रपद्यन्ते' मदभेदपर्यवसायिना[8] यथोक्तेन ज्ञानेन समाश्रयन्ते, 'ते' एनां 'अतितरन्ति' अतिक्रामन्ति । अहमेव एकः सततविकस्वरप्रकाशात्मा[9] प्रभाकर इव तमिस्रया अनया[10] न कदाचित् संस्प्रष्टुं[11] शक्यः, ततो मत्स्वरूपसमापन्नत्वात् गलितदेहाद्यहंप्रत्ययतया अहमेव संपन्न एतां[12] परमार्थनिःस्वभावभावभेदाभाससंतमसमयीं मायामतिलङ्घयितुमलम्, नतु तस्यास्तदितरे मोहनिद्रानिमीलितनिजदृष्टयः स्वरूपमपि संवेदितुं[13] शक्ताः ॥ १४ ॥

ननु कस्मात् त्वां सर्वः कश्चिन्न प्रपद्यते इत्याह—

---

१ 'मृषन्ती' क. पाठः । २ 'ष' क. पाठः । ३ 'न्' क. ख. पाठः । ४ 'इत्यर्थः' ख. । ५ 'यद्येषा' ख. । ६ 'निरर्थकं' क. ख. । ७ 'र्गप्राप्त्यु' ख. । ८ 'मदभेदसमापत्तिप' ख. । ९ 'परप्रकाशात्मा' । ख. । १० 'तया मायया' ख. । ११ 'संसृष्टुं' ख. पाठः । १२ 'एवं' ख. । १३ 'वेदितुं' ख. पाठः ।

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

मदिच्छयैव 'आसुरं' रजस्तमोबहुलं[1] 'भावं' सत्तां सर्गम् 'आश्रिताः' आपन्नाः, अत एव 'मायया' यथोक्तस्वरूपया अविद्यया 'अपहृतज्ञानाः' आक्षिप्तपरमार्थबोधाः, ततश्च 'दुष्कृतिनः' संसारश्वभ्रपातपर्यवसायिज्ञानशून्यदुष्टक्रियावन्तः, अत एव 'मूढाः' विचेतसो 'नराधमाः' पुरुषेषु मध्ये निकृष्टाः 'मां' परमात्मानं 'न प्रपद्यन्ते' न आश्रयन्ते ॥ १५ ॥

ये तु मदिच्छावशादेव दैव[2]सर्गभाजः सन्तो मदनुग्रहेच्छाविर्भावितविद्याशक्तिप्रबोधिताः कैवल्यप्राप्तिफलपुण्यक्रियायुक्ताः प्रबुद्धास्ते—

चतुर्विधा भजन्ते मां जनाः सुकृतिनः स[3]दा ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

अनुग्रहीतृ[4]तत्त्वसाम्येऽपि अनुग्रहेच्छातीव्रतादितारतम्यात् 'चतुर्विधाः' प्रस्तुतविभागेन चतुष्प्रकाराः 'जना मां भजन्ते' मद्भक्ता भवन्ति, अत एव ते 'सुकृतिनः'। तेषां चातुर्विध्यं कथयति 'आर्तः' इत्यादिना । तत्र आर्तो मां भजते, यो मृदुतरमदनुग्रहौ[5]षधेन विशीर्यमाणसंसारमोहसंनिपाततया चिरात् संवेद्यतापन्नदुःखत्रयवेदनाकदर्थ्यमानमानसः, तन्निवृत्तिमिच्छन् सकललोकप्रसिद्धतत्तत्संज्ञाका[6]रादिस्थूलोपायसमाश्रयणेन मद्भक्तो भवति । ततः क्रमेण वर्धमानस[7]मावेशलेशवशात् 'जिज्ञासुः' यः

१ 'बहलं' ख. । २ 'देव' ख. । ३ 'नोऽर्जुन' ख. । ४ 'तृत्वेऽपि' ख. पाठः । ५ 'ग्रहमहौषधेन' ख. । ६ 'करादि' ख. । ७ 'संवेश' क-ख-पाठः ।

समुपजायमानजगद्भावहेयोपादेयविचारः सन् 'कोऽहं, किमिदं शरीरेन्द्रियविषयादिमयं महामोहजालं, कथमतो बन्धनात् परिमुच्येय' इति तत्त्वं ज्ञातुमिच्छुर्नानाशास्त्रशुश्रूषाश्रवणाद्यभियुक्तमतिः संशयापन्न एव मत्सपर्यापरो भवति। अत एव तत्त्वजिज्ञासाभिनिवेशप्रकर्षादाविर्भवद्विवेकवासनालोकविलीयमानविपर्ययप्रत्ययतीव्रतिमिरत्वात् प्रथमानयथास्थितहेयोपादेयपदार्थप्रविभागः 'अर्थार्थी'[1] भजते यः शास्त्राभ्यासवशादुत्पन्ननिश्चयः सन् 'इदमेव परमं फलम्' इत्युपादेयतया आत्मतत्त्वलक्षणमर्थं वस्तु अर्थयतेऽभिकाङ्क्षयति। ततो मां 'ज्ञानी' भजते यः सकलचिकित्साविच्छेदविश्वस्तमतिः स्वीकृतयथोक्तज्ञानलक्षणपरमोपायः सन् यथोक्तस्वरूपमव्यवधानेन मामेव उपास्ते इति॥१६॥

एषां चतुर्णां मध्ये ज्ञानिनः प्रकर्षं प्रतिपादयितुमाह—

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥ १७॥

'तेषाम्' आर्तादीनां मध्ये 'ज्ञानी' यथोक्तबोधवान् 'विशिष्यते' यतोऽसौ सर्वतः स्थूलात् सूक्ष्माच्च विनिवृत्तोपादेयप्रतिपत्तिः परामुपायकाष्ठामधिरूढः[2], अत एव वेदकैकस्वभावः एकस्मिन् मयि परस्मिंस्तत्त्वे भक्तिमान्, अत एव 'नित्ययुक्तः' सर्वासु अवस्थासु अविच्छिन्न[3]समाधानो यस्मात्। तस्य एवंविधस्य 'ज्ञानिनोऽहमत्यर्थम्' अखिल[4]जगत्पदार्थसार्थपरिहारेण 'प्रियः' प्रीतिकारणं 'स च' अपि तथैव 'मम प्रियः' इति अव्यतिरेकप्रतिपादनपरमेतत्॥ १७॥

---

१ 'मां भजते' ख.। २ 'परापाय' ख.। ३ 'च्छिन्नः' क. पाठः।
४ 'अखिलपदार्थ' ख.।

ननु ज्ञानिन एव प्रकृष्टत्वे सति आर्तादयः किं बहिष्कृता एवेति। अत्र आह—

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥

'एते' आर्तादयो यद्यपि उत्तरोत्तरविशिष्टत्वेन अन्योन्यभिन्नरूपाः, तथापि भक्तिमूर्त्या कृतोदयया परया एकया मच्छक्त्या अधिष्ठिताः सन्तः 'सर्व एवोदाराः' उदात्तचेतस औदार्यलक्षणेन एकेन[1] गुणेन युक्ताः; किन्तु आर्तिजिज्ञासार्थार्थितादशासु ये वर्तन्ते, ते व्यतिरिक्तार्थालम्बिनः। ज्ञानवान् पुनरहमिति अभेदेन मत्स्वरूपैकालम्बन इति 'आत्मैव' असौ मम अभिप्रेतः। एतदेव प्रकटयति—यस्मात् 'स' ज्ञानी ममैव, न अन्यस्य व्यतिरिक्तस्य वस्त्वन्तरस्य 'अनुत्तमां' निरतिशयां 'गतिं' प्राप्तिहेतुमभेदज्ञानलक्षणं पन्थानम् 'आस्थितः' समाश्रितो यतो 'युक्तात्मा' मय्येव समाहितान्तःकरणोऽयम् ॥ १८ ॥

अतः—

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥

आर्तत्वाद्यवस्थाजुषां भूयसां 'जन्मनां' शरीरपरिग्रहाणां 'अन्ते' परिक्षये 'सर्वम्' इदं चराचरं भावजातं परमार्थसततनिर्विकारसामान्यसंविद्रूपो भगवान् सर्वत्र वसनात् सर्वस्य वा तत्र वसनात् 'वासुदेव इति' सर्वाद्वयत्वनिश्चयेन 'मां' परमकारणं प्रतिपद्यते। 'स' चैवंविधः सर्वोत्कृष्टस्वभावः 'सुदुर्लभः' सुतरां दुर्लभो दुष्प्रापो मनुष्यकोटिषु अपि तादृशो[2] महानुभावो लभ्यते नवा ॥ १९ ॥

---

१ 'एकेन युक्ता' ख. पाठः। २ 'कदाचित्तादृशः' ख.।

कस्मात् तथाविधः सुदुर्लभ इत्यत्र स्वेच्छामात्रमेकं कारणं प्रतिपादयितुमाह—

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया[1] ॥ २० ॥
यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान् हितान् ॥ २२ ॥
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

इह यथाप्रतिपादितप्रकारेण नानाजीवभूतमत्प्रकृत्यात्मकाः पुरुषा मदिच्छोद्भावितकार्यकारणभावया गुणात्मिकया 'प्रकृत्या स्वया' तत्तत्पुरुषभेदेन प्रतिनियतकार्यकारणात्मना प्रत्येकं स्वत्वमापन्नया 'नियताः' प्रविभक्तशरीरेन्द्रियविषयाद्यात्मकतया परस्परभेदेन नियन्त्रिताः सन्तः सुखाद्यात्मकं प्राकृतं रूपमेव आत्मत्वेन प्रतिपन्नाः, अत एव स्वत्वापन्नतत्तत्प्रकृत्युचितैः 'तैस्तैः' क्रियाफलतया प्राप्यत्वेन काम्यमानैः 'कामैः' भोगैस्तत्तल्लोकान्तरभोग्यैः 'हृतज्ञानाः' मुषितपरमार्थलक्षणैकतत्त्वविषयबोधाः सन्तः 'अन्यदेवताः' अन्या आत्मलक्षणपरमदैवतव्यतिरिक्तहरिहरहिरण्यगर्भादित्यप्रभृतीस्तत्तत्स्वाभिमतनानाफलदायित्वश्रुतप्रभावाः परस्परभिन्नात्मतया अवगम्यमानाः 'प्रपद्यन्ते' भजन्ते । कथम् । 'तं तं' तत्तद्दर्शनप्रसिद्धं 'नियमम्' इतिकर्तव्यताविशेषरूपां व्यवस्थां 'आस्थाय' आश्रित्य अवलम्ब्य । इत्थंस्थिते 'यो यः' क्षेत्रज्ञः फला-

१ 'स्वयम्' ख. पाठः ।

भिलाषानु(गु)ण्येन 'यां यां' चतुर्भुजत्रिनेत्रत्वादिविभक्तविशेषां 'तनुं'मूर्तिं 'भक्तः' समाश्रितः सन् 'श्रद्धया'तावन्मात्रफलदायिभिन्नदेवताविषयया तत्तत्फलप्राप्तये 'अर्चितुं' पूजयितुं वाञ्छति, 'तस्य तस्य तामेव' तावन्मात्रफलदायिभिन्नदेवताविषयां, न अन्यां परामेकतत्त्वविषयां 'अचलां' तद्विषयत्वेन स्थितां[2] 'अहं' ददामि । मत्त एव सात्त्विकादिसर्वभावोद्भवस्य प्राक्प्रतिपादितत्वात् 'स तया' मद्दत्तया 'श्रद्धया युक्तस्तस्य' तत्तदाकृतेर्देवताविशेषस्य 'आराधनं' प्रसाधनं 'ईहते'[1] मनोवाक्कायैश्चेष्टते । 'ततश्च' देवताविशेषादाराधितात् सतः पूर्वोक्तोपपत्त्या 'मयैव' एकेन पारमार्थिकेन कर्त्रा 'विहितान्' विसृष्टान् 'हितान्' अनुकूलान् 'कामान्' भोगान् 'लभते' । किन्तु मामेकमीश्वरं सर्वमनोरथप्रदं सम्यग्ज्ञानाभावादजानतामत एव अल्पप्रज्ञानां 'तेषां' परिमितं भोगलक्षणं 'फलमन्तवत्' अनित्यं 'भवति' । ते हि अज्ञानमोहिताः सन्तः आत्मानं देवतां फलं च नानात्वेन प्रतिपद्यन्ते । ततश्च ये देवान् नानात्वेन प्रतिपन्नान् यज्ञादिभिरन्तवद्भिः क्रियाविशेषैर्यजन्ते प्रीणयन्ति, ते 'देवान् यान्ति' तत्तद्देवताधिकरणभूतं तं तं देवलोकं गच्छन्ति । ये तु मां यथोक्तस्वरूपमेकं तत्त्वं यथाप्रतिपादितेन क्रमेण मदिच्छयैव प्रेर्यमाणाः सन्तः[3] क्रमेण ज्ञानित्वदशाधिरोहपर्यन्तेन भक्ताः समाश्रिताः, ते 'माम्' एव परमं कारणं 'यान्ति' अहमित्यभेदेन समापद्यन्ते ॥ २३ ॥

( अव्यक्तं[4] व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥)

---

१ 'देहता' क. । २ 'स्थिरां' ख. पाठः । ३ 'सन्तो ज्ञानित्व' ख. पाठः । ४ नायं व्याख्यातः क्षेपकत्वात् ।

तदित्थमासुरं दैवं च सर्गं मयैव स्वेच्छया आपादितो लोको मायाख्यया विद्याशक्त्या च प्रवृत्तिनिवृत्त्योर्धर्मयोर्नियुज्यमानः संसारापवर्गलक्षणं फलं प्राप्नोतीति संग्रहेण प्रतिपादयितुमाह—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

वैश्वरूप्येऽपि अद्वयचिन्मात्रस्वरूपावस्थानापरिच्युतिलक्षण ऐश्वरसमाधिर्योगशब्देन उक्तः। तथाविधयोगमहिम्ना उत्पादिता या माया मत्स्वरूपान्यथाप्रतिपत्तिहेतुः शक्तिः, तया समावृतो व्यवहितः सन् 'अहं सर्वस्य' मत्प्रकृतिमोहितस्य आसुरस्वभावस्य जन्तोः 'न प्रकाशः' आत्मतया न प्रत्यभिज्ञेयः । ततश्च सर्वो 'मूढो लोकोऽयमजमव्ययं' नित्यत्वात् जन्मविनाशरहितं 'मां नाभिजानाति' आत्मत्वेन न प्रत्यवमृशति ॥ २५ ॥

यतः—

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्यन्ति च भूतानि मां तु वेद न कश्चन ॥ २६ ॥

शरीराणि अनित्यप्रकृतिपरिणामपर्यवसिताहंप्रत्ययत्वात् सर्वतोऽवच्छेदवर्ती वेद्यदशामापन्नानि, अत एव अतीतवर्तमानभविष्यत्पदविशेष्याणि 'भूतानि' सर्वशरीरिणः 'अहं' परमार्थवेदकस्वभाव एक एव 'वेद' जानामि । 'मां' पुनर्नित्यत्वात् कालकलनाद्यवच्छेदविरहितमहिमानं न कश्चित् शरीरी 'वेद' जानातीति । अनेन अनन्यसाधारणवेदकैकस्वभावत्वं परस्य कार-

१ 'विद्याख्यया शक्त्या' ख. । २ 'रूपोऽपि' ख. । ३ 'भावस्य' ख. ।
४ 'प्रत्यवमृशति' क. । ५ 'भविष्याणि' क. पाठः ।

णस्य, तत्कार्यस्य च जगतस्तद्व्यतिरिक्तस्वरूपस्य वेद्यत्वमेव प्रतिपादितम् ॥ २६ ॥

कस्मात् त्वां न वेद कश्चिदित्यत्र[1] आह—

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥**

यत एतानि 'सर्वभूतानि' मन्मायावशादन्योन्यभिन्नानि अनित्यशरीरात्मकत्वात् जन्मविनाशभाञ्जि 'सर्गे' सृष्टौ सत्यां 'संमोहं' स्वरूपा[2]विमर्शरूपमज्ञानं 'यान्ति' प्रतिपद्यन्ते । केन हेतुना । 'द्वन्द्वमोहेन' द्वन्द्वानि सुखदुःखाद्यात्मकानि, स एव मोहस्तत्त्वाप्रतिपत्तिस्तेन । कीदृशेन । 'इच्छाद्वेषसमुत्थेन' रागद्वेषप्रभवेण । इदमत्र तात्पर्यम्—मन्मायोद्भावितगुणमयप्र[3]कृतिरूपसर्गसंमोहिताः सर्वप्राणिनः परस्परभिन्नानित्यगुणपरिणामात्मकमेव जगदिदं मन्यमानाः क्वचित् रज्यन्तः, किञ्चित् द्विषन्तः संसारचक्रपरिवर्तनमनुभवन्ति; अतो यथाप्रतिपादितस्वरूपं मां नित्यनिर्विकारैकचित्स्वभावं परमात्मानं न भजन्ते ॥ २७ ॥

के[4] पुनस्त्वां भजन्ते इत्यत्र आह—

**येषां त्वन्तं[5] गतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥**

'येषां' पुनः 'जनानां' मदनुग्रहादेव प्रत्युदितविद्याशक्तीनाम्[6], अत एव 'पुण्यकर्मणां' सुकृतिनां 'पापम्' अज्ञानलक्षणं 'अन्तं गतं' विनाशं प्राप्तं; 'ते' यथोक्तात् द्वन्द्वमोहात् निर्मुक्ताः 'दृढव्रताः' स्थिरनियमाः सन्तो 'माम्' एकं दैवतं 'भजन्ते' मदभेदप्रतिपत्तिपर्यन्तया सपर्यया समाश्रयन्ते ॥ २८ ॥

---

१ 'इत्याह' ख. । २ 'पारमार्थिकस्वरूपा' ख. पाठः । ३ 'गुणप्र' ख. । ४ 'केन' ख. । ५ 'त्वन्तगतं' ख. पाठः । ६ 'सतामत एव' ख. ।

इत्थं च—

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥
साधिभूताधिदैवं मां साधियज्ञं तथा विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

'मां' यथोक्तस्वरूपं 'आश्रित्य' चतुर्विधया भक्त्या आलम्बनीकृत्य 'ये' जरामरणादिद्वन्द्वदोषविमुक्तये 'यतन्ते' सततमविलुप्तोद्योगा भवन्ति, 'ते युक्तचेतसो' यथोक्तसंततसमाहितमनसो 'ब्रह्म' स्वरूपादिभेदेन समनन्तराध्यायव्याख्यास्यमानसप्तविधविज्ञान-दृशा 'मां विदुः' मां जानते इत्योम् ॥ ३० ॥

गीताध्याये स्थितिमुपगताः सप्तमे सत्यरूपे
सन्तः सम्यक्फलितसुकृताः केऽपि लोके यथास्मिन् ।
निःसन्देहाः सकलभुवनाभोगभागव्यवस्थां
हस्तन्यस्तामलकफलवद् व्यक्तमालोकयन्तु ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
सप्तमोऽध्यायः ॥ ७ ॥

---

१ 'च ये' क. पाठः । २ समाधिसतत' ख. पाठः ।

## अथ अष्टमोऽध्यायः ।

अथ सप्तमेऽध्याये प्रतिपादितज्ञानविदो भक्तिलक्षणविज्ञानविशारदा ब्रह्मादीन् प्रकारान् विदुरिति यत् भगवता उक्तं, ततस्तेषां प्रकाराणां संजातस्वरूपजिज्ञासोऽर्जुन उवाच—

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

प्रश्नवाक्यानि एतानि गतार्थानि, किंतु किं तदिति तच्छब्दस्य अयमभिप्रायः—यत् भगवता उक्तप्रायेषु तेषु[1] प्रकारेषु 'किं तद् ब्रह्म' कः प्रकारो ब्रह्मस्वरूपः, 'किमध्यात्मं' कश्च अध्यात्मस्वरूप इति विभागजिज्ञासारूपः । 'प्रयाणकाले कथं ज्ञेयोऽसि' इति पूर्वमनुक्तार्थविषयः पृथक् प्रश्नः ॥ १–२ ॥

यथोक्तप्रश्नव्याकरणार्थं भगवानुत्तरमाह—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥
अन्तकालेऽपि[2] मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

तत्र ब्रह्म किमुच्यते इति प्रश्ने तावदुत्तरम्—'परममक्षरं ब्रह्म' न क्षरति न संचलति न स्वरूपात् च्यवतीति अक्षरं चिद्रूपमु-

---

१ 'एतेषु' ख. पाठः । २ 'च' क. पाठः ।

च्यते। तत् च द्विप्रकारं संभवति ब्रह्मरूपं, जीवरूपं च। यत् ब्रह्मरूपं, तत् परमं; तस्य न कदाचित् स्वरूपात् संचलनं भवति। यतस्तस्य प्रबन्धतः स्वरूपं जन्मविनाशादिभावविकारासंसृष्टैक-[1] चिन्मात्रलक्षणं सहजनित्यानन्दैकधर्मकं सकलविश्वभावावभासकत्वात् विश्वरूपमपि विश्वभाववदवच्छेद्यत्वेन कथंचिदसंगत-[2] त्वात् तेभ्यो व्यतिरिक्तं प्रतिपादितमेव[3]। जीवरूपं तु[4] कूटस्थत्वे सति अक्षरं भवति, किन्तु अपरं परब्रह्मवत् परत्वेन न अवस्थितं, यतस्तस्य मायावशात् क्षरस्वभावप्राकृतभावाहंप्रत्ययालम्बने[5] सति देहादिप्राकृतभाववत् प्रलयोदयौ जन्ममरणादिकं वा तत्स्वरूपमनुविदधानस्य स्वरूपप्रच्युतिसंबन्धे सति अपरमक्षरत्वम्। यत् वक्ष्यति

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एवच।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥
यस्मात् क्षरमतीतोऽहमक्षरस्यापि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥' (१५।१८)

इति। इत्थं ब्रह्मापेक्षया जीवानां नित्यत्वेऽपि प्रतिपादितोपपत्त्या निकृष्टमक्षरत्वं, परमं तु अक्षरं ब्रह्म,—इति प्रथमप्रश्नस्य उत्तरम्। 'अध्यात्मं किमुच्यते' इत्यत्र उत्तरं 'स्वभावोऽध्यात्मम्' इति। स्वभावशब्देन

'भूमिरापोऽनलो··············।' (७।४)

इत्यादिना

'·········ययेदं धार्यते जगत्।' (७।५)

इत्यन्तेन ग्रन्थेन अपरा परा च प्रकृतिर्भगवता प्राक्प्रति-

१ 'संस्पृष्टै' ख.। २ 'अप्यसंगत' ख.। ३ 'प्रतिपाद्य तमेव' ख.। ४ 'त्वकूट' ख.। ५ 'स्वभावप्राकृतभाववत्' क. पाठः।

पादिता इह उच्यते। एवं प्रकृत्यात्मकः स्वभावः परमकारणरूपसत्यात्मावभासितनानात्माधीनत्वादध्यात्ममिति उक्तः । आत्मा हि परमेश्वरो जडचेतनविभागेन स्वेच्छया आत्मानमेव अवभासयति, यदुक्तं

'कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव कुरुते भेदानिति वेदान्तनिश्चयः ॥' (मां०का०२।१२)

इति । एवं द्विप्रकारप्रकृतिलक्षणस्वभाव आत्माधीनत्वादध्यात्ममुच्यते,—इति द्वितीयप्रश्नस्य उत्तरम्। अथ 'किं कर्म' इत्यत्र उत्तरं 'विसर्गः कर्मसंज्ञितः' इति । विसर्गो विशिष्टा परब्रह्मव्यतिरिक्ता सृष्टिः कर्मेतिसंज्ञितः । तस्य हेतुगर्भं विशेषणमाह 'भूतभावोद्भवकरः' भूतानां जडाजडप्रकृत्यात्मकानां यो भावः सत्ता जडानां प्रवाहनित्यतारूपा, चेतनानामन्योन्यविभक्तत्वेऽपि कूटस्थनित्यतारूपा; तस्य भावस्य उद्भवं तथावभासनरूपामभिव्यक्तिं यः करोति, स तथोक्तः। ईश्वरेच्छया अनादिना प्रबन्धेन जडचेतनयोः प्रकृत्योर्यः संयोगस्तेन कृतो यः स्वप्रपञ्चमयः सर्गः, स तयोः कर्मेति उच्यते, यत उक्तं प्राक्

'एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।' ( ७।६ )

इति। एवं बुद्ध्यादिपृथिवीपर्यन्तंप्रपञ्चलक्षणो जडायाः प्रकृतेर्यो विविधः सर्गः, तथा चतुर्दशविधप्राणिप्रपञ्चलक्षणो यो जीवभूतायाः प्रकृतेर्विविधः सर्गः; स तयोः संयोगजत्वात् तयोः कर्मत्वेन विसर्ग उक्तः,—इति तृतीयप्रश्नस्य उत्तरम् । अथ 'अधिभूतं किमुच्यते' इत्यत्र उत्तरम्—'अधिभूतं क्षरो भावः' इति । क्षरः परिणमद्रूपतया स्वरूपसंचलनपरो यो भावः प्रतिपुरुषं विभ-

---

१ 'पर्यन्तं' ख. पाठः ।

क्तकार्यकारणकलापात्मकः पदार्थः, सोऽधिभूतमुच्यते तस्य भूताधीनत्वात् । भूतरूपा प्रकृतिः कार्यकारणात्मना विपरिणमते,—इति क्षरो भावोऽधिभूतमिति चतुर्थप्रश्नस्य उत्तरम् । अथ 'अधिदैवं किमुच्यते' इत्यत्र उत्तरम्—'पुरुषोऽधिदैवतम्' इति । पुरुषः क्षेत्रज्ञ इति जातावेकवचनम् । अतस्ते ते पुरुषास्तत्तद्वासनानुगुण्येन परिणतप्रविभक्ततत्तत्कार्यकारणात्मकक्षरभावरूपेऽर्थेऽधिष्ठातृतया अवतिष्ठमाना अधिदैवतत्वं भजन्ते,—इति पुरुषोऽधिदैवतमिति पञ्चमप्रश्नस्य उत्तरम् । अथ अत्र देहे 'कथं' केन प्रकारेण 'कश्चाधियज्ञः' इत्यत्र उत्तरमाह 'अधियज्ञोऽहमेवात्र' इति । परस्परविभक्तकर्त्रभिमानाविष्टनानाक्षेत्रज्ञाधिष्ठितेऽस्मिन् 'देहे' यद्यपि क्षेत्रज्ञा एव अधियज्ञत्वमर्हन्ति तत्तत्फलाभिसन्धिना तं तं यागविधिमनुतिष्ठन्तस्तादृशमवच्छिन्नमात्मानं कर्तृत्वेन अभिमन्यन्ते, तथापि पारमार्थिकस्य कर्तृत्वस्य अनन्यसाधारणत्वादहमेव मुख्यः कर्ता सर्वयज्ञानामिति अहमेव अधियज्ञो, न अन्यः । कथमिति प्रकारप्रश्नेऽपि एतदेव उत्तरम् 'अहमेव' । अहमित्यनेनैव प्रकारेण अहमधियज्ञः । इदमत्र तात्पर्यम्—योऽपि क्षेत्रज्ञानां शरीराद्यालम्बननिमित्ताहंकारः, योऽपि परस्वरूपनिष्ठो मम, तयोरहंकारत्वे नास्ति कश्चित् भेदः; केवलं मायावशात् क्षेत्रज्ञानामवच्छेद्यालम्बननिष्ठत्वादवच्छिन्न इव असौ, मम तु स्वभावनिष्ठत्वादनवच्छिन्नः इति अहमेव, न अन्यो, मुख्याहंकारनिष्ठतया अधियज्ञो, न प्रकारान्तरेणेति सर्वयज्ञेषु अधिकृतः प्रभुरहमेव । यद्वक्ष्यति

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच ।' (९।२५)

---

१ 'तस्य तस्य' क. पाठः । २ 'यज्ञं' क. पाठः । ३ 'योग' क. पाठः । ४ 'याद्या' ख. पाठः । ५ 'अविच्छिन्नः' ख. पाठः ।

इति षष्ठस्य प्रश्नस्य उत्तरम्। अनेनैव न्यायेन अधिभूतमहमेवेति बोद्धव्यम्, भूतभावेन परमार्थतोऽहमेव स्थित इत्यर्थः । तथैव अधिदैवतत्वेन पुरुषाख्यो यः प्रकार उक्तः,तत्र अहमेव अधिकृत इति प्रश्नषट्कस्य संक्षेपतो व्याकरणमेवं वेदितव्यम् । यदुत ब्रह्मात्मकर्मसंज्ञं परमात्मक्षेत्रज्ञप्रकृतिपरिणामरूपं सप्तमे तत्त्वत्रयं निर्णीतम्, तत्र यथाक्रममधियज्ञाधिदैवताधिभूतभावेन अहमेव तत्त्वतो व्यवस्थितो, न मद्व्यतिरिक्तं किंचित् संभवतीति तात्पर्यम् । तथा

'ते ब्रह्म तद्विदुः कृत्स्नम्··········· ।' ( ७।२९ )

इत्यादिना तत्त्वत्रयमेतदुक्त्वा

'साधिभूताधिदैवं मां साधियज्ञं च ते[1] विदुः ।' ( ७।३० )

इति तद्व्यापकत्वेन आत्मानं भगवान् निर्दिष्टवान् । अथ प्रयाणकाले देहात् देहान्तरसंक्रमणसमये[2] नियतात्मभिर्निगृहीतान्तःकरणैः कथं ज्ञेयोऽसीत्यत्र उत्तरं—'अन्तकालेऽपि मामेव' इत्यादि । अन्तकालेऽपि तत्तत्कर्मक्षयात् तस्य तस्य शरीरस्य प्रक्षयसमये मां यथोक्तविशेषणं परमात्मानं स्मृत्वा संचिन्त्य मत्स्वरूपप्रत्यवमर्शपूर्वं 'कलेवरं' शरीरं त्यक्त्वा स्वातन्त्र्येण विमुच्य 'यः प्रयाति' ततो देहादुत्क्रामति, 'स मद्भावं' मदीयां सत्तां 'याति' अहमेव संपद्यते इति। 'अत्र न संशयः' सन्देहो नास्ति ॥३–५॥

तथा युक्तिं प्रदर्शयितुमाह—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

'यं यं' सात्त्विकं राजसं तामसं वा 'भावं' पदार्थं 'स्मरन्' सात्त्विक्या राजस्या तामस्या वा बुद्ध्या ध्यायन् पुरुषः 'अन्ते' अवसाने देहं जहाति, 'तं तमेव' देहान्तरं प्रपद्यते । अत्र हेतु-

---

१ 'ये' क. पाठः । २ 'संक्रान्ति' ख. पाठः ।

गर्भं विशेषणमाह 'सदा तद्भावभावितः' सदा नित्यकालं तस्मिन् तादृशि सात्त्विकादौ भावे भावितः संजातभावनो यतः। किमुक्तं भवति। वर्तमाने देहे यदेव सात्त्विकादिकं वस्तु पुरुषोऽभ्यासेन भावयति, तत् तद्भावनाभ्यासप्रकर्षाहितसंस्कारस्तमेव अन्तेऽवश्यं स्मरति। यमेव च स्मरन् तस्मात् देहादुत्क्रामति, तमेव समनन्तरे[1] देहान्तरे लभते, यत् वक्ष्यति

'यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥' ( १४।१५ )

इति ॥ ६ ॥

यत एवं—

तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥

'तस्मात्' उक्तात् कारणादाप्तोपदेशप्राप्तिक्षणात्[2] प्रभृति 'सर्वेषु कालेषु' कालशब्द उपलक्षणार्थस्तेन सर्वेषु देशेषु सर्वेषु आकारेषु सर्वासु अवस्थासु यथाप्रतिपादितस्वरूपं 'मां' परमात्मानं परमेश्वरं 'अनुस्मर' संचिन्तय मत्स्वरूपध्यानानुपरतनिविडावधानो भव, 'युध्य च' स्वकर्म अनुतिष्ठ च येन 'मयि' यथोक्तेन प्रकारेण नित्यविनिवेशितान्तःकरणो निःसंशयं 'मामेवैष्यसि' मदभेदं प्राप्स्यसि अहमेव भविष्यसीत्यर्थः ॥ ७ ॥

प्रतिपत्तिदार्ढ्यार्थमेनमेव अर्थं विवरीतुमाह—

अभ्यासयोगयुक्तेन चेतसानन्यगामिना।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

---

१ 'तत्समनन्तरे' ख. पाठः। २ 'प्राप्तिलक्षणात्' क.।

नित्यानुस्मरण[1]यत्नलक्षणे समाधौ युक्तेन संबद्धेन, अत एव 'अनन्यगामिना' यथोक्ततत्त्वव्यतिरिक्तवस्त्वन्तरविरतगतिना[2] अन्तःकरणेन 'अनुचिन्तयन्' सदा ध्यायन् संस्कारबलात् 'परमं' सर्वेभ्यः क्षेत्रज्ञेभ्यः[3] उत्कृष्टमेकं 'पुरुषं' आत्मानं 'दिव्यं' दिवि परमव्योम्नि स्वभावमये भवं 'याति' प्रतिपद्यते[4] तादात्म्यमुपैति ॥ ८ ॥

एवमबाधितोपपत्त्युपन्यासपूर्वं यथाप्रतिपादितानुत्तरज्ञानमात्रसाधनं परमुत्क्रान्तिक्रमं प्रतिपाद्य इदानीं प्राणजयादिसाध्ययोगसाधनमपरं तं प्रतिपादयितुमाह—

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥९॥**
**प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्१०**

'स' एवंविधो योगी 'तं दिव्यं' दिवि परमव्योम्नि भवम्, अत एव 'परं' सर्वोत्कृष्टं 'पुरुषम्' ईश्वरमात्मानम् 'उपैति' प्राप्नोति । कोऽसौ । यो 'भक्त्या' भगवदनुग्रहे[5]दिवसालोकप्रभातसंध्यया सकलपुरुषार्थसिद्धिबीजभूतया तथा प्रस्तुतस्वरूपनिरूपणसमाधिसामर्थ्येन 'युक्तः' सन् तस्यामवस्थायाम् 'अचलेन' स्थिरसमाधानेन 'मनसा' अन्तःकरणेन 'सर्वस्य धातारं' परमकारणम् 'अनुस्मरेत्' अन्तकालेऽनुचिन्तयेत् । कथं, कीदृशं च । 'भ्रुवोर्मध्ये' अभ्यासस्वतन्त्रीकृतं 'प्राणम्' आन्तरं मारुतं 'सम्यक्' मध्यमेन मार्गेण 'आवेश्य' संधाय 'आदित्यवर्णं' सर्वतेजोव्यतिरिक्तज्योतीरूपम्, अत एव 'तमसः परस्तात्'

---

१ 'स्मारण' ख. । २ 'अनन्यगतिनान्तःकरणेन' क. । ३ 'सर्वज्ञेभ्यः' क. । ४ 'प्रपद्यते' ख. । ५ 'ग्रहादिवतालोकप्रभाससंध्यया' ख. पाठः ।

अज्ञानस्य पृथक्तया वर्तमानम् । कीदृशं सर्वस्य धातारमनुस्मरेत् परावस्थायां कविमित्यादिविशेषणाविशिष्टत्वात् 'अचिन्त्यं' पारमार्थिकज्ञातृस्वभावत्वात् चिन्तनक्रियायाः कर्मत्वं नेतुमशक्यम्, यतः 'पुराणं कविम्' अनादिं द्रष्टारं, तथा 'अनुशासितारं' सर्वस्य चराचरस्य सर्गस्य तेन तेन नियमेन नियन्तारम्, अतः सर्वज्ञं सर्वकर्तारं चेत्युक्तं भवति; तथा स्वरूपतोऽणुः सूक्ष्मः क्षेत्रज्ञादिः, तस्मादपि 'अणीयांसम्' अतिशयेन अणुम् । इदमत्र तात्पर्यम्—यः परावस्थायामद्वयज्ञानैकविषयत्वात् स्मरणव्यापाराविषयभूतस्तत्संयोगरूपायामपरावस्थायां[1] नियतदेशत्वेन नियताकारत्वेन च यो योगी यथोक्तेन क्रमेण स्मरति, स तमेव पुरुषमुपैति तत्समीपं गच्छति ॥ १० ॥

योगक्रम एव परमपदप्राप्तिफलो यथा भवति, तथा सम्यक् वक्तुं प्रतिजानीते—

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेणाभिधास्ये ॥११॥**

'तत् पदं' योगिभिः प्राप्यं धाम 'संग्रहेण' संक्षेपेण 'ते' तुभ्यम् 'अभिधास्ये' कथयिष्यामि । किं तत् धाम । 'यद् वेदविदः' वेदार्थविशारदाः 'अक्षरं' नित्यं विद्वांसो 'वदन्ति' प्रवचनेन प्रतिपादयन्ति । 'यत्' च 'यतयः' ज्ञानैकनिष्ठाः 'विशन्ति' समापद्यन्ते । 'यत्' च 'इच्छन्तः' प्राप्तुकामाः 'ब्रह्मचर्यं' ब्रह्मणो वेदस्य अध्ययनश्रवणादिना चर्यमाचारं 'चरन्ति' गच्छन्ति समाश्रयन्ते । केचित् 'विदन्ति' इति पाठं पठन्तः एवमेतत् व्याचक्षते—'यथा वेदविद्ग्रहणेन गृहस्थवानप्रस्थाः प्रतिपादिता यतस्ते शास्त्रोक्तक्रियानुष्ठाननिष्णाताः सन्तस्तत् पदं 'विदन्ति' जानन्ति

---

१ 'रादिविषयतः' क. पाठः ।

प्राप्यतया अध्यवस्यन्ति, यतयस्तु कृतकृत्यत्वात् विशन्ति तादात्म्यमाप्नुवन्ति, ब्रह्मचारिणस्तु तत्प्राप्तुकामाः स्वाध्यायशास्त्रार्थबोधादिनिष्ठा व्रतविशेषं भजन्ते इति ॥ ११ ॥

यथाप्रतिज्ञातमभिधातुमाह—

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३ ॥

[1]योगी 'परमां गतिं' पूर्वोक्तं प्रकृष्टं पदं 'याति' प्रतिपद्यते । कोऽसौ । 'यः' एवं 'देहं' शरीरं 'त्यजन्[2]' विमुञ्चन् 'प्रयाति' [3]उत्क्रामति । कीदृशः । 'मामनुस्मरन्' 'योगधारणामास्थितः' मां यथोक्तस्वरूपं परमकारणमोंकारवाच्यं ब्रह्मतत्त्वमनुध्यायन् योगस्य कस्यचित् समाधेरालम्बनीभूते[4]ऽर्थे चित्तनियमरूपां धारणां भूमिकामास्थित आश्रितः । कथमास्थितः । प्रथमतरं 'सर्वद्वाराणि' चक्षुरादीनि चित्तवृत्तिप्रसरवर्त्मानि 'संयम्य' यथास्वं विषयेभ्यः प्रत्याहृत्य, 'मनश्च' उपदेशाधिगते 'हृदि' सर्वसंविदधिकरणभूते देहैकदेशे 'निरुध्य' प्रतिषिद्धेन्द्रि[5]यविषयप्रचारं कृत्वा, तथा 'प्राणम्' अन्तश्चरं मारुतं 'मूर्ध्नि' ब्रह्मरन्ध्रे ब्रह्मपुरार्गलभूतभ्रूमध्यग्रन्थिभेदात् लब्ध ( [6]मार्गं सन्तम् 'आधाय' कृत्वा ), तथा ओमितिप्रसिद्धैकाक्षररूपं 'ब्रह्म' शब्दतत्त्वं 'व्याहरन्' उच्चारयन् । एवं प्राणस्य मूर्ध्नि प्रेरणं, प्रणवस्य उच्चारणं, प्रणववाच्यस्य च मत्स्वरूपस्य अनुस्मरणं चेति सर्वेन्द्रियमनोनियमपूर्वकं युगपत्

---

१ 'स योगी' ख. पाठः । २ 'त्यजन् प्रयाति' क. पाठः । ३ 'व्युत्क्रामति ख. । ४ 'नीकृतेऽर्थे' ख. । ५ 'षिध्य इन्द्रिय' क. पाठः । ६ बन्धचिह्नान्तर्गतं कपुस्तके नास्ति ।

त्रितयमेतत् संपादयन् यो देहविसर्गं करोति, स योगी परमं पदमाप्नोतीति तात्पर्यम् ॥ १३ ॥

तस्मिन् प्रयाणकाले तात्कालिकावस्थाविसंस्थुलचित्तो योगी कथमत्र समाधिं[1] साधयेदित्यत्र पूर्वोक्तं कारणमाह—

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः[2] ॥ १४ ॥**

'तस्य नित्ययुक्तस्य' अविच्छिन्नसमाधेः 'योगिनोऽहं नित्यशः' सर्वासु अवस्थासु सुखात्मिकासु दुःखात्मिकासु वा 'सुलभः' सुप्रापः । कस्य । 'यः सततम्' अव्यवधानेन 'मां' यथोक्तयोगाभ्यस्तरूपतया एकं तत्त्वं परमात्मानम् 'अनन्यचेताः' अन्यतो मद्व्यतिरिक्तात् वस्तुनो निवृत्तान्तःकरणः 'स्मरति' आत्मत्वेन प्रत्यवमृशति ।

'यं यं भावं स्मरन्वापि············।' (८।६)

इत्यादिना उक्तोपपत्त्या सर्वात्मकमत्स्वरूपप्रत्यवमर्शाभ्याससुदृढसंस्कारस्य योगिनस्तस्यामवस्थायामहमात्मभूतत्वात् कथं दुष्प्राप इति तात्पर्यम् ॥ १४ ॥

ये च अनेन क्रमेण मां प्रपन्नास्ते—

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥**

'महात्मानः' यथोक्तज्ञानपरिशीलनभावात् महान् सर्वातिशायी परमेश्वर एव आत्मा येषां, ते तथा, अत एव 'मां' यथोक्तया भक्त्या 'उपेत्य' समाश्रित्य 'परमां संसिद्धिम्' अभेदसमापत्तिलक्षणां परमां फलसंपत्तिमितः संसारात् 'गताः' सन्तः

---

१ 'कथंमतं समाधिं' क. । २ 'देहिनः' क. पाठः ।

'पुनः' भूयो 'जन्म' देहान्तरप्राप्तिं 'नाप्नुवन्ति' न लभन्ते । कीदृशं जन्म । दुःखानामाध्यात्मिकादीनां संग्रहात् त्रिप्रकाराणां विस्तारतोऽनन्तभेदानामालयमास्पदम्, तथा 'अशाश्वतम्' अवश्यमनुषक्तशरीरेन्द्रियादिसर्वस्वविनाशम् । अनात्मनि आत्मप्रत्ययनिबन्धना सर्वदुःखयोगिता जन्मविनाशादिविकारसंबद्धता च जीवानां सामान्यं परमकारणमेकमात्मानं मामहन्तया प्रतिपन्नानां पुनर्न संभवतीति तात्पर्यम् ॥ १५ ॥

एवंच यथोक्तेन नयेन मत्समाश्रयणमेकमुपायं वर्जयित्वा न अन्यत् किंचिदपुनरावृत्तिकारणं संभवतीत्याह—

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

परमप्रकृष्टतपोयज्ञदानादिपुण्यकर्मप्राप्यो ब्रह्मणः प्रजापतेर्लोको ब्रह्मलोकः, तमवधिं कृत्वा यानि कानिचित् पुण्यकर्मप्राप्याणि लोकान्तराणि संभवन्ति, तेषु ये 'लोकाः' तत्तत्क्रियानुष्ठातृत्वात् लब्धोपपत्तयो जनाः, ते यथोक्तज्ञानशून्यत्वात् तासां क्रियाणामनुष्ठितानामन्तवत्त्वे सति 'पुनरावर्तिनः' भूयः संसारवर्त्मनि प्रादुर्भाविनः । 'मां' पुनर्यथोक्तज्ञाननिर्मलभक्तिमात्रैकोपायगम्यं परब्रह्मस्वरूपं परमेश्वरम् 'उपेत्य' तादात्म्यप्रतिपत्तिपर्यन्तमाश्रित्य 'पुनर्जन्म' संसारभूमावुत्पत्तिः 'न विद्यते' एव । मामुपेत्य भूयो न जायन्ते इति उपायजननक्रिययोरेककर्तृत्वमत्र अवगन्तव्यम् ॥ १६ ॥

अथ कथं ब्रह्मलोकवासिनोऽपि पुनरावर्तन्ते, न पुनर्मत्प्रपन्ना इत्यत्र क्रमेण कारणमाह—

सहस्रयुगपर्यन्तमहर्यें ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥

---

१ 'सक्त' क. । २ 'न किंचित्' क. पाठः । ३ 'प्राप्तानि' क. पाठः ।

ये जागरस्वप्नाद्यवस्थाहेतुभूतसूर्योदयास्तमयोपलक्षितमेव कालविशेषमहोरात्रतया मन्यन्ते, न ते तत्त्वतोऽहोरात्रस्वरूपज्ञाः; ये तु 'ब्रह्मणः' प्रजापतेर्दिव्यया संख्यया चतुर्युगानां सहस्रं[1] पर्यन्तोऽवधिर्यस्य, तावत्प्रमाणमहर्वासरं 'विदुः' जानते, तावत्परिमाणामेव च 'रात्रिं' 'ते' तत्त्वज्ञाः 'अहोरात्रविदः' उच्यन्ते। किमनेन उक्तं भवति। यथा मर्त्यानां नालिकाषष्ट्यवच्छिन्नः कालोऽहोरात्रः, तथा ब्रह्मलोकनिवासिनां चतुर्युगसहस्रद्वयावच्छिन्नः कालोऽहोरात्रः। ततश्च यथा मर्त्याः स्वाहोरात्रपरिसंख्यया परिकलितं[2] वर्षशतं पुरुषायुषमतिवाह्य पुनर्देहान्तरं भजन्ते इति इह व्यवस्था, तथा ब्रह्मलोकनिवासिनोऽपि यथोक्तपरिमाणावच्छिन्नाहोरात्रकल्पनया[3] वर्षशतं पुरुषायुषमतिवाह्य पुनर्देहान्तरं भजन्ति,—इति कर्मभूमिभाजां मर्त्यानां ब्रह्मलोकनिवासिनां च पुण्यकर्मणामहोरात्रादेः पुरुषायुषपर्यन्तस्य कालस्य ह्रासदैर्घ्यकृतो विशेषः, नतु संसारित्वे तेषां कश्चित् विशेषः। ततो यथा मर्त्याः पुनरावर्तन्ते, तथा ब्रह्मलोकान्तरनिवासिनोऽपि स्वकालपरिमाणेन पुरुषायुषमतिवाह्य पुनरावर्तन्ते इति

'आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनः' (८।१६)

इति उक्तम्। तेन इदमत्र तात्पर्यम्—यथोक्तज्ञानशून्यपुण्यक्रियाविशेषानुष्ठानलभ्ये कालावच्छेदतुच्छभोगाधिकरणे ब्रह्मलोकादौ विवेकिना न स्थैर्यास्थाविप्रलब्धेन भवितव्यम्। सोऽपि विशिष्टजात्यायुर्भोगसंबन्धात् संसारे एव, युगसहस्रपरिमाणमपि कालदैर्घ्यमन्तवत्त्वात् मर्त्याहोरात्रात् न व्यतिरिच्यते इति यथोक्तं युगसहस्रद्वयपरिमाणं कालमहोरात्रत्वेन ये मन्यन्ते, तेऽहोरात्रविदो जनाः इति उक्तम्॥ १७॥

---

१ 'सहस्रपर्यन्तः' क. पाठः। २ 'कल्पितं' ख.। ३ 'कलनया' ख.।

इदानीं तु तस्य ब्राह्मस्य अहोरात्रस्य स्वरूपप्रतिपादनद्वारेण मर्त्याहोरात्रतुल्यवृत्तान्ततामुपदेश्यानां विवेकनैर्मल्याय उपदेष्टुमाह—

अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

'अव्यक्तात्' ईश्वरोद्भावितजगत्कारणभावात् गुणसाम्यात्मनः प्रधानापराभिधानात् पदार्थात् युगसहस्रपरिमाणब्रह्मदिवसाविर्भावे सति 'सर्वा व्यक्तयः' सर्वभावानां सर्वे विशेषाः 'प्रभवन्ति' प्रादुर्भवन्ति । यथा सूर्योदयात् प्रवृत्ते दिवसे सर्वप्राणिनां सर्वक्रियाविशेषाः प्रभवन्ति, तथैव युगसहस्रपरिमाणे ब्रह्मनिशागमे 'तत्रैव' यथोक्तेऽव्यक्तसंज्ञतत्त्वे 'प्रलीयन्ते' व्यक्तरूपतां परित्यज्य शक्तिमात्रत्वेन अवतिष्ठन्ते यथा इह सर्वप्राणभृतां सूर्यास्तमयात् संजाते निशागमे सर्वेन्द्रियप्रवृत्तयोऽन्तरेव प्रलीयन्ते । किमत्र तात्पर्यम्—इह उदयास्तमययोः सर्गप्रलययोश्च पर्यायेण प्रवहतोरनित्यत्वे नास्ति कश्चित् भेदः, केवलं कलेवरादिविनश्वरभावाहंभावसंकलितनिसर्गनिरवच्छेदसंविदां मायाशक्तिमोहितानां ह्रासदैर्घ्यकल्पनाकृतो विशेषविभ्रमः, न तदा यथोक्तज्ञाननिष्णाततया कालानवच्छिन्ने सत्ये स्वात्मनि अहंप्रतिपत्तिर्विवेकिभिर्दृढीकार्येति । एतदेव निगमयति—'भूतग्रामः स एवायम्' इति । स एव अयं चतुर्दशविधेन प्रपञ्चेन प्रविभक्तो 'भूतग्रामः' चराचरप्राणिवर्गो यथोक्तेन क्रमेण सर्गादौ 'भूत्वा

१ 'न्ततामुपपाद्य' ख. । २ 'हं एव संकलित' क. ।

भूत्वा' पुनः पुनरभिव्यक्तिमासाद्य 'रात्र्यागमे' ब्रह्मरात्रिसंज्ञे प्रलयकाले 'प्रलीयते' न्यग्भवति, 'अहरागमे' सर्गादौ 'प्रभवति' व्यक्तिमासादयतीति ॥ १९॥

एवम् 'आ ब्रह्मभुवनाल्लोकाः पुनरावर्तन्ते' इत्येतदर्थप्रतिपादनप्रसङ्गेन सर्गप्रलयस्वरूपं प्रतिपाद्य इदानीं मत्प्रतिपन्ना येन कारणेन न पुनरावर्तन्ते, तत् प्रतिपादयितुमाह—

परस्तस्मात्तु भावोऽन्यो व्यक्ताव्यक्तः सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

'तस्मात्' अव्यक्तसंज्ञात् जगत्कारणत्वेन अवभासितात् पदार्थात् प्रधानाख्यात् 'परः' पुनरन्यो विलक्षणः 'भावः' परमार्थः सत्पदार्थो विद्यते इति शेषः। कीदृशः। 'व्यक्ताव्यक्तः' व्यक्तं कारणत्वेन प्रधा(नता)नापन्नमव्यक्तं प्रधानात्मकं वस्तु यस्मात्, तथाविधः, विवक्षितेश्वरलक्षणभाववशात् किल अव्यक्तव्यवहारोऽयं प्रतीयते; यदिवा व्यक्तश्च अव्यक्तश्चेति विशेषणसमासाश्रयणेन व्याख्येयमेतत्पदम् । स हि भावो नित्योदितप्रकाशात्मकतयैव सर्वमिदं प्रकाशयन् व्यक्त एव, मायावशात् तु सर्वस्य तथाप्रतिपत्त्यभावादव्यक्तः । तथा 'सनातनः' सदा सर्वकालं भवतीति सनातनो नित्यः । कीदृशोऽसौ । समस्तेषु जडचेतनभेदेन द्विप्रकारेषु अवान्तरभेदादपर्यन्तप्रपञ्चेषु 'भूतेषु' प्राणिषु 'नश्यत्सु' उक्तेन प्रकारेण प्रधाने प्रलयमनुभवत्सु 'न विनश्यति' नित्योदिताद्वैतचित्प्रकाशात्मकत्वात् प्रलीनत्वादिव्यपदेशं न याति, कुतोऽत्यन्ताभावता । तत् कस्मात् न उपलभ्यते इत्याह—अचिन्त्यस्वमायाशक्तिमोहितान् प्रति यथास्थितेन नित्येन

रूपेण अप्रथमानत्वात् 'अव्यक्तः' परमार्थतः पुनः 'अक्षरः' न क्षरति स्वस्मात्[1] स्वरूपात् न संचलति । यश्च एवंविधो भावस्तं 'परमां गतिम्' अनुत्तरां प्राप्तिं 'आहुः' तत्त्वविदः । अत एव कीदृशं तम् । 'यं प्राप्य' आसाद्य आत्मत्वेन प्रतिपद्य प्रशान्तप्राप्यान्तरस्पृहा यथोक्ता योगिनो 'न निवर्तन्ते' संसारसरणिं न अवतरन्ति यतस्तथाविधो यो भावः 'तत् मम' परस्य ब्रह्मणः परमकारणस्य परमेश्वरस्य 'धाम' नित्योदित[2]प्रकाशो निरुत्तरस्थानं वा । [3]तदेवंविधं मां ये प्रपन्नास्ते न पुनरावर्तन्ते इति तथाविधानां योगिनामपुनरावृत्तिकारणं प्रतिपादितम् ॥ २१ ॥

तस्यैव यथोक्तस्य भावस्य स्वरूपं निगमयन् तत्प्राप्त्युपायं स्मारयन्नाह—

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यं प्राप्य न पुनर्जन्म लभन्ते योगिनोऽर्जुन ॥ २२ ॥
यस्यान्तःस्थानि भूतानि यत्र सर्वं प्रतिष्ठितम् ।

य एष यथाप्रतिपादितस्वरूपो भावः 'स परः' सर्वक्षेत्रज्ञातिरिक्तप्रभाव[4]त्वात् निरतिशयः पुरुषशब्दवाच्यः । सर्वशरीरान्तःशायित्वात् पुरुषः परमात्मा । कीदृशः । उक्तवक्ष्यमाणप्रकारेण 'यं प्राप्य' आत्मत्वेन प्रतिलभ्य 'योगिनः' स्वीकृतनानाविधसमाधिभेदाः 'पुनः' भूयो 'जन्म' संसारितया उत्पत्तिं 'न लभन्ते' न आप्नुवन्ति, तथा 'यस्य' एकस्य अन्तः सामान्यसंविल्लक्षणे हृदये स्थितानि सर्वाणि चराचरभूतानि । नहि तेषामेवमन्योन्यविभिन्नरूपतया स्फुरतामद्वयैकचिन्मात्रानुप्रवेशमन्तरेण सत्तासंभवः[5], अत एव 'यत्र' यस्मिन् सकलजगत्पदा-

१ 'स्वात्मनः' ख. । २ 'दितः' ख. । ३ 'तत एवं' क. ख. । ४ 'प्रभव' क. । ५ 'सद्भावः' ख. ।

र्थसार्थसामान्याधारे 'सर्वम्' इदं प्रतिष्ठितं कृतव्यवस्थानम्। स पुनरित्थंभूतो 'भक्त्या' प्रतिपादितोत्तरोत्तरप्रकृष्टार्तत्वादिज्ञानिपर्यन्तचतुरवस्थारूपया सेवया 'लभ्यः' प्राप्यः। कीदृश्या। 'अनन्यया' तत्स्वरूपव्यतिरेकेण सर्वासु अवस्थासु अविद्यमानमन्यदालम्बनं यस्यास्तया तथाविधयेति ॥

अथ अन्यमुत्क्रान्तिविषयं योगोपदेशं प्रस्तावयन्नाह—

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ॥ २३ ॥
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ।

'यत्र' यस्मिन् वक्ष्यमाणे 'काले प्रयाताः' संन्यस्तदेहाः सन्तो 'योगिनोऽनावृत्तिं' तथा 'आवृत्तिं' विशिष्टभोगाधिकरणयोग्यशरीरादिसंबन्धं 'यान्ति' स्वातन्त्र्येण भजन्ते, 'तं' तादृशं वक्ष्यमाणक्रमेण योगिनामेव सुलभं 'कालम्' उपदेक्ष्यामि ॥ २३ ॥

तमाह—

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥ २४ ॥
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः।
धूमः कृष्णस्तथा रात्रिः षण्मासा दक्षिणायनम् ॥ २५ ॥
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते।

इह अग्नीषोमौ प्रकाशतमसी, तदुपलक्षिते दिनरात्री; शुक्लकृष्णौ पक्षौ; तथा षण्मासपरिमाणे उत्तरदक्षिणे अयने,—इति स्थूलदृष्ट्या कालविभागमाचक्षते तस्य देवपितृमर्त्यविषयत्वेन प्रकृष्टमध्यमनिकृष्टपरिमाणतां च। इत्थंस्थिते 'अग्निर्ज्योतिः' सूर्यप्रकाशस्तदुपलक्षितम् 'अहः' त्रिंशन्नालिकावच्छिन्नपरिमाणो दिवसाख्यः कालांशः। आपूर्यमाणसोमोपलक्षिताः पञ्चदश अहो-

१ 'ष्टात्तत्त्वा' क. पाठः। २ 'पाव्यति' क.। ३ 'तथा' क. नास्ति। ४ 'मासोपलक्षितः' क.।

रात्राः 'शुक्लपक्षः' शुक्लशब्देन निर्दिष्टः। तथा मकरादिराशिषट्कसंचारिविरोचनचारोपलक्षिताः षण्मासाः 'उत्तरायणम्' इत्येते कालविशेषाः प्रसिद्धाः। 'तत्र' एवंविधायां कालविशेषसामग्र्यां ये 'ब्रह्मविदः' विज्ञातपरमकारणस्वरूपाः 'प्रयान्ति' उत्क्रामन्ति शरीरमुत्सृजन्ति ते 'ब्रह्म' परं तत्त्वं 'गच्छन्ति' अपुनरावृत्तिं मोक्षगतिं प्राप्नुवन्तीत्यर्थः। तथा 'धूमः' जलात्मकत्वात् सोमः, तथा तदुपलक्षिता 'रात्रिः' प्रसिद्धा। 'कृष्णः' क्षीयमाणसोमोपलक्षिताः पञ्चदश अहोरात्राः कृष्णः पक्षः। स च क्रमापेक्षया यथापाठं न व्याख्यातः। तथा कर्कटादिराशिषट्कसंचारिसूर्योपलक्षि[१]ताः 'षण्मासा दक्षिणायनम्'। 'तत्र' एवंविधायां कालसामग्र्यां पुनर्जन्महेतुभूतं 'चान्द्रमसं ज्योतिः' तेजः 'प्राप्य योगी' समाधिमान् 'आवर्तते'[२] पुनः संसारमार्गमवतरति। अत्र केचित् विचक्षणा एवं विचारमारभन्ते—इह तावत् ब्रह्मणो यथोक्तस्य परमस्य कारणस्य द्विविधं वेदनम्—स्वसंवेदनेन साक्षात्कारः, आप्तोपदिष्टस्य वा स्वरूपावगममात्रम्। तत्र आद्येन प्रकारेण ये ब्रह्मविदस्तेषां प्राप्तप्रापणीयत्वादुक्तकालसामग्री न ब्रह्मप्राप्तिहेतुत्वमर्हति, द्वितीयेऽपि पक्षे स्वरूपावगममात्रेण ये ब्रह्मविदस्तेषामसाक्षात्कृततत्त्वानां यथोक्तकालविशेषप्राप्तिमात्रमपुनरावृत्तिहेतोर्ब्रह्मणः प्राप्तिकारणमिति न शक्यते वक्तुम्। एवमुभयरूपाणामपि ब्रह्मविदामन्तकाले यथोक्तकालप्राप्त्यधीना ब्रह्मप्राप्तिरिति न युक्त्या संगच्छते। योऽपि योगी स्वीकृतसमाधिविशेषस्तस्य तद्बला[३]नपोहेन यथोक्तकालविशेषप्राप्तिमात्रादेव पुनरावर्तनमयुक्तिमत्

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।' (८।६)

१ 'लक्षितः' ख.। २ 'निवर्तते' इति पाठः। ३ 'लापोहेन' क.।

इत्यादिना प्रतिपादितोपपत्त्या सुदृढभावनाभावितस्य भावस्य अव्यभिचारात् मन्थरं भावितस्य तत्काल[1]मसंस्मरणे सति पुनरावृत्तिः स्थितैव, किमुक्तः कालः करिष्यति । तदेवं योगी यथोक्तकालविशेषप्राप्तेः पुनरावर्तते इत्येतदपि न हृदयावर्जकम् । यदप्युच्यते—यद्येष यथोक्तः कालो ब्रह्मप्राप्त्यादिहेतुर्न भवेत्, तत् कथं ब्रह्मविदोऽपि शान्तनवस्य तनुसंन्यासार्थमुत्तरायणप्रतीक्षा श्रूयते । सत्यं श्रूयते, किन्तु ब्रह्मप्राप्तिहेतुत्वेन तेन असौ कालो न प्रतीक्षितः । यदि हि स एव ब्रह्मप्राप्तिहेतुः स्यात्, तदा सर्वैर्ब्रह्मविद्भिर्देहोत्सर्गे स एव अपेक्ष्येत, तत्कालोत्सृष्टदेहाश्च सर्व एव अनावृत्तिभावं भजेयुः । नच एवमस्ति । नच एवंविधे काले म्रियेतेति विधिरुपपद्यते सर्वस्य मरणे स्वातन्त्र्याभावात् । भीष्मस्य तु स्वतन्त्रमृत्युत्वात् तादृक्कालप्रतीक्षणे निमित्तान्तरमनुमेयम् । तत् च इदम्—यत् किल स्थूलया दृशा यथोक्तः कालः कलेवरसंन्यासावसरे समुपनतो गतिविशेषाधानहेतुर्भवति,—इत्यागमवचनप्रमाणीकरणार्थं भीष्मस्य तादृक्कालप्रतीक्षोद्यमः, तस्मात् यथोक्त[2]कालस्य मुख्यतया न अहोरात्रादिरूपत्वम् । ततश्च ब्रह्मविदां योगिनां च यथाक्रमं ब्रह्मप्राप्तेः पुनरावृत्तेश्च कारणभूतं यदेतत् कालग[3]तिद्वयमुक्तम्, तत्र अवश्यं कश्चित् विशेषो बोद्धव्यत्वेन वर्तते । वक्ष्यति हि

'नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।' (८।२७)

इति । नच एतयोः सृत्योर्बाह्यकालविशेषरूपयोर्देवयानपितृयानसंज्ञामात्रस्य ज्ञानं ब्रह्मादिप्राप्तिहेतुर्भवेत् । अतः कश्चित् विशेषो यथोक्तार्थसंगतिहेतुरत्रानुमेयः,—इत्याचक्षते । कालस्य हि बाह्याभ्यन्तरभेदेन रहस्यशास्त्रेषु द्विप्रकारता प्रतिपादिता । तत्र

---

१ 'तत्कालसं' क. । २ 'क्तस्य' ख. । ३ 'गतित्वमुक्तं' ख. ।

प्रसिद्धसूर्येन्दुचारोपलक्षितो बाह्यप्रकारः, प्राणापानलक्षणसूर्येन्दुचारोपलक्षितस्तु आभ्यन्तरः। तत्र मुख्यस्य बाह्यस्य प्रतिपादितबाधकसद्भावात् गौण आभ्यन्तरः समाश्रीयते, तेन अग्न्यादय उत्तरायणपर्यन्ताः शब्दाः प्राणगतिप्रतिपादितत्वेन अत्र प्रयुक्ताः, यतः प्राणगतिरेव दिवसाद्युत्तरायणान्तकालावयवत्वेन तत्र तत्र रहस्यशास्त्रेषु तत्तद्विशिष्टशरीराद्यपेक्षया प्रसिद्धा। इत्थंस्थिते येषां यथोक्तज्ञाननिष्ठतया ब्रह्मविदां सतामन्तकाले स्वरसेन मूर्धच्छिद्राख्यब्रह्मद्वारवाहिनि प्राणचारे नियमितं संवित्स्रोतः[1] प्राणोपशान्तिक्षणे सर्वतो निस्तरङ्गनिसर्गनिर्मलसामान्यसंविन्महोदधौ[2] प्रविश्य समरसीभावमापद्यते, तेषां ब्रह्मप्राप्तिरव्यवधानेन उपपन्ना। स हि ब्रह्मविदां देवयानः पन्थाः। एषा एका तद्विषया शाश्वतिकी गतिः। यस्तु यथोक्ततत्त्वज्ञानव्यतिरेकेण अभ्यासस्वीकृतकेवलयोगः, तस्य योगिनो यथोक्तप्राणगतिनियमितमपि संवित्स्रोतः प्राणोपशान्तिक्षणे ब्रह्मवेदित्वाभावात् देहाद्यहंप्रत्ययपर्वतप्रतिहतप्रसरं सत् परावर्तते। परावर्तमानं च धूमादिदक्षिणायनशब्दान्तप्रतिपादितामपानवृत्तिमेव पितृयाणलक्षणां गतिं समाश्रित्य योगाभ्यासप्रकर्षानुसारोचितं विशिष्टं शरीरान्तरमाविशति, यत्र पूर्वाभ्यासह्रियमाणचित्ततया प्रकृष्टतरेण उत्साहेन यतमानः परां सिद्धिं प्राप्स्यतीत्युक्तम्। तदयमत्र संक्षेपार्थः—ये ज्ञानित्वात् ब्रह्मविदः सन्तोऽन्तकाले यथाप्रतिपादितेन क्रमेण प्राणशक्त्यालम्बनचित्तवृत्तयस्तत्प्रशान्तिक्षणेऽपि अविलुप्तपरतत्त्वस्मृतयो देहमुत्सृजन्ति, ते निर्व्यवधानब्रह्मप्राप्तिवशात् न पुनरावर्तन्ते। ये तु केवलयोगिनः सन्तः प्राणवृत्तिमेव आश्रित्य देहमुत्सृजन्तो[3] ज्ञानित्वाभावात् परतत्त्वस्मृत्यभावे[4] सति उत्क्रा-

१ 'तस्संवि' क. पाठः। २ 'निरवच्छेदनिस्तरङ्ग' ख.। ३ 'जन्तेः' ख. पाठः। ४ 'तिभावे' ख.।

मन्ति, ते देहाद्यनुपरताहंप्रत्ययत्वादपानवृत्तिं संसारमार्गमाश्रित्य विशिष्टदेहान्तरं[1] प्राप्नुवन्ति, यतः सर्वस्य कस्यचित् शरीरिणः सर्वसंसारिसाधारणप्राणवृत्त्याश्रयणेन वर्तमानात् देहादुत्क्रान्तस्य अपानवृत्त्याश्रयणेन भविष्यद्देहसंक्रान्तिर्भवति[2]। ब्रह्मविदां योगिनां च इह[3] प्रकरणे विशेष एव प्रतिपादितः ॥ २५ ॥

अत एव प्राणापानलक्षणान्तरविशिष्टमार्गद्वयत्वेन एतत् संग्रहीतुमाह—

शुक्लकृष्णे[4] गती ह्येते जगतः शाश्वते मते ।
अनयोर्यात्यनावृत्तिमेकयावर्ततेऽन्यया ॥ २६ ॥

'एते' यथोक्ते द्वे 'गती' प्राणापानवृत्तिरूपौ देवयानपितृयाणसंज्ञौ द्वौ मार्गौ 'जगतः' सर्वलोकस्य 'शाश्वते'[5] नित्ये । तेन[6] न सर्वः कश्चित् जनः[7] प्राणमार्गाश्रयणेन देहादुत्क्रामति, किन्तु अपानमार्गाश्रयणेन देहान्तरे संक्रामति । ब्रह्मविदो योगिनश्च अयं[8] विशेषो यत् 'अनयोः' गत्योर्मध्यात् 'एकया' ऊर्ध्ववाहप्राणरूपया शुक्लया गत्या यथाप्रतिपादितेन प्रकारेण अन्तकाले समाश्रितया ब्रह्मवित् 'अनावृत्तिं याति' ब्रह्म प्राप्नोति । योगी तु तयैव उत्क्रामन् 'अन्यया' अपानरूपया कृष्णया उक्तेन हेतुना 'आवर्तते' विशिष्टदेहान्तरे संक्रामति ॥ २६ ॥

यतः—

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

'एते' यथाप्रतिपादिते 'सृती' प्राणापानरूपे गती 'जानन्'

---

१ 'विशिष्टं' ख. । २ 'भविष्यति' ख. । ३ 'देहप्रकरणे' क. पाठः । ४ 'कृष्णगती' ख. । ५ 'शाश्वते' इति च्छान्दसः पाठः इति ख.पुस्तकेऽधिकः । ६ 'तेन नित्येन' ख. पाठः । ७ 'नस्तिर्यग्वाहिप्राणवाहि' ख. । ८ 'अयं तु' ख. ।

यथोक्तया महत्तया प्रतिपद्यमानो 'योगी' प्राक्प्रतिपादितस्वीकृतमुख्ययोगो 'न' कश्चित् 'मुह्यति' सर्व एव तद्गतिज्ञः सन् ब्रह्मप्राप्तिहेतुगतिसमाश्रयणेन ब्रह्मैव प्राप्नोति, नतु संसारमितरगतिपरिहारात् । एतयोश्च गत्योरेवंविधां महत्तां ब्रह्मविदां ज्ञेयत्वेन स्थितां तत्त्वविदो वदन्ति । [1]मनःप्रसरसहचरोऽयं प्राणप्रसरो यत उदेति, यत्र च अस्तमेति; तत् कालकलनादि[2]संकलप्रपञ्चविरहितब्रह्मतत्त्वोपलब्धिपदम् । ततश्च यथोक्तप्राणप्रसरनि[3]बद्धः सकलः कालादिः प्रपञ्चस्तदुदयास्तमयदशाविमर्शक्षमसंविदां ब्रह्मविदां प्रलीयते । तादृशीं च दशामासाद्य यो ब्रह्मवित् परमयोगी देहमुत्सृजति, स ब्रह्मण्येव परिणतो न पुनरावर्तते । यस्तु केवलयोगी तां दशां प्रत्यवमर्ष्टुं (म्रष्टुं) न कुशलः, स चान्द्रमसं ज्योतिरपानप्रसररूपमाश्रित्य उत्क्रामन् देहान्तरे संक्रामति, यत्र क्रमेण सिद्धिमाप्स्यतीति । एवमनयोर्गत्योः सिद्धिहेतुविभा[4]गविज्ञानम् । अत एव उक्तं

'नैते सृती पार्थ जानन् योगी मुह्यति·········।'

इत्यादि । यत एवं, 'तस्मात् सर्वेषु कालेषु' बाह्यदृष्ट्या उत्तरायणदक्षिणायनादिबहुभेदप्रतिपादितेषु 'योगयुक्तो भव' यथोक्तेन प्रकारेण प्राणापानगतिज्ञाना[5]त्मके योगे समाधौ युक्तोऽवहितो भव ॥ २७ ॥

यतोऽस्य योगस्य अयं प्रभावः—

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत् पुण्यफलं प्रदिष्टम् ।

---

१ 'सर्वदेहेषु मनः' ख. पाठः । २ 'कलनास' ख. । ३ 'निबन्धः' क. ।
४ 'विभाव' ख. । ५ 'त्मकयोगी' ख. पाठः ।

अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

'इदं' सप्तप्रश्नात्मकव्याकरणरूपं[1] वस्तु 'विदित्वा' ज्ञात्वा 'योगी' यथोक्तसमाधिः 'तत् सर्वं' वेदाध्ययनयज्ञतपोदानादि अन्तवत् पुण्यक्रियाफलम् 'अत्येति' अतिक्रामति, यतः 'आद्यम्' अनुत्तरमत एव 'परम्' अनन्तानन्दमयत्वादत्युत्कृष्टं 'स्थानं' धाम 'उपैति' प्राप्नोति परमात्मनि स्वाभाविकीं प्रतिष्ठां लभते इति। यद्यपि एवं कैश्चिदयमर्थो व्याख्यातः—यथामुया एव वृत्त्या उत्तरायणसामग्र्या[2] प्रयाता ब्रह्मविदोऽर्चिरादिसंज्ञलोकान्तराक्रमणक्रमेण ब्रह्म गच्छन्ति, योगिनश्च अत एव योगिशब्देन उक्ता दक्षिणायनकालसामग्र्यां प्रयाताः सन्तः चान्द्रमसं ज्योतिः प्राप्य धूमादिसंज्ञलोकान्तराक्रमणक्रमेण संसार आवर्तन्ते इति। पूर्वोक्तयुक्त्या च एतदपि व्याख्यानं न संगच्छते। यथोक्तयुक्त्या च अयमपि क्रमोऽनयोरेव गत्योरन्तर्भवतीति केचित् मन्यन्ते। तदत्र परमार्थवेदिनः प्रमाणमिति ओम् ॥ २८ ॥

गम्भीरैर्विपुलैः स्वभावविमलैः श्रीमत्पदार्थोज्ज्वलैः
स्फीतां सप्तभिरम्बुराशिभिरिव ब्रह्मादिभिर्वस्तुभिः।
अध्यायस्य नरोऽष्टमस्य विवृतिं पृथ्वीमिमामञ्जसा
यः स्वीकर्तुमलं स एव विदुषां साम्राज्यमेकोऽर्हति ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणेऽष्टमोऽध्यायः ॥ ८ ॥

---

१ 'प्रश्नसप्तकव्याक' ख.। २ 'कालसामग्र्या॰ ख.।

## अथ नवमोऽध्यायः।

अष्टमाध्यायपरिसमाप्तौ सप्तमप्रश्ननिर्णयेऽन्तकाले शुक्लकृष्णगतिद्वयज्ञानं ब्रह्मप्राप्त्युपायत्वेन उपदिष्टम्, अतस्तावन्मात्र एव ब्रह्मप्राप्त्युपायस्त्वया मा वेदि,—इति अर्जुनमष्टमाध्याये प्रतिपादितमेव उपदेशं स्मारयन् संग्रहेण भगवानुवाच—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

तुशब्दो व्यतिरेके। अष्टमाध्यायोक्तलक्षणोपायव्यतिरेकेण 'इदं' स्वबुद्धिनित्यसंनिहितं 'ज्ञानं' ब्रह्मप्राप्त्युपायभूतं विज्ञानेन स्वसंवित्साक्षात्कारपर्यन्तेन विशिष्टेन ज्ञानेन बोधेन संयुक्तं तुभ्यमहं प्रकर्षेण संक्षेपतः सारप्रतिपादनरूपेण अतिशयेन 'वक्ष्यामि' कथयिष्यामि। कीदृशाय। 'अनसूयवे' शुद्धातिशुद्धबुद्धित्वात् यतोऽस्मै ज्ञानाय अनसूयसि यथोक्तस्य फलस्य असंभावनावशादज्ञवत् न गर्हणमारभसे। कीदृशं ज्ञानं वक्ष्यामि। 'गुह्यतमं' गुह्यं गुह्यतरं च पूर्वेषु अध्यायेषु ज्ञानमुक्तम्, इदं तु तदपेक्षया अतिगुह्यं, अनाविर्भूतविवेकजज्ञानानां गुहायां दूरतरेऽध्वनि स्थितं, रहस्यतया वा गुह्यम्। अत एव त्वं यत् विदित्वा जन्मजरामरणचक्रपरिवर्तनलक्षणात् 'अशुभात्' अश्रेयसः 'मोक्ष्यसे' स्वयमेव मोक्षं प्राप्स्यसि ॥ १ ॥

यतो वक्ष्यमाणज्ञानोपायनिष्ठस्य अन्तकाले गतिद्वयज्ञानाभ्युपायव्यतिरेकेणापि ब्रह्मप्राप्तिर्निर्दिष्टैव, अत एव अस्य ज्ञानस्य प्रशंसार्थमाह—

---

१ 'प्तावष्ट' ख. पाठः। २ 'क्त एव' ख. पाठः। ३ 'योऽस्मै' क. पाठः। ४ 'अज्ञानवत्' ख. पाठः। ५ 'परिवर्तमानलक्षणात्' क.।

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

'इदं' वक्ष्यमाणं ज्ञानम् 'उत्तमम्' अनन्यसामान्यं 'पवित्रं' पावनं सर्वकिल्विषकलङ्कपङ्कसंक्षालनहेतुः । सन्ति हि पवित्राणि तीर्थमन्त्रतपोयज्ञदानादीनि । तानि[1] तु ज्ञानरहितत्वादन्तवन्ति यदि; परमेतज्ज्ञानसंस्कृतानि अनन्तफलत्वमश्नुवीरन्, अत एव उत्तमं पवित्रमिति उक्तम् । यतो 'राजविद्या' एषा राज्ञां जनकाश्वपतिप्रभृतीनामुग्रं स्वकर्मापि अनुतिष्ठतामेषा विद्या ज्ञानमपवर्गफलत्वेन श्रूयते । ततश्च तेषां राज्ञां 'गुह्यं' रहस्यमेतत्[2], यतः 'प्रत्यक्षावगमं' प्रत्यक्षः स्वसंवेदनवेद्योऽवगमो बोधो यस्य तत् तथाविधं, अन्येषां हि पवित्राणां कालान्तरे देहान्तरे लोकान्तरे च फलावगमो भविष्यति; तथा 'धर्म्यं' धर्मात् शास्त्रोदितात् वर्णाश्रमक्रमविभक्तात् सदाचारादनपेतम्, अत एव 'कर्तुं' संपादयितुं 'सुसुखम्' अत्यन्तसुखकरं सहजस्वभावकर्ममात्रसाधनत्वात्[3], तथाविधं सदपि 'अव्ययम्' अविद्यमानक्षयं तत्प्राप्यस्य फलस्य मत्समापत्तिलक्षणस्य नित्यत्वात् ॥ २ ॥

एतच्च मदनुग्रहोत्थितभक्तिश्रद्धादिगुणसंपद्भिरेव[4] सुलभं यतः—

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

'अस्य' उक्तस्य वक्ष्यमाणस्य च ज्ञानरूपस्य 'धर्मस्य अश्रद्दधानाः' यथोक्तफलासंभावनापराः 'पुरुषा मां' यथोक्तस्वरूपं परं ब्रह्म 'अप्राप्य' मत्समापत्तिमनासाद्यैव मृत्युसंसारयोर्भूतेषु नित्यपरिवर्त्तिनोर्मरणजन्मनोर्वर्त्मनि 'निवर्तन्ते' पुनः पुनराप-

---

१ 'दीनि तु' ख. । २ 'राज्ञां रहस्यं' ख. । ३ 'स्वभावमात्र' ख. । ४ 'ग्रहोद्गत' ख. ।

तन्ति । किमुक्तं भवति । मदनुग्रहसुधासागरसमुद्गतश्रद्धासुरत-रुमञ्जरी सकलसिद्धिप्रसवैकहेतुर्यैरुपास्यते[1], तैरेव अनेन ज्ञानेन सुलभो, न अन्यैरिति ॥ ३ ॥

तदिदानीं ज्ञानं प्रतिपादयितुमाह—

मया ततमिदं सर्वं[2] जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

मम संबन्धिनम् 'ऐश्वरम्' ईश्वरे सर्वथा स्वामिनि एकस्मिन् भवं 'योगम्' अनन्याधिकरणं समाधिं 'पश्य' प्रतिपद्यस्व । यतः 'इदं' वेद्यत्वेन सर्वप्रमातॄणां 'सर्वं' संक्षेपतश्चराचरभावरूप-मवान्तरभेदपरिकल्पनया निष्पर्यन्तं वस्तु 'मया' उपादानसह-कार्यादिकारणान्तरनिरपेक्षेण नित्यनिर्विकारसामान्यसंविन्मात्र-स्वभावाप्रच्युतेन अनन्यानुकार्यनिरतिशयनिजक्रीडामात्रैकप्रयोज-नेन स्वेच्छैकसाधनेन[3] एकेन कर्त्रा 'ततम्' इत्थमनन्ताश्चर्यावभास-रूपतया विस्तारितं 'जगत्' भुवनम् 'अव्यक्तमूर्तिना' मन्मायो-त्थापितैः सर्वैः प्रमातृभिरिदन्तया परिच्छेत्तुमशक्यत्वादव्यक्ता व्यपदेश्यव्यक्तिविरहिता मूर्तिराकृतिः स्वरूपं यस्य, स तथा तेन तादृशेन । किमुक्तं भवति । ब्रह्मादेरारभ्य परमक्षुद्रजन्तुपर्यन्तस्य सर्वस्य प्रमातुर्यत् संवेद्यं वस्तु येन येन प्रकारेण यदा यदा यत्र यत्र प्रकाशते, तत् संवेद्यमानं सन्तमात्मानं लभते, संवेद्यमानता[4] च संवेदितुः कर्मभावापत्तिः, संवेदिता च पर-मार्थतः सदा एक एव भवितुमर्हति यो न कथंचित् न कदा-

---

१ 'तुरुपास्यते' क. ।   २ 'कृत्स्नं' ख. पाठः ।   ३ 'स्वेच्छासा' क. ।
४ 'संवेद्यमानता ससंवेद्यमानता च' ख. पाठः ।

चित् न कुत्रचित् संवेद्यत्वलक्षणविशेषणसंपर्कं सहते । ततो 'मत्स्थानि' मयि एकस्मिन् संवेदितरि स्थितानि सर्वाणि निखिलानि स्थावराणि जङ्गमानि च संवेद्यानि भूतानि । एवं सर्वकर्ता सर्वशक्तिहेतुः 'अहं न च तेषु' भूतेषु 'व्यवस्थितः' यथा नित्यसंवेदितृत्वमात्रस्वभावाव्यभिचारिणो मम व्यवस्था संवेद्यानां सर्वभूतानां व्यवस्थितिहेतुः, न तथा सर्वभूतव्यवस्था मद्व्यवस्थितिहेतुरित्यर्थः । सर्वाणि हि भूतानि संवेद्यत्वादेव उत्पादविनाशादिधर्मसंबन्धादनित्यानि, मम तु संवेदितृत्वमेकं लक्षणमिति कथं मम भूतस्थित्यधीना अवस्थितिर्भवेत् । इत्थं मदधीनस्थितिकानि अपि 'भूतानि न मत्स्थानि' मयि संवेदितरि मद्रूपतयैव न स्थितिं भजन्ते वेद्यतया स्फुरणात्; भूतस्थितिहेतुरहं यथा संवेदितृतयैव नित्यं स्फुरामि, न तथा अन्यानि अपि भूतानि संवेद्यत्वेनैव तेषां प्रतीतेः । एवं यथोक्तेन प्रकारेण 'ममात्मा' स्वभावो 'भूतभृत्' भूतानि बिभर्ति धारयति तेन तेन रूपेण अवस्थापयति 'नच भूतस्थः' न भूतस्थित्यधीनस्थितिकः,—इत्युक्तमेव । अतश्च अनेन क्रमेण 'भूतभावनः' भूतानि भावयति सृजतीत्यर्थः ॥ ५ ॥

अत्र केनचित् सादृश्यांशेन दृष्टान्तमाह—

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

एवमनेन प्रकारेण मयि अनवच्छिन्नमहिम्नि स्थितानि आधेयत्वमापन्नानि तत्तद्देशगतानि सूक्ष्माणि महान्ति च 'भूतानि उपधारय' बुध्यस्व । कथम् । यथा आकाशे निरवच्छेदव्याप्तौ 'नित्यं' सदैव स्थितः 'वायुः' । कीदृशः । 'सर्वत्रगः' तत्र तत्र देशे गतः कृतव्याप्तिः 'महान्' च अन्यापेक्षया व्यापकः । एवं

'मत्स्थानि' भूतानि बुध्यस्व । अत्र इदं तात्पर्यम्—यथा वायोः सर्वत्र सर्वगतत्वमहत्त्वादयो धर्मा अपर्यन्ताकाशावकाशैकनिबन्धनाः, तथा सर्वभूतानां सर्वे धर्मा मत्स्वभावानुप्रवेशैकनिबन्धना इति ॥ ६ ॥

तदेतत् निगमयितुमाह—

एवं हि सर्वभूतेषु चराम्यनभिलक्षितः ।
भूतप्रकृतिमास्थाय सहैव च विनैव च ॥ ७ ॥

'एवम्' अनेन वाय्वाकाशसंबन्धोपमेन[1] प्रकारेण 'सर्वभूतेषु चरामि' तानि व्याप्नोमि 'अनभिलक्षितः' इदन्तया केनचिदपि अनवधारितस्वरूपः । किं कृत्वा चरामि । 'भूतप्रकृतिं' प्राक्प्रतिपादितचेतनात्मकभूतलक्षणां प्रकृतिं स्वभावम् 'आस्थाय' अधिष्ठाय । कथं चरामि । 'सह चैव विनैव च' नित्यमन्योन्यसंबद्धत्वात्[2] सह वेद्यवेदकलक्षणस्वरूपाभेदात्, विनैव अन्योन्यपृथक्तया एव । अन्यो हि वेदकस्वरूपो मम स्वभावोऽन्यच्च मदिच्छोद्भावितं वेद्यस्वरूपम् ॥ ७ ॥

मदिच्छोद्भावितत्वमेषां प्रतिपादयितुमाह—

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामकीम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ८ ॥

एतानि चेतनाचेतनानि 'सर्वभूतानि' महाकल्पावसाने मदीयां 'प्रकृतिं' स्वभावं 'यान्ति' मदिच्छयैव मयि प्रलीयन्ते इत्यर्थः । 'तानि' च 'कल्पादौ' कल्पान्तरारम्भेऽहमेव[3] 'विसृजामि' चतुर्दशविधेनैव भेदेन अवभासयामि, नतु यानि एव प्रलीनानि तानि एव पुनः सृजामीति अत्र अर्थः । ईश्वरेच्छाया अपर्यनुयोज्यत्वात् स्वातन्त्र्येऽपि चतुर्दशविधमेव भूतसर्गं प्रलयोत्पादावस्थयोः संहरति सृजति च परमेश्वर इति तात्पर्यम् ॥ ८ ॥

---

१ 'न्धौपम्येन' ख. पाठः । २ 'न्धात्' ख. । ३ 'कल्पारम्भे' ख. पाठः ।

एतदेव निगमयति—

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ९ ॥

'स्वां प्रकृतिं' निजं स्वभावं, न अन्यत् किञ्चित् कारणान्तरम् 'अवष्टभ्य' अवलम्ब्य 'इमं' सर्वं 'भूतग्रामं' प्राणिसमूहं 'पुनः पुनः' भूयो भूयोऽनादिप्रबन्धप्रवृत्तकल्पादिकालकल्पनया 'सृजामि' एवमुद्भावयामि[1] 'प्रकृतेः' एव 'वशात्' मत्स्वभावपारतन्त्र्यादेव 'अवशम्' अस्वतन्त्रम् । कल्पान्ते च तथैव संहरामीति अत्र अनुवर्तनीयम् ॥ ९ ॥

किंच—

नच मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ १० ॥

'तानि' सर्गसंहारादिरूपाणि 'कर्माणि न पुनर्मां' बध्नन्ति मन्मायोद्भावितनानाक्षेत्रज्ञवत् नियमितविपाकारम्भकत्वादिना न परतन्त्रीकुर्वन्ति । यथा क्षेत्रज्ञानां कर्माणि जात्यायुर्भोगलक्षणविपाकारम्भकत्वेन संसारबन्धकारणत्वमापद्यन्ते, न तथा सर्गादिकर्माणि ममेत्यर्थः । कीदृशं सन्तं मां न निबध्नन्ति,–इति हेतुगर्भं विशेषणमाह 'तेषु कर्मसु' असक्तत्वात्[2] ममत्वादिग्रहाभावेन अनिमग्नचित्तत्वात् 'उदासीनवत्' तटस्थवत् 'आसीनं' स्थितम् । यथा परकीयकर्मसु परो "नैतानि मम तत्तत्फलदानि[3]" इति मन्यमानस्ताटस्थ्यमनुभवंस्तैस्तैः कर्मभिः स्वफलभोक्तृत्वादिना न निर्यम्यते[4], तथा सर्गादिभिः कर्मभिर्न निबध्यः, । यतस्तानि सर्गादीनि कर्माणि अचिन्त्यवैभवस्वमायोद्भावितान्योन्यभे-

---

१ 'उद्भासयामि' ख. । २ 'असङ्गत्वात्' ख. पाठः । ३ 'फलानि' क. । ४ 'नयम्यते' ख. ।

दान् क्षेत्रज्ञान् प्रति, मम सर्वतः स्वेच्छामात्रेण तथावभासकत्वमेव कर्तृत्वम् । क्षेत्रज्ञा एव हि मन्मायामोहिताः सन्तोऽन्योन्यभेदेन अवभासमानानां भावानां सर्गाद्यवस्थायोगित्वं प्रतिपद्यन्ते, मम पुनरेते सर्वे भावास्तत्तत्सर्गाद्यवस्थाजुषोऽपि अद्वयचिन्मात्रलक्षणात् स्वभावात् न भिद्यन्ते,—इति । अनेन तेषु कर्मसु उदासीनवदासीनं मामेतानि न निबध्नन्तीति उक्तम् । एष च अर्थः प्रागेव पुनः पुनः

'तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ।' ( ४।१३ )

इत्यादिना

'न मां कर्माणि लिम्पन्ति न मे [१]कामः फलेष्वपि ।' (४।१४)

इत्यादिना च प्रतिपादितः ॥ १० ॥

यदि एवं वस्तुस्थित्या परमेश्वरो न इदं जगत् साक्षात् सर्गादिकर्मणा नियुनक्ति, तत् केन इदं जगत् सृज्यते इत्याह—

**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ ११ ॥**

'मया' परमेश्वरेण नित्यं स्वभावमात्रावस्थितेनैव 'अध्यक्षेण' अधिष्ठात्रा हेतुभूतेन 'प्रकृतिः' सप्तमेऽध्याये चेतनाचेतनविभागेन प्रतिपादितपरापरस्वरूपा स्वभाववृत्तिरेव अपर्यन्तस्थावरजङ्गमभेदयुक्तं जगत् 'सूयते' जनयति । 'अनेन हेतुना' निमित्तेन इदं 'जगद् विपरिवर्तते' सर्गस्थिति[२]संहारप्रबन्धचक्रे परिभ्रमति ॥ ११ ॥

एवमद्भुतैश्वर्यैकास्पदम्—

**अवजानन्ति मां मूढा मानुषीं तनुमास्थि[३]तम् ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ १२ ॥**

'मूढाः' मायामुषिततत्त्वज्ञानाः 'मां' यथाप्रतिपादितस्वभा-

१ 'कर्म' ख. । २ 'स्थितिप्रबन्ध' क. । ३ 'आश्रितं' क. ।

वम् 'अवजानन्ति' नित्योदितनिरतिशयप्रकाशप्रद्योतमानस्वभावमपि मोहबलोत्साहविच्छेदात् मज्जिज्ञासायामपि अवज्ञामाश्रयन्ति । कीदृशं सन्तं मामवजानन्ति । 'मानुषीं तनुमाश्रि[1]तम्' मानुषीग्रहणमुपलक्षणार्थम्, तेन मनुष्यादिभेदेन अन्योन्यभिन्नानन्ताकृतिविशेषरूपां पारमार्थिकस्वरूपतिरो[2]धानतिरस्करिणीमाश्रितम् । अत एव ते मूढाः । कीदृशाः सन्तो मामवजानन्ति । एवंविधया मन्मायया मदीयं 'परं' एतस्मात् नानाचेतनाचेतनभावलक्षणात् प्रपञ्चाद[3]न्यं विलक्षणम्, तथा 'अव्ययम्' अविनश्वरम्, अत एव 'अनुत्तमम्' उत्तरोत्तरविचार्यमाणप्रकर्षे सति अविद्यमानोऽन्य उत्तमः प्रकृष्टो यस्मात्, तं तथाविधं 'भावं' पारमार्थिकीं सत्ताम् 'अ[4]जानन्तः' सन्तो मामे[5]वं विमर्शाभावादबुद्ध्यमानाः ॥ १२ ॥

यतस्ते मूढाः सन्तः—

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**आसुरीं राक्षसीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १३ ॥**

'मोहि[6]नीं' स्वभावाज्ञानकारिणीं 'प्रकृतिं' गुणमयं स्वभावं 'श्रि[7]ताः' देहात्मकाहङ्कारनिबन्धनस्थितयः । अत एव कीदृशीं प्रकृतिम् । 'आसुरीं' रजोलेशानुगततमःप्रधानां, तथा 'राक्षसीं' केवलतमःप्रधानाम्, उत्तमाधमासुरसर्गभेदत्वेन प्राक् प्रस्तावनायां प्रतिपादितस्वरूपाम् । यत एवंविधां प्रकृतिं श्रितास्ततो 'मोघाशाः' मोघा[8]ः फलशून्या आशा येषां ते तथाविधाः । ते हि आसुरराक्षसप्रकृतित्वात् रजस्तमोमयत्वे सति कामात्मानो भोगविषयं संकल्पमेव कुर्वन्ति, नतु तत्फलप्राप्तिहेतुं शास्त्रोदितं

---

१ 'आश्रितं' क.। २ 'धातिर' क.। ३ 'अन्योन्यं' ख.। ४ 'अवजानन्तः' क.। ५ 'एव' ख.। ६ 'मोहनीं' क. पाठः। ७ 'आश्रिताः' क.। ८ 'मोघा' क.।

कर्म आरभन्ते, ततो मोघाशा इति उक्तम् । तथा 'मोघकर्माणः' यदपि कर्म आरभन्ते, तत् शास्त्रीयोपायनियमाभावात् मोघं निष्फलं येषां, ते तथाविधाः । वक्ष्यति हि राजसतामसयोः कर्मणोर्लक्षणम् । तद्यथा

'यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते क्लेशबहुलं तद्राजसमिति स्मृतम् ॥
अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥' ( १८।२५ )

इति । तथा एवंविधकर्तृलक्षणमपि

'रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्त्यते ॥' ( १८।२७ )

तथा

'अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्रश्च कर्ता तामस उच्यते ॥' ( १८।२८ )

इति । तथा 'मोघज्ञानाः' चिकीर्षितकर्मनिष्पत्तिहेतुत्वात् कर्मारम्भपूर्वभाविज्ञानमपि मोघं निष्फलं येषां, ते तथोक्ताः । ज्ञानपूर्वकं हि कर्म, ज्ञानस्यैव च आसुरादिप्रकृत्याश्रितज्ञातृसंबन्धिनो विपर्ययप्रतिपत्तिदोषसंबन्धात् कर्मफलेन विसंवादात् निष्फलता स्थितैव । तथाच एवंविधज्ञानलक्षणमपि वक्ष्यति

'पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तद्राजसमिति स्मृतम् ॥' ( १८।२१ )

तथा

'यत्त्वकृत्स्नविदेकस्मिन् कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥' ( १८।२२ )

---

१ 'मुदाहृतम्' क. । २ 'आरभते' क. । ३ 'सूत्री च' क. । ४ 'पूर्वंताविं' क. । ५ 'मुदाहृतम्' क. । ६ 'वत्' क. ।

इति । मोघज्ञानत्वात् 'विचेतसः' तत्त्वार्थनिष्ठत्वाभावात् सदपि विगतं सम्यग्ज्ञानलक्षणस्वकार्याकरणादविद्यमानमिव चेतोऽन्तःकरणं येषां, ते तथाविधाः ॥ १३ ॥

एवमेकान्ततो मायाक्रोडीकृतानामासुरप्रकृत्याश्रितानां वृत्तिं प्रतिपाद्य, विद्यानुगृहीतानां प्रवृत्तिनिवृत्तिविषयशास्त्रोपदेशपात्रभूतानां दैवप्रकृत्याश्रितानां प्रतिपिपादयिषुः परदैवप्रकृत्याश्रितानां तावत्तां प्रतिपादयितुमाह—

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १४ ॥**

प्रस्तावनाप्रतिपादितपरापरस्वरूपमय्याः परस्या देव्याः 'प्रकृतिं दैवीं' सम्यक् ज्ञानविवेकद्योतनशीलत्वात् देवशब्दवाच्यानां संबन्धिनीं 'प्रकृतिं' स्वभावम् 'आश्रितास्तु' अत एव 'महात्मानः' उत्कृष्टस्वभावाः 'मां' परमात्मानं 'भजन्ते' चतुर्विधया सेवया 'अनन्यमनसः' मद्व्यतिरिक्तवस्त्वन्तराभावप्ररूढप्रतिपत्तित्वात् मयि एवैकस्मिन् तत्त्वे मनो येषां, ते तथाविधाः "ज्ञात्वा च अनुष्ठानम्" इति स्थितेः । कीदृशं मां विदित्वा भजन्ते । 'भूतादिं' भूतानां चेतनाचेतनानां मध्ये आदिं प्रथमं, तथा 'अव्ययं' नित्यत्वात् न मम क्षयो विद्यते इत्यर्थः । सर्वभूतानि आद्यन्तवन्ति, अहमादिरेव, न अन्तवानिति अत्र तात्पर्यम् १४

किंच—

**सततं कीर्तयन्तश्च[१] यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १५ ॥**

ते एवं दैवप्रकृत्याश्रिताः प्रबुद्धाः 'सततम्' अव्यवधानेन 'कीर्तयन्तः' मन्त्रजपस्तुत्यादिना उद्घोषयन्तः, तथा ध्यानादिना

१ 'न्तो मां' क. ।

यतमानाः, तथा 'नमस्यन्तः' प्रह्वीभवन्तो 'मां भक्त्या' हेतुभूतया 'नित्ययुक्ताः' सन्तः 'उपासते' वाङ्मनःकायव्यापारान् मदेकविषयान् कुर्वाणाः परिचरन्तीत्यर्थः ॥ १५ ॥

किंच—

ज्ञानयज्ञेन चाप्यन्ये यजन्तो[1] मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १६ ॥

पूर्वेभ्यः प्रसिद्धभक्तिप्रकाराश्रयणेन मद्यजनपरेभ्यः 'अन्ये' विलक्षणा ज्ञानेन विशुद्धसंविन्मात्रमत्स्वरूपचिन्तनैकलक्षणेन यज्ञेन यागविधिना 'यजन्तः' पूजयन्तश्च 'मामुपासते' सेवन्ते । कथं मां ज्ञानयज्ञेन[2] उपासते । 'एकत्वेन' सकलप्रपञ्चपरिहारादभिन्नैकसंविन्मात्रमत्स्वरूपतया, तथा 'पृथक्त्वेन' नानात्वेन, अत एव 'बहुधा' अनेकेन[3] ज्ञानेन क्रियाद्युपचरणीयविचित्राकृत्यादिभिन्नरूपतया । वस्तुतः कीदृशम् । 'विश्वतोमुखं' सर्वतः सर्व एव उपासनीयाभेदात् मुखं प्रत्यभिज्ञाकारणं यस्य, तं तादृशम् । इदमत्र तात्पर्यम्—द्विविधः पारमार्थिको मत्स्वरूपोपासाक्रमः । एकः संविन्मात्रैकतत्त्वविषयज्ञान[4]मात्रसाधनः, अपर एकस्यैव तत्त्वस्य नानाजगद्भावनानाशक्तिसमूहत्वात् तद्द्वारेण तस्य तस्य उपासनमिति ॥ १६ ॥

तदेव एकस्य तत्त्वस्य सर्वशक्तित्वं प्रतिपादयितुमाह—

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १७ ॥

क्रतुयज्ञयोर्यद्यपि पर्यायत्वेन व्यवहारः, तथापि यज्ञशब्दसन्निधाने पशुसोमादिसाधनविशिष्ट एव यज्ञः क्रतुशब्देन अत्र

१ 'भजन्तः' क. । २ 'मां यज्ञेन' क. । ३ 'अनेकधा' ख. । ४ 'ज्ञानसाधनः' क. ।

उक्तः । यज्ञशब्देन पाकयज्ञानां ग्रहणं, ततो यथाप्रतिपादितब्रह्माद्वैतस्थित्या सर्वो यागविधिर्नानादेवतासंप्रदानः 'अहम्' एव । तथा 'स्वधा' पितृतर्पणमन्त्रोऽपि 'अहम्' एव । तथा नानौषधिविकारात्मकम् 'औषधं' यागोपकरणद्रव्यम् 'अहम्' एव । तथा संप्रदानभूतदेवतासंमुखीकारादिविविधार्थवाचकशब्दविशेषरूपः 'मन्त्रः' यज्ञोपकरणविशेषोऽपि 'अहम्' । तथा 'आज्यं' घृतं तर्पणद्रव्यम् । तथा 'अग्निः' आहवनीयादिर्यागविध्यधिकरणम्[1] । तथा 'हुतं' हवनं होमकर्म,—इति यज्ञादिरूपतया ब्रह्मार्पणविधिन्यायेन 'अहम्' एव स्थितः,—इति अत्र तात्पर्यम् ॥१७॥

किंच—

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव[2] च ॥ १८ ॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १९ ॥

'अस्य जगतः' समस्तस्य चराचरस्य विश्वस्य उत्पत्तिमूलकारणत्वात् 'पिता माता चाहम्' । यदिवा पितरौ यथा अपत्यस्य समस्तयोगक्षेमोद्वहने नित्यावहितौ, तथा अहमस्य जगतः । तथा 'धाता' धर्ता स्थितिहेतुः । तथा 'पितामहः' ब्रह्मादीनां जगतः स्रष्टृत्वेन स्थितानां जनकत्वात् पितामहः । 'पवित्रं' परमं पावनं यत् 'वेद्यं' ज्ञेयं वस्तु । तथा 'ओंकारः' परब्रह्मवाचकः प्रणवाख्यो वेदादिः शब्दविशेषः, तत्प्रभवाणि च ऋक्सामयजूंषि । तथा गम्यते ज्ञायते वा परं तत्त्वमनयेति 'गतिः' उपायः । तथा 'भर्ता' पोष्टा । तथा 'प्रभुः' यथेष्टविनियोगैकस्वामी । तथा 'साक्षी' शुभाशुभकर्माध्यक्षः । तथा 'निवासः' सर्वभूतानामेक-

१ 'यागक्रियाधिकरणम्' ख. । २ 'ऋग्यजुः साम एव च' ख. ।

मावसथम्। तथा 'शरणं' सर्वोपद्रवप्रशमाय आश्रयः। तथा 'सुहृत्' सर्वभावेन उपकारी। तथा जन्मविनाशस्थितिहेतुत्वात् 'प्रभवः प्रलयः स्थानं' च। तथा प्रलीनं सत् यत्र अवतिष्ठते, तत् प्रधानात्मकं 'निधानम्'। तथा यतः प्रभवति, तत् प्रधानस्यापि 'अव्ययम्' अक्षयं 'बीजं' कारणमिति। न तत् किञ्चिदस्ति, यदहमस्य जगतो न भवामीत्यर्थः ॥ १९ ॥

तथाच—

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ २० ॥

सूर्यो भूत्वा ग्रीष्मादौ रसमाददानः 'अहं तपामि' यतः, तदा हि अहमेव 'वर्षं[1] निगृह्णामि' निरुणध्मि, वर्षाकाले च अहमेव पर्जन्यो भूत्वा 'उत्सृजामि' तपनवर्षणक्रियया अन्नाद्युत्पादनेन अहमेव जगत् प्रवर्तयामीत्यर्थः। तथा 'अमृतम्' अविनाशि यत् वस्तु 'मृत्युश्च' विनाशहेतुरहमेव। किं बहुना उक्तेन यत् किञ्चित् 'सत्' विद्यमानं शोभनं वा, यत् 'असत्' तद्विपरीतं किञ्चित् जगति संभवति; तत् सर्वम् 'अहं' मच्छक्तिरेव एका[2] सदसद्भावेन अवभासते इति ॥ २० ॥

एवं परदैवप्रकृत्याश्रितसर्गभेदप्रतिपादन[3]प्रसङ्गेन ब्रह्मस्वरूपं संग्रहेण उक्त्वा, इदानीमपरदैवप्रकृत्याश्रितानां पुरुषाणां प्रवृत्तिं प्रतिपादयितुमाह—

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान् दिवि देवभोगान् ॥ २१ ॥

---

१ 'वर्षं वृष्टिं' ख.। २ 'रेका' क.। ३ 'पादनेन' क.।

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २२ ॥

ज्ञानरहितक्रियामात्रोपदेशपर्यवसितार्था ऋग्यजुःसामलक्षणास्तिस्रो विद्या अधीयते विदन्ति वा 'त्रैविद्याः' मुख्यतया ब्राह्मणादयस्त्रैवर्णिकाः 'पूतपापाः' आनिषेकात् शास्त्रविहितसंस्कारसंपन्नत्वात् हतकल्मषाः, तथा निर्वृत्तयथोक्तब्रह्मचर्याद्याश्रमनियमाः सन्तः 'सोमपाः' नित्यनैमित्तिकस्वकर्मानुष्ठाननिष्ठा इत्यर्थः, तथाविधाः सन्तो देवतान्तरयजनविधिरूपैः 'यज्ञैः' तैस्तैः शास्त्रचोदितैर्यागविशेषैः सम्यग्ज्ञानाभावादविदन्तोऽपि मामेव 'इष्ट्वा' पूजयित्वा 'स्वर्गतिं' देवलोकप्राप्तिं कामात्मानः सन्तः 'प्रार्थयन्ते' उपयाचन्ते, यतस्तैस्तैर्यज्ञविधिभिस्तांस्तान् देवविशेषान् यजन्ते,–इति विश्वतोमुखमेकं तत्त्वं मामेव यजन्ते । केवलं संप्रति विद्याशक्त्याननुगृहीताः परं मदीयं भावमविदन्तो भोगमात्रं यज्ञादिक्रियाफलं मन्यमानाः स्वर्गमभिकाङ्क्षन्ति । 'ते' तथाविधास्त्रैविद्या देहान्ते स्वकर्मोपनतं 'स्वर्गलोकं विशालं' विपुलं देवलोकं गत्वा तद्गतान् भोगान् 'भुक्त्वा' उपसेव्य स्वकर्मोपार्जिते 'पुण्ये' तदनुरूपकालातिवाहनात् 'क्षीणे' अन्तं गते 'मर्त्यलोकं' कर्मभूमिमिमां स्वकर्मानुरूपजातिविशेषाश्रयणेन 'विशन्ति' प्रतिपद्यन्ते । 'एवम्' अनेन क्रमेण 'त्रयीधर्मं' वेदोक्तं स्वं स्वमाचारम् 'अनुप्रपन्नाः' समाश्रिताः सन्तः 'कामकामाः' स्वर्गादिभोगाभिकाङ्क्षिणश्चातुर्वर्णिका अपि 'गतागतं' गतं स्वर्गादिभूमौ गमनं, आगतं ततो भूयः कर्मभूमावागमनं 'लभन्ते' प्राप्नुवन्ति संसारबन्धभागिनः पुनः पुनर्भवन्तीत्यर्थः ॥२१॥२२॥

---

१ 'ककर्मा' क. । २ 'विधिभेदैस्तान्' क. ।

एतदन्तेन ग्रन्थेन ज्ञानमुक्त्वा[1] विज्ञानमाह—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २३ ॥

'ये जनाः' परां दैवीं प्रकृतिमाश्रिता दृष्टानुश्रविकगुणात्मकेभ्यो भोगेभ्योऽशुद्ध्यतिशयक्षयादिदोषवद्भ्यो विरक्ताः सन्तो नित्यनिर्मलनिरतिशयानन्तानन्दसुधासागरं 'मां' परमकारणं ब्रह्मतत्त्वं 'पर्युपासते' यथाप्रतिपादितज्ञाननिष्ठतया स्वकर्माणि अर्जहतः[2] समन्तात् सेवन्ते । कीदृशाः सन्तः । 'अनन्याः' अविद्यमानमन्यत् मद्व्यतिरिक्तं वस्तु येषां ते, तथाविधा मन्मयमेव सर्वमिदमनुभवन्त इत्यर्थः । 'तेषां' तादृशानां 'नित्याभियुक्तानां' यथोक्तज्ञानैकतानतया सततोद्युक्तानां सर्वास्ववस्थासु यथोक्तमत्स्वरूपस्मरणैकपरायणानामित्यर्थः 'अहं' परमेश्वरः 'योगक्षेमं वहामि' योगं प्रागनासादितेन मत्स्वरूपसंवेदनात्मकेन फलेन संबन्धं, क्षेममासादितस्य पुनरपरिलोपलक्षणं धारयामि । ये नित्यं मन्मयास्तेषां कुतो योगक्षेमक्षतिरित्यर्थः । एवं यथोक्तोपायनिरपायनिवेशितान्तःकरणतया मत्स्वरूपानुभवरूपां परां काष्ठामधिरूढा भक्तिरेव विज्ञानमिति तात्पर्यम् ॥ २३ ॥

ननु विश्वतोमुखस्त्वमेवैकं तत्त्वमिति देवतान्तरयाजिनोऽपि अनन्या एव, तत् कथमुक्तम्—अनन्या ये मामुपासते, तेषां योगक्षेमं वहामीति । अत्र आह—

येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २४ ॥

सत्यम् 'येऽपि' जनाः 'अन्यदेवता भक्ताः' परस्परभिन्न-

---

१ 'कथयित्वा विज्ञानकथनमाह' ख. । २ 'अजानन्तः' क. ।

स्वरूपान् तांस्तान्[1] सूर्येन्द्रादिप्रमुखान् देवविशेषान् 'यजन्ते, तेऽपि' परमार्थतो मद्व्यतिरिक्तद्वितीयवस्त्वभावात् 'मामेव[2] श्रद्धया' तत्तद्भिन्नफलसंभावनया 'यजन्ति' पूजयन्ति, किन्तु 'अविधिपूर्वकम्'। मद्यजने एवंविधो विधिरुक्तो वक्ष्यते च। यथोक्तज्ञाननिष्ठतया सर्वेषु यष्टव्येषु देवताविशेषेषु तासु तासु यागक्रियासु यष्टरि च स्वात्मनि[3] अद्वयचिन्मात्रलक्षणमत्स्वरूपानुभवः, स च तेषां ज्ञानशून्यकेवलक्रियामात्रशरणानां विधिर्न संभवति, तस्मादविधिपूर्वकं यजन्ति,–इत्युक्तम् ॥ २४ ॥

एतदेव प्रकटयितुमाह—

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।**
**नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २५ ॥**

'सर्वयज्ञानां' नानाभेदानां यागानाम् 'अहमेव भोक्ता' एक एव परमेश्वरः फलस्य स्वीकर्ता। तथा 'प्रभुः' अधिष्ठानक्रियाधिष्ठितः। सर्वे यज्ञा अहमेवेति न पुनस्तथाविधं 'मां तत्त्वेन' परमार्थेन यथोक्तेन 'अभिजानन्ति' एकत्वेन न प्रतिपद्यन्ते। 'अतो' हेतोः 'ते' तादृशा अनुष्ठातारः 'च्यवन्ति' मत्तो वियुज्यन्ते नानात्वेन सर्वं पश्यन्तीत्यर्थः ॥ २५ ॥

ततश्च

**यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् २६**

देवेभ्यो देवार्थं व्रतं नियमो येषां, ते शक्रादिदेवाराधकाः 'देवव्रताः' तत्सपर्यासिद्धौ 'देवान्' एव 'यान्ति' तल्लोकभाजो भवन्तीत्यर्थः। एवं 'पितृव्रताः पितॄन् यान्ति'। तथा भूतेभ्यो

---

१ 'तत्तत्सूर्येन्द्रादिप्रमुखदेवविशेषभक्ताः' क.। २ 'मामेव' क.। ३ 'स्वामिनि' ख.।

यक्षरक्षःपिशाचादिभ्यस्तदर्थमिज्या यागो येषां, ते तादृशास्तानि एव पूर्ववत् 'यान्ति'। देवपितृयाजिनः सात्त्विकाः, भूतयाजिनस्तु राजसास्तामसाश्च[1]। यदुक्तं

'यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
प्रेतान् भूतपिशाचांश्च यजन्ते तामसा जनाः॥' (१७।४)

इति। ये तु निस्त्रैगुण्यास्ते 'मद्याजिनः' मामेव त्रैगुण्यातीतस्वरूपं यष्टुं शीलं येषां ते तथाविधमेव मत्स्वरूपं परब्रह्म 'यान्ति' समापद्यन्ते॥ २६॥

स च मद्यागो देवव्रतादियागवत् तत्तन्नानाद्रव्यसंभारसाधनो नैवेत्याह—

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥ २७॥**

भक्तिरद्वयचिन्मात्रस्वरूपब्रह्मतत्त्वभावनया आत्मन एव, तस्य तस्य वा नानादेवताविशेषस्य उपासनम्। तया साधनभूतया यस्तत्त्ववित् पत्राद्यपि यत्किञ्चित् मह्यं 'प्रयच्छति, तत्' तस्य 'प्रयतात्मनः' तथाविधाद्वयविज्ञानसमाहितान्तःकरणस्य तादृशभक्त्युपहृतम् 'अश्नामि' उपभुञ्जे यादृशभावनाविशेषेण उपहृतं, तथैव तत् स्वीकरोमीत्यर्थः॥ २७॥

यत एवं, ततः

**यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।**
**यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥ २८॥**

'यत् करोषि' तत्तत्फलार्थितया यत् कर्म अनुतिष्ठसि, यच्च 'अश्नासि' तत्तत्कर्मफलभूतमुपभुङ्क्षे[2], 'तत्' सर्वं 'मदर्पणं' कुरु मयि ब्रह्मस्वरूपेऽर्पणं मदात्मकप्रतिपत्त्या निवेदनं यस्य, तत्

१ 'साश्च' ख.। २ 'कर्मभूतं' क.।

तादृशं कुरु संपादय। तच्च कार्यं ज्ञानरहितानां नानाफलहेतुत्वेन व्यवस्थितं विवृणोति—'यत् जुहोषि' तेषु तेषु यज्ञेषु तत्तद्देवता-तर्पणार्थं यदग्नौ हवनक्रियया क्षिपसि, यच्च अन्तर्वेद्यादौ 'ददासि' पात्रेभ्यः प्रयच्छसि, 'यत्' तपोनियमविशेषं चरसि; 'तत्' सर्वं 'मदर्पणं' कुरु। यज्ञदानतपोलक्षणासु क्रियासु अवश्यकर्तव्यासु तत्तत्फलाभिकाङ्क्षाकार्पण्यपरिहारेण मत्स्वरूपानुभवमेव एकं फलमवलम्बस्वेत्यर्थः ॥ २८ ॥

अस्या भावनायाः फलमाह—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २९ ॥

'एवम्' अनेन प्रकारेण यज्ञादिकाः स्वाः क्रिया अनुतिष्ठन्नपि 'शुभाशुभफलैः' शुभैः सुखात्मकैरशुभैर्दुःखात्मकैः क्रियाणां फलैः 'मोक्ष्यसे' त्यक्ष्यसे तानि ते बन्धनाय न कल्पयिष्यन्ते इत्यर्थः। कीदृशैः। 'कर्मबन्धनैः' कर्माणि ज्ञानशून्यानि बन्धनं नियमहेतुर्येषां, तथाविधैः। कर्मनिबन्धनानि हि फलानि ज्ञानशून्यं बध्नन्ति, न यथोक्तज्ञानसंपन्नम्। अतस्त्वं 'संन्यासयोगेन' फलासंकल्पसमाधिना 'युक्तात्मा' संबद्धस्वभावः, अत एव 'विमुक्तः' सर्वबन्धनेभ्यो विनिष्क्रान्तो 'माम्' एकं परमकारणम् 'उपैष्यसि' अहमेव संपत्स्यसे इत्यर्थः ॥ २९ ॥

ननु केषांचित् यज्ञादिक्रियाभिरपि उपसेवमानानां बन्धनहेतुर्भवान्, अन्येषां तु पत्रादि उपहरतां मोक्षहेतुरिति किं तवापि रागद्वेषानुषङ्ग इति। अत्र आह—

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥३०॥

'सर्वभूतेषु' चतुर्दशविधेन प्रपञ्चेन प्रसृतेषु परमार्थतस्तत्त्वस्य[1] एकत्वात् परतत्त्वात्मकः 'अहं समः' निर्विशेषवृत्तिः; अतो व्यतिरिक्तत्वाभावात् 'न मे' कश्चित् 'द्वेष्यो' द्वेषदोष[2]हेतुः, नापि 'प्रियः' रागदोषहेतुः संभवति। एतौ भेददर्शिनामेव अनुषक्तौ। ततश्च 'ये' पुनर्महात्मानो मदिच्छयैव विद्याशक्त्यनुग्रहादेकतत्त्वदर्शिनः सन्तो 'मां' यथोक्तस्वरूपं यथोक्तया 'भक्त्या भजन्ति' सेवन्ते यथोक्तया भावनया उपासते 'ते मयि' तिष्ठन्ति 'तेषु चाहम्' अभेद एव तिष्ठामि मत्तस्तेषां दुर्भेदभेदप्रत्ययसेतुविदलनात् ब्रह्मामृतसागरसमरसीभूतत्वात् तत्तद्भेदस्य[3] ॥ ३० ॥

एवं यथोक्तया भावनया भगवद्भक्तेः स्तुतिमाह—

अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३१ ॥

यद्यपि युष्मत्प्रतिपादितदृष्ट्या युद्धादिघोरकर्मानुष्ठानात् सुतरां दुष्टचेष्टितः सन् 'अनन्यभाक्' मदेकालम्बनः 'मां भजते' उपास्ते 'स' तादृशः 'साधुः' सदाचार 'एव मन्तव्यः' बोद्धव्यः, यतः 'सम्यक्' अविपर्यस्तज्ञानत्वात्[4] यथावत् 'स' तादृक् भक्तो 'व्यवसितः' गृहीतव्यवसायः। एतावदेव सदाचारदुराचारयोर्लक्षणम्—योऽनन्यतया मद्भक्तः, स सदाचारः; तद्व्यतिरिक्तस्तु दुराचार इति। एतावदत्र तात्पर्यम्—अपर्यनुयोज्येच्छस्य हि भगवतः शक्तिरवतीर्णा क्वचिदपि अनुग्राह्ये विनष्टं च निर्मूलमखिलं दुराचारत्वम् ॥ ३१ ॥

---

१ 'तत्त्वैकत्वात्' ख.। २ 'द्वेष्यदोष' क.। ३ 'भूतत्वात् बोधस्य' क.। ४ 'ज्ञानित्वात्' ख.।

एतदेव प्रकटयितुमाह—

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति[1] ।
कौन्तेय प्रतिजानेऽहं न मद्भक्तः प्रणश्यति ॥ ३२ ॥

'क्षिप्रम्' अनुग्रहलक्षणसमकालमेव 'धर्मात्मा भवति' प्रतिपादितज्ञानयोगलक्षणः परमो धर्म आत्मा स्वभावो[2] यस्य, स तादृशः संपद्यते । तथासंपन्नमात्रः 'शश्वत्' नित्यकालं 'शान्तिं' यथाप्रतिपादितात्मानात्मादिज्ञेयवस्तुज्ञानभावलक्षणक्षोभक्षयरूपं प्रशमं यथोक्ततत्त्वसमापत्तिरूपं नितरां गच्छति प्राप्नोति । नियच्छतीति पाठे आत्मनि तां[3] नियच्छति नियतामव्यभिचारिणीं करोति । ततश्च हेतोस्ते तुभ्यं प्रतिज्ञां करोमि यथा 'मद्भक्तः' यथोक्तेन रूपेण मदुपासको 'न प्रणश्यति' मत्स्वरूपव्यतिरेकप्रतिपत्तिलक्षणं नाशं न प्राप्नोति ॥ ३२ ॥

अत एव आह—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३३ ॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३४ ॥

पापा पापकर्मविपाकजा योनिरुत्पत्तिकारणं येषां ते स्त्रीशूद्रवैश्यादयः 'येऽपि' केचन भवेयुः 'ते मां व्यपाश्रित्य' यथोक्तमदेकशरणा भूत्वा 'पराम्' अनुत्तरां 'गतिम्' अपुनरावृत्तिपदवीमाप्नुवन्ति । नच एतदतिशयोक्तिमात्रमेवेति व्याख्यातमेव प्राक् । 'पुनः[4] किं' अत्र वाच्यं, ये 'पुण्याः' पुण्यकर्माणः पुण्यकर्मविपाकात् लब्धोत्कृष्टयोनयः 'ब्राह्मणा राजर्षयश्च' राजत्वे

---

१ 'नियच्छति' ख. पाठान्तरम् । २ 'स्वरूपं' क. पाठः । ३ 'मां' क. । ४ 'किं पुनर्ये' क. ।

सति अपवर्गभागित्वात् मुख्या ऋषयो द्रष्टारो 'भक्ताः' सन्तस्ते परां गतिं[1] यास्यन्ति। तदेतेन सर्वलोकसाधारणत्वमात्मज्ञानस्य भगवता प्रतिपादितम्। यत एवमुत्कृष्टफला मद्भक्तिस्ततः 'इमं लोकं' कर्मभूमिलक्षणं भुवनं 'प्राप्य' अत्र जन्म लब्ध्वेत्यर्थः 'मां भजस्व'। कीदृशं लोकम्। 'अनित्यं' शरीरस्य भोगसाधनस्य भोगानां च अन्तवत्त्वादस्थिरम् 'असुखं' च। यदपि अत्र किञ्चित् सुखभ्रान्त्या गृह्यते, तदपि विवेकबुद्ध्या विचार्यमाणं दुःखमेव। यदुक्तं

'परिणामतापसंस्कारदुःखैर्गुणवृत्ति-
विरोधाच्च सर्वमेव दुःखं विवेकिनः।'
( यो० सू० २।१५ )

'गुणवृत्तिविरोधाच्च सर्वं दुःखं विवेकिनः।'

इति। यथा जलधिमध्यपतितस्य रत्नातिशयलाभः कथञ्चित् संभाव्यते, तथा दुःखैकहेतुकर्मभूमिपतितस्य मद्भक्तिलाभः संभाव्यते एव अस्मिन् लोके इत्यर्थः ॥ ३४ ॥

एवंरूपमपि इमं लोकं लब्ध्वा मामनुत्तरसुखहेतुं भजस्वेत्याह–

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३५ ॥**

एवंविधः सन् 'मद्भक्तो भव'। कीदृशः। 'मन्मनाः' 'मद्याजी' तथा मन्नमस्कारपरः। एतेन विशेषणत्रयेण चित्तकायवचनक्रियाणां भगवत्स्वरूपलक्षणैकतत्त्वविशेषणात्मको मुख्यो भक्तिप्रकारः प्रतिपादितः। 'मां नमस्कुरु' इत्यनेन हि मन्त्रजपनमस्कारैस्तुत्या[2]दिरूपा भगवत्प्रणतिरुक्ता। 'एवम्' अनेन प्रकारेण

१ 'गतिं न यास्यन्ति' क.। २ 'नमस्कारः प्रतिपादितस्तुत्या' क. पाठः।

'आत्मानम्' अन्तःकरणं 'युक्त्वा' समाधाय 'मत्परायणः' मदेकालम्बनः संवृत्तः सन् 'मामेवैष्यसि' मदभेदसमापन्नो भविष्यसीत्योम् ॥ ३५ ॥

व्योम्नि ज्योतिर्गण इव घनध्वान्तशान्तिप्रसन्ने
सूर्येन्द्वादिद्विगुणविकसन्निर्मलस्वप्रसादः ।
यत्रार्थौघः स्फुरति सुतरां ज्ञानविज्ञानपूर्व-
स्तत्राध्याये तरतु नवमे राजहंसीव गीर्वः ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे नवमोऽध्यायः ॥ ९ ॥

---

## अथ दशमोऽध्यायः।

एवं नवमाध्यायपर्यन्तग्रन्थग्रथितप्रसन्नगम्भीरभणितिभेदाभिहितज्ञानविज्ञानादिपरमरहस्यरूपार्थश्रवणादुपजातपरितोषविशेषतामत्यन्तदुरवधारपरमार्थत्वादस्य अर्थस्य असंतुष्टहृदयतां च अर्जुनस्य उपलक्ष्य, प्रसादातिशयमनुकम्पां च उपगच्छन्ननेकदेशयथोक्तपरतत्त्वसाक्षात्कारकारणभूतनिरतिशयानुग्रहचिकीर्षाविष्कारि वाक्यं भगवानुवाच—

भूय एव महाबाहो शृणु मे परमं वचः।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया॥ १॥

यद्यपि प्रायेण निरवशेषमुपदेश्यं वस्तु वितत्य प्रतिपादितं, तथापि तदतिसूक्ष्मत्वात् परमप्रकृष्टप्रज्ञानामपि हृदये झगिति प्रतिष्ठां न लभते,–इति 'भूयः' बहुतरमेव पूर्वोक्तं तत् मदीयं 'परमम्' उत्तमार्थप्रतिपादकत्वात् प्रकृष्टमिदं वचनमाकर्णय। बहुतरवचनकथने कारणमाह–'यत्' वचनं 'प्रीयमाणाय' परितोषं भजते 'हितकाम्यया' आत्यन्तिकानुकूल्यकरणेच्छया तुभ्यं 'अहं' इदानीं कथयिष्यामि। किमनेन उक्तं भवति। यावत् प्रकारान्तरदुर्हरमोहविषविषादहारिणा प्रतिपादितार्थपरमार्थापूर्वपीयूषपरमलेशस्पर्शेन अनाह्लादितं हृदयम्, तावत् कुतः प्रीयमाणत्वम्। अतस्तथाविधस्य हि पुनरुक्तकथनादुद्वेग एव स्यात्। अतः प्रीयमाणत्वेन आविष्कृतशिष्यगुणविशेषाय तद्धितचिकीर्षुणा दयाविष्टहृदयेन देशिकोत्तमेन विचित्रोक्तिप्रकारैस्तावदुपदेष्टव्यम्, यावदसौ सुगृहीतार्थतया निराकाङ्क्षतामापद्यते,–इति भूयोवचनकथनेन भवता न उद्वेजनीयमिति भगवतोऽभिप्रेतम्। अथवा

१ 'प्रथित' क. पाठः। २ 'एकादशे' क. पाठः।

निद्रां मोहमयीं हरत्सु सहसैवान्तः प्रबोधश्रियं
तन्वत्स्वर्थिषु वाञ्छितार्थविषयावन्ध्योद्यमाधायिषु ।
तेष्वेकाभिनवीभवत्सु भगवद्वाक्येषु कश्चेतनः
सूर्यांशुष्विव पौनरुक्त्यजनितोद्वेगत्वमापत्स्यते ॥

इह मत्स्वरूपविज्ञानलक्षण एव अर्थ उक्तो वक्ष्यते च । तच्च मत्स्वरूपं गुह्यतमत्वात् न अल्पेन प्रयत्नेन प्रतिपत्तव्यं, प्रतिपाद्यं च, अतो बहुतरवचनाकर्णनेऽवहितो भव ॥ १ ॥

यतः—

न मे विदुः सुरगणाः प्रभवं[1] न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

मम परमार्थत एकस्यैव सनातनस्य तत्त्वस्य 'प्रभवम्' उत्पादम्, प्रभावमिति वा पाठे माहात्म्यम्, 'सुरगणाः' ब्रह्मेन्द्रसूर्यादयो देवसमूहाः 'न विदुः' न जानते । 'महर्षयः' भृग्वादयोऽपि तथैव । ते हि मन्मायाशक्त्युद्भाविततत्तत्स्वरूपशक्त्यादिभेदास्तं तं स्वाधिकारमनुतिष्ठन्तः प्रतिकल्पं सर्गप्रलयाद्यनित्यभावसंबन्धावस्थाजुषः । अहं तु नित्यत्वात् तेषाम् 'आदिः' प्रथमः । एवं प्रकर्षगत्या कल्पादिदीर्घकालस्थायिनो[2]ऽपि देवादयो मदीयपरमसत्तापेक्षया अन्तवन्तः । ते च मदीयमायामोहिताः सन्तः स्वाधिकारनिर्वर्तनमात्रपर्याप्तसामर्थ्यास्तत्त्वतो मां संप्रति न विदन्ति ॥ २ ॥

ततः—

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

१ 'प्रभावं' ख. पाठान्तरम् । २ 'नो दे' क. ।

'यः' कश्चित् विरलो महात्मा मदनुग्रहादेव प्रत्युदितसम्यग्ज्ञानशक्तिः 'अजं' नित्यत्वात् जन्मरहितमत एव 'अनादिम्' अविद्यमानपूर्वपुरुषान्तरम्, तथा 'लोकमहेश्वरं' लोकानां ब्रह्मादीनां लोक्यन्ते दृश्यन्ते वेद्यन्ते इति लोकशब्दवाच्यानां जनानां महान्तं सर्गस्थितिप्रलयाद्यवस्थाविधानस्वतन्त्रशक्तित्वादुत्तमं स्वामिनम्; तेषामपि हि ब्रह्मादीनां स्वविषयं यावन्मात्रमैश्वर्यं, तत्र कारणमित्यर्थः। एवंविधं 'मां यो वेत्ति' आत्मत्वेन प्रतिजानीते 'स मर्त्येषु' मायाक्रोडीकृतत्वात् मरणधर्मसंबद्धेषु देवादिषु सर्वजन्तुषु मध्ये 'असंमूढः' सत्यात्मनि मयि एव प्ररूढात्मप्रत्ययत्वात् विपर्ययलक्षणः संमोहोऽज्ञानं तस्य न विद्यते इत्यर्थः। अत एव सर्वैर्निरवशेषैर्मनोवाक्कायनिर्वर्त्यैः पापैर्नानायोन्यन्तरविशेषहेतुभिः किल्बिषैः 'प्रमुच्यते' परिवर्ज्यते। देहाद्यनित्यवस्तुव्यवस्थिताहङ्कारमात्रं हि सर्वपापानामुत्पत्तिकारणं, सम्यग्ज्ञानवैतस्तु तत् नास्तीति स एव असंमूढः इति उक्तः॥ ३॥

सर्वभूतानां सर्वावस्थाहेतुत्वे लोकमहेश्वरत्वं यत् व्याख्यातं, तदेव विवृण्वन्नाह—

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च॥ ४॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः॥ ५॥

इह अहमेव एकं तत्त्वं परमार्थसदिति बहुशः प्रतिपादितमेव। अयं च देवासुरभेदेन द्विप्रकारः क्षेत्रज्ञवर्गो मन्माययैव इत्थमवभासितः। एवं तदस्य क्षेत्रज्ञवर्गस्यापि तदहङ्कारावलम्बनेन

१ 'मां वेत्ति' क.। २ 'परिवर्ज्यते' क.। ३ 'ज्ञनतः' ख.। ४ 'एवैकं' ख.। ५ 'स्यते इत्यपि' क.। ६ 'रालम्ब' क.।

प्रसरन्तो बुद्ध्यादयः 'पृथग्विधाः' नानारूपाः 'भावाः' 'मत्त एव' एकस्मात् कारणात् 'भवन्ति' उत्पद्यन्ते । एते हि विविधा भावभेदाः प्रबुद्धैस्तत्त्वज्ञानदृशा परामृष्यमाणाः परस्मात् मत्स्वरूपात् मनागपि न व्यतिरिच्यन्ते । ततो मायामात्रमेव एतत् यत् भेदेन अवभासमानता भावानाम् । सा च मच्छक्तिरेवेति मत्त एव ते[1] भावा भवन्तीत्युक्तम् । के ते भावाः । 'बुद्धिः' मुख्यमन्तःकरणं यया बुद्ध्यते निर्विकल्पतया निश्चीयते बोद्धव्यं वस्तु, 'ज्ञानं' तु मनःसंज्ञोऽन्तःकरणविशेषो येन बोद्धव्यं विकल्प्यते । एतौ सर्वप्रमातृसाधारणौ बुद्धिज्ञानसंज्ञौ भावौ । 'असंमोहः' परमार्थनिष्ठं ज्ञानम् । ततोऽन्यविषयं सर्वमेव ज्ञानं विपर्ययादिदोषसंबन्धात् संमोहात्मकम् । स च असंमोहलक्षणो भावो मुमुक्षूणामेव भवति[2] । 'क्षमा' वाचा मनसा कर्मणा वा निर्विकारत्वं—सर्वात्मना शक्तिमत्त्वेऽपि परापराधसहिष्णुत्वम् । एषोऽपि यत्याद्यवस्थायां मुमुक्षूणामपवर्गोपायभूतो धर्मः । अवस्थान्तरे हि ज्ञाननिष्ठतया स्वकर्मापरित्यागस्य मोक्षसाधनत्वादक्षमापि शास्त्रचोदिता सती मोक्षसाधनं भवत्येव । 'सत्यम्' आत्यन्तिकभूतहितपर्यवसायि यथादृष्टार्थकथनम् । एतत् स्वर्गापवर्गफलार्थिनां साधारणम् । 'दमः' उत्पथप्रवृत्तानां सर्वेन्द्रियाश्वानां वैराग्यभावनादिकषाभिघातात् ततः प्रतिषेधनम् 'शमः' सिद्ध्यसिद्ध्योर्निर्विकारान्तःकरणता । एतौ योगिविषयौ । 'सुखं' तत्तदिष्टवस्तुप्राप्तेरभिकाङ्क्षानिवृत्तौ संतुष्टचित्तता । 'दुःखं' तद्विपरीतता । भवाभावौ जन्ममरणे । 'भयं' दुःखहेतोर्दुष्करप्रतीकारात् त्रासः । 'अभयं' तदभावो विश्वस्तचित्तता । एते सुखादयः सर्वप्राणिसाधारणा भावाः । 'अहिंसा' सर्वभूताभि-

---

१ 'एवैते' क. । २ 'संभवति' ख. पाठः ।

द्रोहात् सर्वात्मना विरतिः। सा च यत्याद्यवस्थायामेव मोक्षसाधनं, हिंसाया अक्षमावदवस्थान्तरे मोक्षसाधनत्वात्। यतः शास्त्रचोदितं यज्ञे वधादि, संग्रामे रिपुव्यापादनं दुष्टनिग्रहश्च हिंसात्मत्वेऽपि तथाविधस्वकर्मनिष्ठानां सतां मोक्षसाधनम्। 'समता'

'सुहृन्मित्रार्युदासीन··············।' ( ६।९ )

इत्यादिना प्राक्प्रतिपादितस्वरूपैकतत्त्वदर्शिता मुमुक्षूणामेव धर्मः। 'तुष्टिः' सर्वभूतविषया प्रीतचित्तता मुमुक्षुविषयैव सुखस्यैव सर्वसाधारण्येन प्रतिपादितत्वात्। 'तपः' वाक्[1]चित्तकायनिर्वर्त्यो नियमविशेषः। 'दानम्' इष्टापूर्तविभागेन स्वद्रव्यस्य परद्रव्यत्वापादनम्, ज्ञाना[2]दीनां तु स्वत्वनि[3]वृत्तिं विना परत्र संक्रमणं दानम्। एतत् स्वर्गापवर्गफलार्थिनोः साधारणम्। 'यशः' शास्त्रचोदितानां शुभानां कर्मणां सात्त्विक्या बुद्ध्या समाचरणात् सर्वजनविषया प्रशंसा। 'अयशः' तद्विपरीताचरणादप्रशंसेति ॥ ४–५ ॥

एवंविधानां धर्माणामाश्रयभूता धर्मिण आ प्रजापतिभ्यो मत्त एव भवन्तीत्याह—

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**

'पूर्वे' कल्[4]पारम्भभाविस्वायम्भुवमन्वन्तररूपपूर्वकालभावित्वात् प्रथमे 'सप्त महर्षयः' मरीच्यादयो ये पुराणप्रजापतयः प्रोक्ताः। केचित् तु बुद्धिमनसी महाभूतपञ्चकं चेति सप्त महर्षीन् कथयन्ति, प्रजासर्गहेतुत्वात् तेऽपि प्रजापतय इति चाहुः।

---

१ 'वाक् काय' क.। २ 'दीनां' क.। ३ 'स्वत्वानिवृत्तिं' ख.। ४ 'कर्मारम्भ' क.।

'चत्वारो मनवः'[1] ब्रह्मसावर्णो रुद्रसावर्णो दक्षसावर्णो······ इति दक्षस्य दुहितुरुत्पन्नाः प्रजासर्गे प्रतिवर्णं चातुर्वर्ण्यस्य प्रथमे पुरुषा येषां ब्राह्मणादिवर्णसर्गहेतुत्वात् मनुत्वं प्रजापतित्वं च। एते 'मद्भावाः' मत्तः परमकारणादेव भाव उत्पत्तिर्येषां, ते तथाविधाः। कीदृशाः सन्तो मद्भावाः। 'मानसा जाताः' संकल्पजा इत्यर्थः। 'येषां' प्रजापतीनां सतां संबन्धिन्यः 'लोके' भुवनेषु 'इमाः प्रजाः' ये प्रजासर्गकर्तारः कल्पारम्भे प्रजापतयः श्रूयन्ते[2], ते मदिच्छामात्रोद्भावितस्रष्टृभावा इत्यर्थः ॥ ६ ॥

एवंविधस्वैश्वर्यज्ञानफलमाह—

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

'एतां' यथोक्तां 'विभूतिं' जगत्कर्तृत्वादिरूपमैश्वर्यं, तथा 'योगं' नानाभावप्रपञ्चावभासनरूपकर्तृत्वादिसंबन्धेऽपि अद्वयचिन्मात्रस्वभावाप्रच्युतिलक्षणमत्यद्भुतमनन्यसाधारणं समाधिं 'मम यः' 'तत्त्वतः' परमार्थतो 'वेत्ति' जानाति, 'सः' मदीयेनैव 'अविकम्पेन' सर्वदानिरुपप्लवेन 'योगेन' समाधिना 'युज्यते' संबध्यते। न अत्र अर्थे कश्चित् संदेहः संभवति यतो मदनुग्रहाविर्भूतसम्यग्ज्ञानतया ममैव एकस्य तत्त्वस्य जगल्लक्षणं विभवं सम्यग् यो विभावयति, स मत्स्वरूपसमाविष्टत्वात् मदीयेन समाधिना संबध्यते,—इति कोऽत्र संशयस्य अवकाशः ॥७॥

यत एवंविधः—

**अयं सर्वस्य प्रभव इतः सर्वं प्रवर्तते।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

'बुधा मां भजन्ते' मदिच्छयैव दैवप्रकृत्याश्रयसर्गभावत्वात्

१ 'मनवः' ख. पाठः। २ 'श्रूयन्ते म' क.।

मदनुग्रहपात्रभूततया समाविर्भूतबोधाः सन्तो मुख्यविपश्चितो मां यथोक्तरूपमुपासते, नतु अन्ये आसुरसर्गभावाः, ततो मत्समाधिना युज्यन्ते। ते च किं कृत्वा समुपासते[1]। 'इति मत्वा' एवं मत्स्वरूपं निश्चित्य। कथम्। 'अयं' परमेश्वरः परमात्मा 'सर्वस्य' भावजातस्य 'प्रभवः' उत्पत्तिकारणं यस्मात् बहुशः प्रतिपादितोपपत्तिवशादेतद्व्यतिरिक्तकारणान्तराभावात् 'इतः' एतस्मादेव हेतोः 'सर्वम्' इदं 'प्रवर्तते' प्रसरतीति[2]। इदमत्र तात्पर्यम्—द्विविधं ज्ञानं निर्विकल्पपरमार्थप्रतिपादकशास्त्रोपदेशदृढप्रतिपत्तिजनकमेकम्[3], तद्वशात् च क्रमेण तत्त्वसाक्षात्कारप्रभवमपरम्। तद्वन्तो बुधा अपि द्विविधाः। ततो यथोक्तमद्विभूतियोगज्ञा मत्समाधिना युज्यन्ते इति 'नात्र संशयः' इत्युक्तम् ॥ ८ ॥

ये तु मां भजन्ते, तेषामेवंविधं चेष्टितमित्याह—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥

'मच्चित्ताः' मयि चित्तमन्तःकरणं येषां, ते तथाविधा मदेकनिष्ठज्ञानक्रियाप्रसराः सन्तोऽन्योन्यं 'बोधयन्तः' स्वानुभवसंवादेन ज्ञापयन्तः, तथा 'कथयन्तः' यथाबोधमागमवचनैः कीर्तयन्तः 'तुष्यन्ति' संवादात् स्वयं प्रीयन्ते परस्परं 'रमन्ति' रतिमनुभवन्ति ॥ ९ ॥

एवंविधानां च—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

१ 'मां समुपासते' ख.। २ 'रति' क.। ३ 'एव' क.।

'तेषां' बुधानां बुधत्वादेव 'प्रीतिपूर्वकं' तत्त्वज्ञानजनितपरितोषपुरःसरं सेवमानानाम्, अत एव नित्योद्यतानां 'बुद्धियोगं' प्रज्ञासंबन्धं वितरामि 'येन' हेतुभूतेन बुधाः 'मामुपयान्ति' मदीयं योगं समापद्यन्ते इति भक्तानां स्वयोगप्राप्तावसंशयस्य कारणं प्रतिपादितम्। यतः 'तेषामेव' देवसर्गभाजाम् 'अनुकम्पार्थं' संसारक्लेशविश्लेषणेन[1] कृपां कर्तुम् 'अहम्' 'अज्ञानजं' मोहसमुद्भूतं 'तमः' तत्त्वाप्रतिपत्तिमयं तिमिरं 'नाशयामि' प्रध्वंसयामि। केन। 'भास्वता' परसंविदात्मकदीप्तियुक्तेन 'ज्ञानदीपेन' यथोक्तबोधप्रद्योतकेन। कीदृशः सन्। 'आत्मभावस्थः' आत्मनः संवेदितुर्भाव आत्मत्वं तेन स्थितो यद्यपि सर्वगत एक एव अहमात्मा, तथापि स्वेच्छया यानेवानुगृह्णामि तेषामेव अहमात्मत्वेन स्थितः। अन्येषां तु देहादावात्मप्रतिपत्तिरित्यर्थः। एवं परमेश्वरोऽहं यानेव अनुगृह्णामि, त एव यथोक्तेन प्रकारेण मां भजन्ते। मद्विभूतियोगयोस्तत्त्वविदः सन्तो मदीयमेव योगं समापद्यन्ते मदभेदलक्षणं मोक्षमासादयन्तीत्यर्थः। यदाहुर्ब्रह्मविदः

'नायमात्मा प्रवचनेन लभ्यो न मेधया नो बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष[2] आत्मा विवृणीते[3] तनुं स्वाम्॥'

(मु० उ० ३।२।३॥ क० उ० २।२३)

इति॥ १०–११॥

अथ भगवद्वचनात् विशेषितश्रद्धादिगुणतया भगवन्मुखादेव अधिगतं भगवत्स्वरूपमनुवदन् तद्विभूतिविशेषजिज्ञासार्थमर्जुन उवाच—

**परं ब्रह्म परं धाम पवित्रं परमं भवान्।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्॥ १२॥**

---

१ 'षेण' ख.। २ 'तस्यैवात्मा' क.। ३ 'णीत' क.।

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मा[1]म् ॥ १३ ॥

'परं' निरुत्तरं परमात्मलक्षणं निरतिशयबृहत्त्वादियोगि तत्त्वं 'भवान्' भगवानेव परमार्थतो ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्। मायावभासितस्य प्रकृत्यादेर्वेद्यस्यापि स्थूलस्य ब्रह्मशब्देन व्यवहारात् परत्वेन ब्रह्म विशेषितम्। तथा वक्ष्यति, उक्तं च

'तासां ब्रह्म महद्योनिः............।' (१४।४)

इति, अत्र प्रकृतेर्ब्रह्मशब्देन व्यवहारः; तथा

'............शब्दब्रह्मातिवर्तते।' (६।४६)

इति, अत्र शास्त्रादिशब्दरूपस्यापि सर्गस्य। तथा 'पे[2]रं' सामान्यसंविदात्मकं निरतिशयं 'धाम' ज्योतिर्भवान्। भेदविषयक्षेत्रसंबन्धिसंविदपेक्षया धाम्नोऽपि परत्वेन विशेषणम्। तथा 'परमम्' अनुत्तमं 'पवित्रं' पावनं भवान् मोहलक्षणमहापातकविनाशहेतुत्वात्। उक्तार्थावगमस्य आगमं भगवद्वचनं च कारणं प्रतिपादयितुमाह—यस्मात् 'सर्वे ऋषयः' परावरद्रष्टारो मुनयः 'शाश्वतं' नित्यं 'पुरुषं' परमात्मानं 'त्वामाहुः' कथयन्ति। कीदृशम्। 'दिव्यं' परमव्योमस्थम्। तथा 'आदिं' सर्वेषां पूर्वम्। 'देवं' परप्रकाशात्मतया द्योतनशीलम्, अत एव 'अजं' जन्मरहितम्। 'विभुं' व्यापकम्। न केवलं स[3]र्वर्षयो, यावत् नारदासितदेवलाभिधाना म[4]हर्षयस्त्वामेवं विधमाहुः। 'स्वयं च मां' साक्षात् 'ब्रवीषि' ॥ १२—१३ ॥

सर्वमेतदृतं मन्ये यन्मे वदसि केशव।
नहि ते भगवन् व्यक्तिं विदुर्देवा महर्षयः ॥ १४ ॥

---

१ 'मे' क. पाठः। २ 'परं सामान्य' क. पाठः। ३ 'महर्षयः' क.। ४ 'महामहर्षयः' क.।

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

'एतत्सर्वं' यथाप्रतिपादितस्वविभूतियोगादिरूपं वस्तु 'यत्' साक्षात् 'वदसि', तदहं 'ऋतं' सत्यं 'मन्ये'। यत् 'देवाः' अपि तव 'व्यक्तिं' पारमार्थिकीं मूर्तिं 'न विदुः' 'महर्षयोऽपि तथैव न विदुः। ततो महर्षिभ्यः श्रुते मम प्रत्ययो नासीत्, इदानीं तु भगवद्वचनादत्र[1] अर्थे निःसंशया प्रतीतिः। कुतस्त्वां देवा ऋषयश्च न विदुरित्यत्र हेतुमाह—स्वयमेवेत्यादि। 'जगत्पते' विश्वेश्वर तथा 'भूतभावन' भूतानां चराचराणां सत्त्वानां भावन वेद्यत्वापादनमात्रेण उत्पादक, तथा तेषामेव यथेष्टविनियोगैकस्वतन्त्रतया[2] 'ईश' स्वामिन् 'स्वयमेव आत्मना आत्मानं' स्वरूपं 'त्वं वेत्थ' वेदकैकस्वभावत्वात् कथं वेद्यपदवीमन्यस्य देवादेरवतरसि। सर्वं हि तव एकस्य सर्वज्ञस्य वेद्यं, नतु त्वं कस्यचित् वेद्यः ॥ १४—१५ ॥

ततो हेतोः—

वक्तुमर्हस्यशेषेण विभूतीरात्मनः[3] शुभाः।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥

'आत्मनो विभूतीः' स्वैश्वर्यविजृम्भाः 'अशेषेण' साकल्येन 'वक्तुमर्हसि' कथयितुं प्रसीदेत्यर्थः। कीदृशीर्विभूतीः। 'शुभाः' सर्वस्य सदसद्विभागेन व्यवस्थितस्य[4] मायावभासितस्य जगत्पदार्थजातस्य शुभाशुभत्वे सति यत्र यत्र सर्गे या या शुभरूपा विभूतिस्तां तामादिशेत्यर्थः[5]। कास्ता विभूतयः। 'याभिरिमान् लोकान्' सप्त भुवनानि 'त्वं व्याप्य' आक्रम्य वर्तसे। अत्र

---

१ 'वचनार्थे' क.। २ 'तन्त्रतथा' क.। ३ 'दिव्या आत्मविभूतयः' ख. पाठान्तरम्। ४ 'स्थितस्य' क.। ५ 'दिश' क. पाठः।

दिव्या आत्मविभूतय इति प्रथमान्तपाठं केचित् पठन्ति । ते च यत्तच्छब्दाध्याहारेण च्छान्दसप्रयोगेण वा समर्थयन्ते[1] ॥ १६ ॥

विभूतिश्रवणे प्रयोजनमाह—

कथं विद्यां महायोगिंस्त्वामहं[2] परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥ १७ ॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

हे 'भगवन्' सर्वज्ञत्वादिगुणैकाश्रय तथा 'महायोगिन्' अनन्यसाधारणसमाध्येकनिष्ठ[3] 'त्वाम्' एवंरूपं 'कथं' केन प्रकारेण 'अहं' 'परिचिन्तयन्' अनुस्मरन् 'विद्यां' विजानीयाम् । 'केषु केषु च भावेषु' पदार्थेषु 'मया चिन्त्योऽसि' ध्यातव्योऽसि । अतः प्रागुक्तमैश्वर्यं, समाधिं 'विभूतिं च' इत्थं जगदाभासलक्षणां स्वैश्वर्यविजृम्भां 'विस्तरेण' वैतत्येन मह्यं 'भूयः' बहुतरं 'कथय' आदिश । यस्मादेतत् स्वरूपप्रतिपादनलक्षणम् 'अमृतं' सुधारसं 'शृण्वतो मे' श्रवणाभ्यां पिवतः 'तृप्तिः' सन्तोषो 'नास्ति' ॥ १७ ॥ १८ ॥

एवमभ्यर्थितो भगवानुवाच—

हन्त ते कथमिष्यामि विभूतीरात्मनः शुभाः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

'हन्त' अभ्युपगमे, बाढं यथाशुश्रूषिताः 'शुभाः' स्वविभूतीस्तुभ्यं वक्ष्यामि । किन्तु प्राधान्येन चेतनाचेतनेषु पदार्थेषु अपर्यन्तवर्गभेदविभेदितेषु यत्र यत्र वर्गे या या काचित् प्रधानत्वा-

---

१ 'यन्ति' ख. पाठः । २ 'अहं योगिस्त्वां सदा' इति क. पाठः । ३ 'धिनिष्ठ' क. ।

दतिशायिनी विभूतिस्तां तां वक्ष्यामि । यतो मद्विभूतीनां 'विस्तरस्य' विततत्वस्य 'अन्तः' निष्ठा न विद्यते ॥ १९ ॥

तत्र इदानीं नानाविभूतिकथनप्रस्तावनस्य अन्तेऽपि अभिधायिष्यमाणां परमार्थस्वरूपलक्षणां परां विभूतिं तावत् प्रथममेव प्रतिपादयितुमाह —

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥

सर्वेषां चेतनानामाशये हृदि स्थितः कृतप्रतिष्ठः 'आत्मा अहम्' सकलक्षेत्रज्ञहृदयाभिव्यक्तसामान्यसंविद्रूप एक एव परमार्थत आत्मा । सैव परा विभूतिः, यतस्तन्निबन्धन एव अयं स्वमायाशक्तिप्रकाशितविश्वभावात्मकनानाविभूतिप्रपञ्चः । तद्रूपतया चिन्तितोऽहमनन्तविभूतिविस्तरैककारणतया ज्ञातो भवामि यतः सर्वभूतानाम् 'आदिः' प्रागवस्था सर्गरूपा 'अन्तश्च' नाशावस्था 'मध्यं' स्थित्यवस्था अहमेव एकः । यतो मन्मायावशात् सर्गस्थितिविनाशावस्थायोगित्वेन परस्परमवभासमानेषु सर्वभूतेषु नित्यनिर्विशेषैकचिन्मात्रस्वभावोऽहमेव स्थितः । यैस्तु तादृश्या महाव्याप्त्या अहं चिन्तयितुमशक्यः, तैस्तदधिगमाभ्यासाय यत्र यत्र वर्गे यत् यदुत्कृष्टं तत् तत् मद्विभूत्यंशतया चिन्तयद्भिर्निरुत्तरा सर्वव्यापिनी सामान्यसंविदात्मिका परा मदीया विभूतिरधिगन्तुं शक्यते यां नानाविभूतिप्रतिपादनप्रकरणस्य अन्तेऽपि सामान्यरूपजडांशव्यतिरेकिणीं

'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।' (१०।४२)

इति वक्ष्यति । तदेवंविधे चतुर्दशविधे भूतसर्गप्रपञ्चे, अष्टविधायां देवयोन्यामादित्यादिषु देवादिसर्गेषु, षड्विधायां मनुष्यादियोनौ मनुष्यादिसर्गेषु यत् यदुत्कृष्टं, तत् तत् मदीयपर-

मप्रकाशलेशतया भावयता निरुत्तरप्रकर्षासामान्यसंवित्प्रकाशमयी परा मद्विभूतिरधिगन्तव्येति अध्यायस्य तात्पर्यम् ॥ २० ॥

तानिदानीमुच्चावचान् स्वविभूत्यंशानहन्तया प्रतिपादयितुमाह—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

अदित्यपत्यत्वात् सर्वदेवानामादित्यत्वे प्राप्ते रूढ्या द्वादशसंख्यावच्छिन्नपुराणपठितधातृमित्रार्यमादिसंज्ञानां देवविशेषसर्गे आदित्यसंज्ञा प्रसिद्धा, तेषां मध्ये तद्गणान्तःपठितो विष्णुसंज्ञ आदित्यः 'अहम्' । तस्य जगत्स्थितिपालनलक्षणप्रभवातिशययोगात् मद्विभूत्यंशत्वम् । तथा 'ज्योतिषां' दिवि द्योतमानानां सर्वतेजसां मध्ये 'रविः' सूर्योऽहम् । कीदृशः । 'अंशुमान्' सकलभुवनप्रकाशनाद्यंशुयुक्तत्वे[1] सति प्रकृष्टैरंशुभिर्युक्तः, अत एव तस्य मद्विभूत्यंशत्वम् । तथा 'मरुतां' देवविशेषाणामेकोनपञ्चाशतो[2] मध्ये 'मरीचिः' नाम मरुदहम् । तस्य तन्मध्ये प्रजासर्गकर्तृत्वलक्षणप्रभावयोगात् मद्विभूत्यंशत्वम् । तथा 'नक्षत्राणाम्' अष्टाविंशतिसंख्यानां मध्ये 'शशी' चन्द्रमा 'अहम्' । शशिनो नक्षत्रनाथत्वात् तन्मध्ये गणनं, तस्य च आप्यायनहेतुत्वादिसामर्थ्ययोगात् मद्विभूत्यंशत्वम् ॥ २१ ॥

तथैव दृष्ट्या अन्यानपि आह—

वेदानां सामवेदोऽहं[3] देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥

'वेदानां' त्रयाणां चतुर्णां वा प्रसिद्धानां मध्ये 'सामवेदोहम्' । तस्य भगवतैव प्राधान्यमाविष्कृतम्, येन प्रणष्टेषु वेदेषु

१ 'शतादिशक्त्यंशु' ख. । २ 'शतां' ख. पाठः । ३ 'दोऽस्मि' क. पाठः ।

वाजिवदनपुरुषोद्गीथमुच्चार्य स एव पूर्वं प्रत्याहृतोऽतस्तस्य मद्विभूत्यंशत्वम्[1] । 'देवानां' त्रयस्त्रिंशद्गणभेदेन[2] पुराणपठितानां 'वासवः' इन्द्रोऽहम्, तस्य तदीश्वरत्वात् मद्विभूत्यंशत्वम् । 'इन्द्रियाणाम्' एकादशानां[3] 'मनः' अहं, तस्य प्रवृत्तिनिवृत्तिहेतुत्वात् प्राधान्ये सति मद्विभूत्यंशत्वम् । द्विविधानि भूतानि—चराणि स्थावराणि च । तेषामुभयेषामपि 'चेतना' प्रधानम्, यतश्चेतनोपलक्षितत्वेन चराणां स्थितिः प्रसिद्धैव । चेतनानिबन्धना च स्थावराणामपि व्यवस्था तदनुगृहीतानां तेषां संकल्प्यत्वात्[4] । अतः सर्वभूतप्राधान्यव्यवस्थिता चेतना अभिन्नापि क्षेत्रज्ञशक्तिरहम् । तस्या मुख्यतया मद्विभूत्यंशत्वम् । केचित् तु चेतनां बुद्धिमाचक्षते । तस्याश्च कार्यकारणभेदेन प्रसृतानां जडानामेव भूतानां मध्ये प्राधान्यमाहुः । सा हि तानि सर्वाणि पुरुषसन्निधिसमुद्भूतचेतनभावात् चेतयते इति ॥ २२ ॥

किंच—

**रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**

'रुद्राणाम्' अङ्गारकादिसंज्ञाभिः पुराणप्रोक्ताभिः[5] प्रसिद्धानामेकादशसंख्यानां मध्ये 'शङ्करः' अहम्, तन्मध्ये तस्यैव ऐश्वर्यातिशयात् मद्विभूत्यंशत्वम् । तथा यक्षाणां गुह्यकानां, तथा रक्षसां पिशिताशिनां साहचर्यात् पिशाचानामपि देवयोनिषु दृष्टानां मध्ये 'वित्तेशः' धनेश्वरोऽहम्, तस्य तद्वर्गाधिकृतत्वात् मद्विभूत्यंशत्वम् । तथा 'वसूनां' धरादिसंज्ञाभिः[6] प्रसिद्धानामष्टानां मध्ये

---

१ 'तद्विभू' क. पाठः । २ 'गुण' क. पाठः । ३ 'शानां मध्ये' क. पाठः । ४ 'संकल्पात्' ख. । ५ 'पुराणप्रोक्ताभिः' इति ख संज्ञके नास्ति । ६ 'धनादि' ख. ।

पावकाख्यो वसुरहम्, तस्य नानाविधयागविध्यधिकरणभूतत्वादिना प्राधान्ये सति मद्विभूत्यंशत्वम्। तथा 'शिखरिणां' पर्वतानां मध्ये 'मेरुः' कनकाचलः 'अहम्' तस्य देवालयत्वसूर्योदयहेतुत्वादिना [1]प्राधान्यमिति मद्विभूत्यंशत्वम्,—इति उत्तरत्र सर्वत्र वेदितव्यम्॥ २३॥

किंच—

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम्।
सेनान्यामप्यहं स्कन्दः सरसामस्मि सागरः॥ २४॥

'पुरोधसां' राजगुरूणां मध्ये 'मुख्यं' प्रधानं 'बृहस्पतिं' देवराजगुरुं 'मां विद्धि' तस्य तेषु प्रकृष्टत्वात्। 'सेनान्यां' चमूनायकानां मध्ये चमूनायकः 'स्कन्दः' कुमारः 'अहम्' तस्य तन्मध्ये वीर्यातिशययोगात् प्राधान्यम्। 'सरसां' जलाशयानां मध्ये 'सागरः' समुद्रोऽहम्, तन्मध्ये नानारत्नप्रभवहेतुत्वादिना सागरस्य प्राधान्यम्॥ २४॥

किंच—

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम्।
यज्ञानां जपयज्ञोऽस्मि[2] स्थावराणां हिमालयः॥ २५॥

ऋषीणां मह[3]र्षित्वादिना प्रजापतित्वादिना च महतां प्रकृष्टानां मुनीनां मरीच्यङ्गिरःप्रभृतीनां मध्ये 'भृगुरहं' तस्य तदपेक्षया ज्ञानादिप्रकर्षश्रवणात् प्राधान्यम्। तथा[4] गीर्निर्वर्त्यत्वात् गीःशब्दवाच्यानां मध्ये प्रणवाख्यम् 'एकमक्षरम्' अहम्, तस्य हि पदभूतस्य विश्वरूपतातिरिक्तपरमेश्वरस्वरूपवाचकत्वात् प्राधान्यम्। 'यज्ञानां' द्रव्यनिर्वर्त्यानां यागविशेषाणां प्रागुक्तानां मध्ये जपः

१ 'तेषु प्राधान्यं' ख.। २ 'ह' क. पाठः। ३ 'सप्तर्षित्वा' ख.।
४ 'तथा गिरां' ख.।

प्रणवादिपवित्रावर्तनं, स एव यज्ञो यागविधिरहम् । यथा मन्त्रजपेन देवा[1] आराध्यन्ते, न तथा[2] द्रव्ययज्ञादिनेति तस्य प्राधान्यम् । यतः फलानभिसंधानेन जपयज्ञनिष्ठस्य यत् फलं प्राप्यं, तदपेक्षया तत्तल्लोकान्तरप्राप्तिरपि निरयगतित्वेन मोक्षधर्मेषु प्रतिपादिता । तथाच तत्र उक्तं

'चतुर्णां लोकपालानां शक्रस्यापि बृहस्पतेः ।
मरुतां विश्वदेवानां साध्यानामश्विनोरपि ॥
रुद्रादित्यवसूनां च तथान्येषां दिवौकसाम् ।
एते वै निरयास्तात स्थानस्य परमात्मनः ॥'

(म० भा० शा० प० १९६।६)

इति, मुख्यजापकप्राप्यस्येत्यर्थः । तथा 'स्थावराणां' जङ्गमत्वव्यतिरिक्तलक्षणानां मध्ये 'हिमालयः'[3] अहम् । तस्य समस्तस्थावरभूतमध्ये नानारत्नौषधीप्रभवत्वादिना[4] प्राधान्यमुक्तम् । गिरीणां मध्ये मेरोर्विशिष्टत्वमुक्तम्, स्थावराणां[5] तु हिमालयस्येति न पौनरुक्त्यम् ॥ २५ ॥

किंच—

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं[6] गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

---

१ 'देवताः' ख. । २ 'तथा' ख. । ३ 'प्रालेयशैलोऽहं' ख. पाठः । ४ 'दिना यज्ञयोनिभूतत्वेन यज्ञाङ्गत्वाच्च प्राधान्यं' ख. । ५ 'सर्वस्थावराणां' ख. । ६ 'ऐरावणं' पाठः ख. ।

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितृणामर्यमा चास्मि यमः संयमतामहम्[1] ॥ २९ ॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥
पवनः पवतामस्मि[2] रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥
अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ३४
बृहत्साम तथा साम्नां गायत्री च्छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

श्लोकत्रयोदशकनिष्ठानां वृक्षादीनां पदार्थवर्गाणाम्, अश्वत्थादीनां तत्तद्विशेषाणां यज्ञियत्वादिना[3] तेन तेन विशेषेण प्राधान्यं प्रसिद्धमिति प्रातिपद्येन सर्वं न व्याख्यातम्, किन्तु क्वचित्

---

१ 'संयमिनां' क. पाठः । 'संयच्छतां' ख. पाठान्तरम् । २ 'प्लवतां' ख. पाठः । ३ 'याज्ञिय' ख. ।

किञ्चित् पदं व्याख्यायते। तत्र 'प्रजनः' प्रजननक्रियाकर्ता, तस्य जातावेकवचनम्, तेन प्रजनयितॄणां मध्ये प्रजननक्रियायां मुख्यहेतुत्वात् 'कन्दर्पः' कामोऽहम्। सति हि तस्मिन्नन्येषां प्रजनकत्वप्रसिद्धिः। यादःशब्देन अब्देवता आहुः, तासां मध्ये 'वरुणः' प्रधानम्। तथा 'यमः' वैवस्वतो देवताविशेषो यतस्ततो योनेर्यत्र तत्र योन्यन्तरे सर्वक्षेत्रज्ञान् नियच्छति। तस्य 'संयमतां' नियमक्रियासमर्थानां सर्वेषां मध्ये प्राधान्यम्। संयमतामिति च्छान्दसो यच्छादेशाभावः। केचित् निपुणाः संयच्छतामिति पठन्ति 'कालः कलयताम्' इत्यत्र। इह तावत् सर्वात्मना निरवच्छिन्नमहिम्नो नित्यस्य एकस्य ईश्वराख्यस्य तत्त्वस्य परमार्थसत्त्वात् कालो नाम तद्व्यतिरिक्तः पदार्थो न कश्चित् भवितुमर्हति, किन्तु तन्मायावभासितजडाजडभावात्मके जगति अजडः क्षेत्रज्ञलक्षणो यो भावस्तस्य परस्परभिन्नार्थप्रमातृतायां सत्यामनित्यवस्तुविषयत्वेन कलनामात्रनिमित्तकः कालः समुन्मिषति। अनित्या हि भावा उत्पत्तिस्थितिनिरोधधर्माणो भूतवर्तमानभविष्यद्दशायोगित्वात् कलनीयतां तेन तेन रूपेण अवच्छेद्यतां प्रतिपद्यन्ते, तेषां च मायीया एव प्रमातारः कलयितारः। ततः कलनक्रियैव कालः। ततः कलनीय[1]व्यवहारमुख्यसाधनभूतकलनक्रियायामेवं[2] अस्य कालस्य कलयितॄणां मध्ये मुख्यत्वमिति क्रियात्वेन परिकल्पितस्य कालस्य इह प्रतिपादितं स्वरूपम्। द्रव्यत्वेन अपि तस्य कैवल्यकल्पना व्यवस्थाप्यते। तामग्रे वक्ष्यति। 'अक्षराणां' पदावयवभूतानां मातृकावर्णानां सर्वप्राणभूतत्वादकारस्य प्राधान्यम्। स हि जीव इव शरीराणां तेषां वर्णानां व्यापकत्वेन एको व्यवस्थितः। तस्य हि अनासादितदीर्घककारादिरूपविकारत्वे सति यत्

---

१ 'कलनीयविषय' ख.। २ 'मेकस्य कालस्य' ख.।

रूपं, तत् नादात्मकं परं शब्दतत्त्वमिति तत्त्वविदो वदन्ति। तथा 'सामासिकस्य' तत्पुरुषबहुव्रीह्यादेः समाससमूहस्य मध्ये सकलपदार्थप्राधान्यादिना युगपदधिकरणवचनत्वादिना च द्वन्द्वस्य प्राधान्यम्। तथा 'अक्षयः कालः' इति यदा द्रव्यत्वेन कालः कल्प्यते, तदा सर्गादीनां नित्यप्रवृत्तानां नित्यत्ववत् तस्यापि नित्यत्वे सति क्षणिकादिकल्पस्थायिपर्यन्तभावभेदपृष्ठपातिनामनित्यानां स्वावयवानां निमेषादिकल्पान्तानां मध्येऽक्षयत्वमनन्तत्वमिति स्वावयवापेक्षयैव एतस्य प्राधान्यम्। अवयवनिर्देशस्तु अत्र अर्थात् कल्पनीयः। कल्पना तु कालस्य क्रियात्वेन, द्रव्यत्वेन च, उभयथापि प्रतिपत्तिसहिष्णुत्वात् संभवत्येव। संभवापेक्षयैव च भगवता पुनः कालनिर्देशः कृतः। यदिवा योऽहम् 'अक्षयः' परमार्थो नित्यत्वादविनश्वरः, स एव 'कालः' अहमेव। स्वमात्मानं कालत्वेन अवभासयामीति पूर्वोक्तस्य कालस्य मदिच्छामात्रकल्पितस्वरूपप्रतिपादनार्थं पुनर्वचनमिति; यदिवा दर्शनभेदेन क्वचित् क्रियात्वं, क्वचित् द्रव्यत्वं कालस्य पश्यता भगवता द्विर्निर्देशः कृतः। तथा यः सततं जीवितेन्द्रियशरीरविषयादिकं युगपदेव हरति, तस्य मृत्योस्तत्कालभाविनो मरणहेतोर्वस्तुनोऽन्येषां हन्तॄणां मध्ये प्राधान्यम्। तथा 'च्छलयतां' वञ्चयतां मध्ये द्यूतस्य च्छलयितृत्वेऽपि धर्मादनपेतत्वात् प्राधान्यम्। तथा धर्मद्यूतधनं श्राद्धादिक्रियासु शस्यते। परवञ्चनाभिसन्धिमूलत्वात् छलयितृत्वं स्थितम्। 'सत्त्ववतां' गुणानां सत्त्वरजस्तमोलक्षणानां सत्त्वगुणस्य प्रकाशात्मकत्वात् प्राधान्यम्। तथा येन राजानो दुर्विनीतान् दमयन्ति, स 'दण्डः' शास्त्र[1]नियमितो निग्रहविशेषो मुख्यसाधनमिति स एव दमयिता, तेन दमयतां मध्ये दण्डस्य

---

१ 'शस्त्र' ख. पाठः।

प्राधान्यम् । तथा 'जिगीषतां' प्रतिद्वन्द्विनो जेतुमिच्छतां 'नीतिः' कर्मारम्भोपायादिकार्यसिद्धिपर्यन्ताङ्गपञ्चकमयो नय एव मुख्यं साधनमिति नीतेरेव जिगीषतां मध्ये प्राधान्यम् । तथा 'गुह्यानां' रहस्योपायानां मध्ये 'मौनं' वाङ्नियमरूढं मुनित्वमहम्, नानार्थविषयस्य संकल्पस्य अपि अनुन्मेषो यत्र । स हि परमः समाधिः, तस्मिंश्च सति संकल्पमूलाया वाचो नियमरूपस्य मौनस्य सिद्धिरिति । तदेव परमं गुह्यमित्युक्तम् । तथा ज्ञानवद्ग्रहणेन नानार्थविषयाणि भिन्नानि ज्ञानानि गृह्यन्ते । तेषां मध्ये परमार्थैकलक्षणैकतत्त्वविषयस्य अभिन्नस्य ज्ञानस्य प्राधान्यम् । ततो नानाज्ञानानां मध्ये एकस्य ज्ञानस्य यथोक्तस्य प्राधान्यमनेन प्रतिपादितम् ॥ २६–३८ ॥

विभूतिप्रतिपादनमुपसंहरन्नाह—

यच्चापि सर्वभूतानां [१]बीजं तदहमर्जुन ।
न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ॥ ३९ ॥

किं बहुना विभूतिविस्तरकथनेन । संग्रहादियं परा मम विभूतिः, यतः 'सर्वभूतानां' प्राक्प्रतिपादितपरापरप्रकृतिभेदेन प्रसूतानां 'यद्बीजम्' उत्पत्तिकारणं, सोऽहम् । न हि बाह्यं कारणं जगतां किञ्चित् संभवति मन्मायाशक्तिमात्रमेकं वर्जयित्वेत्यर्थः । यतः 'तत्' इह वस्तु चेतनमचेतनं वा 'नास्ति' न सत्तां भजते, 'यत् मया [२]विना' उत्पद्यते । अतः सकलकारणाभासव्यतिरेकेण पारमार्थिकमहमेव कारणं सर्वभूतानामिति ॥ ३९ ॥

मया च परमकारणेन सता स्वमायामहिमोद्भावितनानाभावभेदाश्रिता या विभूतयो मम संभवन्ति, तासां—

---

१ 'तद्बीजमहं' ख. । २ 'विना न' क. पाठः ।

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

'मम' संबन्धिनीनां दिवो मद्धृदयाकाशादुद्भूतानामपर्यन्तसर्वपदार्थव्यवस्थितानां 'विभूतीनां' निजशक्तिविजृम्भमाणानाम् 'अन्तः' अवधिर्न विद्यते । 'एष तु' इह प्रकरणे 'उद्देशतः' कस्यचित् धर्मस्य कीर्तनात् 'विभूतेः' [1]स्वविभवस्य 'विस्तरः' प्रसरः कथितः ॥ ४० ॥

संग्रहतस्तु इदं स्वविभूतिविज्ञानाय ब्रवीमि—

**यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छे[2]स्त्वं मम तेजोंशसंभवम् ॥ ४१ ॥**

इह सर्वलोकेषु 'यत् यत् सत्त्वं' यत्किञ्चिद् वस्तुजातं चेतनमचेतनं वा 'विभूतिमत्' विभूतियुक्तम्, अत एव 'श्रीमत्' शोभातिशयसंपन्नम् 'ऊर्जितं' तत्तदर्थक्रियासामर्थ्ययुक्तं 'तत् तत्' सर्वं 'मम' संबन्धिनस्तेजसः परस्य प्रकाशस्य य अंशो लेशमात्रं तत्संभवं तत्समुद्भूतं 'त्वमवगच्छेः' अवजानीयाः ॥ ४१ ॥

प्रकारान्तरापेक्षणेन विभूतिनिष्ठां प्रतिपादयितुमाह—

**अथवा बहुनोक्तेन किं ज्ञानेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥**

अथ एतेन तत्र तत्र वर्गे तत् तत् वस्तु मद्विभूतिमत्त्वेन स्थितमवगच्छेति पूर्वोक्तेन 'बहुना' प्रभूतग्रन्थप्रतिपादितेन 'ज्ञानेन' तथाप्रतिपन्नेन सता किं ते प्रयोजनं, न किञ्चित् [3]कृत्यं यतः 'इदम्' अनवधि विचित्र[4]भावमयं 'कृत्स्नं' समस्तं

---

१ 'स्वविभवस्य विस्तरः कस्यचिदेव भागस्य प्रसरः' ख. पाठः । २ 'गच्छ त्वं' क. पाठः । ३ 'तेन कृत्यं' ख. । ४ 'चित्रितं भाव' ख. ।

'जगत्' सप्तलोकीमितं विश्वमेकेन सर्वदा[1] सर्वत्र विचित्रसामान्यसंविदात्मना वेद्यांशव्यतिरेकिणा अंशेन भागेन अवष्टभ्य आक्रम्य व्याप्य 'अहं स्थितः'। तदिदमनेन उक्तं भवति–तत्र तत्र दर्शने तत्तत्प्रकारभेदेन प्रतिपादितस्य अस्य जगतो द्वावंशौ संक्षेपतः स्वरूपम् । एको वेदकैकस्वभावः सर्वदा सर्वात्मना निर्विकारचिन्मात्रस्वरूपः, अपरो नानारूपत्वेऽपि वेद्यैकस्वभावः । तत्र वेद्यांशपरिहारेण तदाभासैककारणभूतवेदकांशविश्रान्तसंविदा अभियुक्तेन भवितव्यम्, येन मद्विभूतिः परमा अधिगम्यते इत्योम् ॥ ४२ ॥

विभूतीरा विष्णोरिह सकलसर्गातिशयगाः
परब्रह्मैश्वर्यावधि समधिगन्तुं व्यवसितैः ।
इयं साक्षाद्भक्तिर्भवति तु विशुद्धैर्वे[2] विबुधैर्निधातव्या नित्यं मनसि दशमाध्यायविवृतिः ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे दशमोऽध्यायः ॥ १० ॥

---

१ 'सर्वथा' इति ख. अधिकः । २ 'विशुद्धेव' ख. ।

## अथ एकादशोऽध्यायः ।

अथ अध्यायदशकेन भगवदुपदिष्टज्ञानविज्ञानपूर्वं समस्ताभिधेयवस्तुश्रवणमात्रादेव भगवतः परमेश्वरत्वावगमात् तस्य परमकारणत्वे तदुक्ते वचसि यथोक्तफलाविसंवादकतया प्रकृष्टोपायत्वे निवृत्तसन्देहमात्मानमावेदयन् श्रुतिमात्रप्रतिपन्नतत्सा[1]क्षाद्दर्शनेच्छाप्रचोदितोऽर्जुन उवाच—

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

'मदनुग्रहाय' मामनुग्रहीतुं निजया परशक्त्या प्रबोधयितुं 'त्वया' परमेश्वरेण स्वयंप्रतिपादितस्वभावेन 'यद्वचः' वचनमध्यायदशकात्मकं वाक्यम् 'अध्यात्मसंज्ञितम्' आत्मविषयज्ञानमयम्, अत एव 'परमं गुह्यं' प्रकृष्टं रहस्यं 'उक्तं' उपदिष्टम्, 'तेन' हेतुभूतेन 'अयं' सर्वजनक्रोडीकारेण स्थितो 'मोहः' इति प्रतिपादितपरमार्थप्रतिपत्त्य[2]र्न्यथाप्रतीतिलक्षणमज्ञानं 'मम' निवृत्तो व्यपगतः इति ॥ १ ॥

तत्र हेतुमाह—

भवाप्ययौ हि भूतानां श्रुतौ विस्तरतो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥

यस्मात् 'त्वत्तः' परमकारणादेकस्मात् समस्तानां स्थावरजङ्गमानां भूतानां 'भवाप्ययौ' उत्पत्तिलयौ 'विस्तरतः' वैतत्येन 'मया श्रुतौ' श्रुतिमात्रेण प्रतिपादितौ, नतु अवधारितौ । 'अपिच' 'अव्ययं' नित्यं 'माहात्म्यं' निरतिशयैश्वर्यलक्षणं महत्त्वं श्रुतम् ।

'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किञ्चिदस्ति······ ॥' (७।७)

---

१ 'प्रतिप्रश्नसाक्षात्' क. पाठः । २ 'प्रत्ययर्थाप्रतीति' क. पाठः ।

इत्यादेरविसंवादिनो भगवद्वचनादेव भगवानेव सकलभूतभावाभावैककारणं तथाभावेऽपि विशुद्धचिन्मात्रस्वभावाप्रच्युतेरद्भुतस्य ऐश्वर्यस्य एकास्पदमिति च मया प्रतिपन्नमित्यर्थः इति ॥ २ ॥

श्रुतिमात्रेण एतत् मया प्रतिपन्नं, नतु साक्षादनुभूतमिति तदर्थमाह—

एवमेतद् यथात्थ त्वमात्मानं परमेश्वरम् ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

'यथा' येन प्रकारेण पूर्वोक्तेन त्वया 'आत्मानं' स्वरूपं 'परमेश्वरं' ब्रह्मादीनामपि ईश्वराणामीशितृत्वात् प्रवरं प्रभुम् 'आत्थ' कथयसि। 'एतत्' वस्तु 'एवम्' अनेन प्रकारेण स्थितम्, न अत्र मे भ्रान्तिरित्यर्थः । तत एव 'ते रूपं' दिव्यं वपुः 'ऐश्वरं' ईश्वरस्य तव संबन्धि 'द्रष्टुं' साक्षात् निरूपयितुम् 'इच्छामि' अभिकाङ्क्षामि । अनेन हि अधुना दृश्यमानेन पुरुषाकृतिना रूपेण तत् परं रूपं वाङ्मात्रेण मम केवलं कथितं यत्र इदमेकस्मिन् सर्वमेव स्थितम्, तदिदानीं भगवद्वचनप्रत्ययात् मया सत्यतस्तथा विद्यमानतया प्रतिपन्नम् । अतः 'पुरुषोत्तम' परमपुरुष त्वत्प्रसादात् प्रत्यक्षतः प्रेक्षितुमभिकाङ्क्षामीति ॥ ३ ॥

किन्तु—

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगीश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

हे 'प्रभो' परमेश्वर 'तत्' तथाविधं तात्त्विकं रूपं परमयोगिभिरपि प्रार्थ्यमानदर्शनं 'मया' मनुष्यमात्रेण 'द्रष्टुं' साक्षात् प्रेक्षितुं 'शक्यं' सह्यमिति 'यदि मन्यसे' जानासि, यदि मम इयतीं योग्यतां संभावयसि, 'ततस्त्वं' 'योगीश्वर' सहजसिद्ध-

---

१ 'द्भुतैश्वर्यै' क. पाठः ।

निरतिशययोगत्वात् प्रयत्नसाध्ययोगानां सर्वेषां योग्यन्तराणां प्रभो 'मे' मह्यं 'अव्ययम्' अनादिनिधनं 'आत्मानं' स्वरूपं 'दर्शय' प्रत्यक्षीकुरु इति ॥ ४ ॥

इत्थमभ्यर्थितः प्रसादाभिमुखो भगवानुवाच—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥
पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि पाण्डव ॥ ६ ॥
इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ७ ॥

हे 'पार्थ' मम एकस्यैव परमार्थसतः परमात्मनः स्वैश्वर्यातिशयात् स्वशक्तित्वेन संबद्धानि असंख्यातानि 'रूपाणि' आकृतिविशेषात्मकानि 'पश्य' अवलोकय। कीदृशानि। 'नानाविधानि' विचित्राणि, अत एव 'नानावर्णाकृतीनि' विविधावभाससंस्थानानि, तथा 'दिव्यानि' अमानुषीयाणि,—इति सामान्येन उपक्रम्य विशिष्टानि उद्देष्टुमाह—'आदित्यान्' द्वादशसंख्यान् देवविशेषान्। तथा 'वसून्' अष्टसंख्यान् 'रुद्रान्' च एकादशसंख्यान् 'अश्विनौ' दस्रौ 'मरुतश्च' एकान्नपञ्चाशतं देवविशेषान् 'पश्य' इति प्राधान्यात् देवतारूपाणि उद्देशमात्रेण उक्त्वा, संक्षेपत आह— एतानि तावत् त्वया सुरलोकनिवासिना सता दृष्टानि, यान्यपि 'बहूनि' अपरिमेयाणि 'अदृष्टपूर्वाणि' न कदाचिदालोकितानि 'आश्चर्याणि' अद्भुतानि, तान्यपि सर्वाणि 'पश्य'। किं बहुना 'इह' मम संबन्धिनि 'देहे' एकस्मिन्नेव रूपे एकत्र स्थितं 'कृत्स्नं' अखिलं चराचररूपत्वात् संक्षेपेण द्विप्रकारं, 'यदन्यत्'[2] किञ्चित्

१ 'भारत' क. पाठः। २ 'यद्यप्यन्यत्' ख. पाठः।

यथाभिलषितं द्रष्टुमभिवाञ्छसि, तदपि 'एकस्थमेव पश्य' इत्येकस्यैव परमार्थसतः परमकारणस्य स्वमायाशक्त्यवभासितानन्तान्योन्यभिन्नभावात्मकत्वमिदमत्यद्भुतं पश्येति अत्र तात्पर्यमिति ॥ ७ ॥

अत एव अत्यद्भुतत्वादस्य अर्थस्य—

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददानि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

'अनेनैव' मर्त्यभावात् परिमितदर्शिनैव चक्षुषा गोलकाधिष्ठानया दृक्शक्त्या पुनः 'मां' प्रदर्शयिष्यमाणाश्चर्यरूपं 'द्रष्टुं' आलोकयितुं 'न शक्यसे' न क्षमो भविष्यसि । ततो 'दिव्यं' सर्वदर्शित्वशक्तियोगात् परमात्मरूपपरमाकाशभवं प्रकृष्टज्ञानात्मकं 'चक्षुः' नेत्रं 'ते ददानि' पारमैश्वर्या स्वशक्त्या निष्प्रयत्नस्यैव आविर्भावयेयम् । तेन मम 'ऐश्वरं' ईश्वरस्य संबन्धि प्रदर्शयिष्यमाणं रूपं 'पश्य' साक्षात् निरूपयेति ॥ ८ ॥

अथ भगवता परमेण समाधिना निरतिशयनिजरूप[दर्शन] योग्यतादानाय अर्जुनो यथा अनुगृहीतः, तथैव पूर्वं भगवद्व्यासमुनिप्रसादादासादितदिव्यचक्षुर्धृतराष्ट्राय प्रतिपादयितुं

संजय उवाच—

एवमुक्त्वा ततो राजन् महायोगीश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥
दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

गतार्थमेतत् श्लोकत्रयम् । किन्तु एकमेव 'ऐश्वरं' भगवत्सम्बन्धि विशुद्धसंविन्मात्रं परमार्थतो यद्रूपं, तदेव सकलजीवलोकविचित्राकृतिभेदेन तन्मायाशक्त्यैव अवभासते । ततो विश्वमेव भगवद्रूपमित्येतावन्मात्रतात्पर्याणि रूपविशेषाणि अवगन्तव्यानि, येन रूपसामानाधिकरण्येन 'अनन्तं विश्वतोमुखं देवम्' इति ग्रन्थः संबन्धमेतीति ॥ ११ ॥

अत एव एकस्य परमार्थाद्वैतचित्प्रकाशात्मनो वैश्वरूप्येण अवभासमानस्य स्वरूपं प्रतिपादयितुमाह—

**दिवि सूर्यसहस्रस्य भवेद् युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः ॥१२॥**

'यदि' अन्तरिक्षे समुदितस्य भास्करसहस्रस्य समकालमेव 'समुत्थिता' प्रसृता 'भाः' दीप्तिः कदाचित् भवेत् 'सा तस्य' एकस्य परप्रकाशस्वभावस्य 'महात्मनः' परमपुरुषस्य 'भासः सदृशी स्यात्' तुल्या भवेदिति काका व्याख्येयम्, येन न सदृशी स्यादित्येवं पर्यवस्येत् । नहि अनन्यप्रकाशसकलवस्तुप्रकाशकनिरतिशयप्रकाशात्मनस्तस्य कोटिशोऽपि युगपदुदितानां दिनकराणां दीप्तिस्तत्प्रकाश[1]लेशसादृश्यमपि आसादयितुमर्हतीति ॥ १२ ॥

एवमनुत्तरप्रकाशात्मनि—

**तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद् देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

'तदा' तादृग्भगवद्वैश्वरूप्यदर्शनकारणभूतदिव्यज्ञानात्मकचक्षुर्दानलक्षणपरानुग्रहरूपे काले 'तत्र' तादृशि परप्रकाशात्मनि 'देवदेवस्य' सर्वेश्वरस्य शरीररूपे 'एकस्थं' एकत्रैव आश्रये स्थितम्, अथच नैकधा 'प्रविभक्तं' वि[2]श्वभावरूपैर्विप्रकीर्णं 'कृत्स्नं' अखिलं

१ 'प्रकाशसादृश्यलेश' क. पाठः । २ 'विश्वरूपैर्भाव' क. पाठः ।

'जगत्' अर्जुनः 'अपश्यत्' साक्षात् कृतवान्,—इति संजयो दिव्येन चक्षुषा पारमेश्वरमनुग्रहमर्जुनस्य दृष्ट्वा एतदुक्तवानिति ॥ १३ ॥

अथ दृष्टपरमेश्वरवैश्वरूप्योऽर्जुनः किं चकारेत्याह—

ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

'ततः' तादृगत्यद्भुतभगवद्रूपसाक्षात्कारक्षणादनन्तरं पुनर्मानुषभावाविर्भावेऽपि अनुभूतपरतत्त्वस्मरणजनितेन विस्मयेन आविष्टः आक्रान्तचित्तवृत्तिः, अत एव 'हृष्टरोमा' संजातपुलकः 'धनञ्जयः' देवकीपुत्रं पुरोवर्तिनं साक्षात्कृतनिरतिशयप्रभावत्वात् संजाततद्विषयबहुमानातिशयो मूर्ध्ना[1] प्रणामं कृत्वा 'कृताञ्जलिः' सन् इदं वक्ष्यमाणं 'अभाषत' उवाचेति ॥ १४ ॥

किमित्याह—

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दीप्तान् ॥ १५ ॥

हे 'देव' परमेश्वर 'तव देहे' सकलजगद्भावैकाश्रयभूतेऽस्मिन् वपुषि 'देवान्' दिवौकसः, तथा अन्यानपि चराचराणां भूतविशेषाणां प्राण्यन्तराणां सङ्घान् सहस्राणि 'पश्यामि' इति देवादिप्राधान्येनैव हि झगिति समस्तविश्वदर्शनं भगवद्वपुषि पूर्वं प्रतिपाद्य, क्रमेण तद्विशेषदर्शनं प्रतिपादयितुमाह—'ब्रह्माणं' प्रजापतिं 'ईशं' प्रभुं 'कमलासनस्थं' पुण्डरीकविष्टरसंनिविष्टं पश्यामि,—इत्यनेन ब्रह्मलोकान्तमूर्ध्वभुवनदर्शनमुक्तवान् । 'ऋषींश्च सर्वान् पश्यामि'—इत्यनेन प्राधान्यापेक्षया ऋषिजनोपलक्षितमध्यमलोकदर्शनमुक्तवान् । 'उरगांश्च दीप्तान् पश्यामि'—इत्यनेन अनन्तवासुकि-

१ 'मूर्ध्ना पादप्रणामं' क. पाठः ।

प्रमुखभुजगेन्द्रोपलक्षितपातालदर्शनमुक्तवान्। एवं त्वद्वपुषि लीनं भुवनत्रयं पश्यामि,—इति स्वानुभवं प्रतिपादितवानिति ॥ १५॥

एवं देवादिविविधभूताधिष्ठितभुवनत्रयदर्शनेऽपि त्वामेव एकं सर्वाश्रयं पश्यामीत्याह—

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम्।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

स्पष्टार्थः श्लोकः । किन्तु भुवनत्रयगतानां भूतानां ये नानाविधा भुजजठरवदनलोचनादयोऽवयवाः, ते तवैव सर्वतोऽनवच्छिन्नमाहात्म्यस्य एकस्य अवयवत्वेन पश्यामीति अत्र तात्पर्यमिति ॥ १६ ॥

इदमेव च ते पुरःस्थितं रूपं त्वदनुग्रहात् परमेश्वरतेजोमयं पश्यामीत्याह—

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम्।
पश्यामि त्वां दुर्निरीक्ष्यं[1] समन्ताद्
दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७॥

अवतरणिकयैव व्याख्याततात्पर्यमेतत् ॥ १७ ॥

अत एव परमेश्वरप्रतिपादकानि विशेषणानि तस्य रूपस्य प्रतिपादयितुमाह—

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम्।

१ 'निरीक्ष्यं' क. पाठः।

त्वमव्ययः सात्त्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

'अक्षरं' स्वरूपप्रच्युतिलक्षणक्षोभरहितं यत् 'परमं' निरुत्तरं वेद्यं ज्ञेयं तत्त्वं, तत् भवान् । तथा 'अस्य' अनन्तप्रपञ्चस्य जगतः 'परं' प्रकृष्टं 'निधानं' त्वयि एतत् सर्वं जगत् निविशते[1] । ननु अस्ति जगतो निधानं प्रधानं, यत्र तत् प्रलये निधीयते[2] । सत्यमस्ति तत् प्रधानम् । तदपि परमकारणे भगवति निलीयते, तत एव च प्रभवतीति प्रधानस्य[3] अपि निधानत्वात् त्वं परमं निधानं जगत इति उक्तम् । तथा कालावच्छेदाविषयत्वात् 'अव्ययः' अक्षयः 'सात्त्वतधर्मगोप्ता त्वम्' । सदिति ब्रह्मनाम यद्वक्ष्यति

'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।' (१७।२३) इति । तत् विद्यते यस्य स सत्त्वान् परमेश्वरः परमं ब्रह्म, स देवता येषां ते सात्त्वता ब्रह्मविदः, तेषां धर्मो यथाप्रतिपादितज्ञानक्रियासमुच्चयानुष्ठानरूपः सदाचारः, तस्य गोप्ता कालापचयवशात् तिरोभवतः पुनःपुनः प्रणयनात् तद्बाधकविघ्नविघटनात् च त्वमेव रक्षितेति ॥ १८ ॥

अत एव—

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

अनन्तत्वादाद्यन्तमध्यरहितम्, अवच्छेद्यस्य हि वस्तुनः आद्यादिविभागवत्त्वम् । इत्थं जगत्प्रपञ्चविरचनसामर्थ्यं वीर्य-

---

१ 'निर्विशते' ख. । २ 'निलीयते' क. पाठः । ३ 'तस्यापि' क. पाठः ।

मनन्तं न कदाचित् निवृत्तं यस्य, तम्। तथा सर्वक्षेत्रज्ञानां तत्तत्क्रियासाधनभूता येऽनन्ता बाहवस्ते पारमार्थिकस्यैव कर्तुः परमेश्वरस्य संबन्धिन इति अनन्तबाहुत्वम्। तथा क्षेत्रज्ञशरीरे चक्षुर्भ्यां नियतविषयप्रकाशनं क्रियते इति शशिसूर्यनेत्रत्वम्। तथा क्रियाविद्भिर्विविधैर्यज्ञक्रियाविशेषैर्वैश्वानरो विश्वमूर्तिः परमेश्वर एव एकस्तर्प्यते इति तस्यैव दीप्तो हुताशोऽग्निर्वक्त्रमिति उक्तम्। तथा स्वेन तेजसा संविद्रूपेण ज्योतिषा सर्वमिदं तपति द्योतयतीत्येवंविधं विश्वात्मानं त्वां पश्यामीति संबन्ध इति॥ १९॥

अथ सर्वशक्तेः परमेश्वरस्य कुरुसैन्यसंहारप्रसृतकालाख्यशक्तियुक्तत्वात् घोरत्वविशिष्टं रूपं वर्णयितुमाह—

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदृग्
लोकत्रयं प्रव्यथितं महात्मन्॥ २०॥

यस्मात् महता रूपेण गगनभूम्यन्तरालं सर्वाश्च ककुभः 'त्वयैकेन' व्याप्ताः पूरिताः, तदिदमीदृग्विधं 'तव' घोरं 'रूपं दृष्ट्वा लोकत्रयं' त्रैलोक्यनिवासितद्दर्शनायोग्यदेवादिरूपं[1] 'प्रव्यथितं' प्रकर्षेण भीतम्। एवं 'महात्मन्' इति रूपमहत्तापेक्षमामन्त्रणमिति॥ २०॥

तेषां देवादीनां तथाविधरूपदर्शनभयोत्पन्नाश्चेष्टाः प्रतिपादयितुमाह—

अमी हि त्वा सुरसंघा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति।

---

१ 'नयोग्यदेवतादि' क. पाठः।

स्वस्तीति चोक्त्वैव महर्षिसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥

'अमी' यस्मात् त्वां दुष्टक्षयाय आविष्कृतदारुणाकारं शक्रादिदेवसमूहाः 'विशन्ति' त्वयि एव लीयन्ते। 'केचिच्च भीताः' सन्त्रस्ताः सन्तः 'प्राञ्जलयः' विरचितकरपुटाः 'गृणन्ति' स्तुतीः पठन्ति। अतश्च 'महर्षिसंघाः' मुनिप्रवरसार्था जगत्क्षेमाय स्वस्तिशब्दमुच्चार्य 'पुष्कलाभिः'[1] मुख्यार्थत्वात् संबद्धाभिः 'स्तुतिभिः' तत्तच्चरितोदीरणैः 'त्वां स्तुवन्ति' प्रशंसन्तीति॥ २१ ॥

किंच—

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्वयक्षासुरसिद्धसंघा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥

रुद्रादयो देवविशेषा व्याख्याताः। ऊष्मपाख्याः पितरः। गन्धर्वादयः प्रसिद्धाः। एते सर्वे देवयोनित्वात् ज्ञानविशेषसंभवे सति 'त्वां वीक्षन्ते' पश्यन्ति घोरत्वादपूर्वस्य रूपस्य विस्मयाविष्टाः इति ॥ २२ ॥

यादृशं रूपं दृष्ट्वा ते एवंविधाः संवृत्ताः, तत् वर्णयितुमाह—

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम्।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥

स्पष्टार्थः श्लोकः ॥ २३ ॥

---

१ 'पुष्कलाभिः स्तुतिभिः' क. पाठः।

तद्रूपदर्शनेन विशेषतः स्वामवस्थां दर्शयितुमाह—

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

अयमपि श्लोकोऽवगतार्थ एव । किन्तु दिव्यचक्षुर्दानलक्षणभगवदनुग्रहक्षणे 'दृष्ट्वा' दिव्येन ज्ञानेन अनुभूय, अधुना मर्त्यधर्मावेशे सति तत् त्वद्रूपं स्मरन् भीतचित्तः सन् धैर्यं निराकुलचित्तत्वं न प्राप्नोमि,—इत्यतो दर्शनकाले एव न भयादीनां संभवो वेदितव्यः । अन्यत्र अपि वर्तमानाख्यातप्रयोगे पूर्वदृष्टस्मरणं कारणत्वेन बोद्धव्यमिति ॥ २४ ॥

किंच—

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥

स्फुटार्थमेतद्वाक्यम् । किन्तु भगवतो दंष्ट्राकरालबहुमुखत्वं संहारप्रवृत्तबहुविकृतकृतान्तपुरुषावेशादिति ॥ २५ ॥

अत एव कृतान्तपुरुषाक्रान्तानां कुर्वादीनां चेष्टितं वर्णयितुमाह—

अमी सर्वे धृतराष्ट्रस्य पुत्राः
सर्वैः सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद् विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥
नानारूपैः पुरुषैर्बाध्यमाना[1]
विशन्ति ते वक्त्रमचिन्त्यरूपम् ।
यौधिष्ठिरा धार्तराष्ट्राश्च योधाः
शस्त्रैः कृत्ता विविधैः सर्व एव ॥ २८ ॥
त्वत्तेजसा निहता नूनमेते[2]
तथाहीमे त्वच्छरीरे[3] प्रविष्टाः ।
यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ॥ २९ ॥
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभितो ज्वलन्ति ।
यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ॥ ३० ॥
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समिद्धवेगाः[4] ।

एतत् श्लोकपञ्चकं निगद[5]व्याख्यातप्रायम् । किन्तु तव वक्त्राणि विशन्तीति बहुवचनेन 'दंष्ट्राकरालानि' इत्यादिविशेषण-विशिष्टानि 'वक्त्राणि' उपक्रम्य अचिन्त्यरूपं 'वक्त्रं तव विशन्ति' इति यदुक्तं, तत् कालपुरुषसंबन्धिन्यो घोराकृतिविशेषरूपा नानाविधाः शक्तय एकस्यां त्वदीयायां परस्यां सामान्यशक्तौ परिण-

१ 'यौध्यमाना' क. पाठः । २ 'नूनमेव' क. पाठः । ३ 'शरीरं' क. पाठः । ४ 'समृद्धवेगाः' क. पाठः । ५ 'निगदित' ख. पाठः ।

मन्ति,—इति भगवतः सर्वशक्त्याश्रयत्वप्रतिपादनपरं बोद्धव्यम्, यत एकवक्त्रशब्देन प्रतिपादितायाः सामान्यशक्तेरव्यपदेश्यत्वादचिन्त्यरूपत्वेन विशेषणमुक्तम्, 'तथाहीमे त्वच्छरीरे' इति अनेन तदेव स्फुटीकृतम् । अत्र श्लोकपञ्चके सार्धे 'नानारूपैः' इत्यादि 'त्वत् शरीरे[1] प्रविष्टाः' इत्यन्तं श्लोकसार्धकं श्लोकसाम्यार्थं केचित् न पठन्ति । कश्चित् तु 'त्वत्तेजसा निहताः' इत्यादि श्लोकार्धमनेनैव अभिप्रायेण न पठति । इह तु बहुपुस्तकदर्शनात् भारते च तत्र सार्धश्लोकप्रणयनात् व्यासमुनेः श्लोकपञ्चकं सार्धमेव पठितमिति ॥ ३० ॥

अथ तथाविधां घोररूपां भगवतः शक्तिं दृष्ट्वा तत्त्वजिज्ञासार्थमिदमाह—

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ॥ ३१ ॥
तेजोभिरापूर्य जगत् समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ।
आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३२ ॥

इमान् 'समग्रान्' समस्तान् 'लोकान्' 'समन्तात्' सर्वतः 'ज्वलद्भिर्वदनैः' सानलैर्मुखैः 'ग्रसमानः' कवलयन् 'लेलिह्यसे' अभीक्ष्णं लेक्षि आस्वादयसि । अत एव 'तवोग्रा भासः' घोरदीप्तयः समस्तं विश्वं 'तेजोभिः' व्याप्य 'प्रतपन्ति' देदीप्यन्ते ।

१ 'शरीरं' क. पाठः ।

यत एवं परमप्रशान्तचिन्मात्रस्वभावस्य तव घोरं रूपं पश्यामि, ततो 'देववर' सकलसुरोत्तम तुभ्यं 'नमः' प्रसादं च कुरु। 'को भवानुग्ररूपः' संप्रवृत्त इति मह्यमाचक्ष्व। यस्मात् 'तव' एवंविधघोररूपग्रहणे 'प्रवृत्तिं' प्रसरं 'न जानामि' तत्त्वतो न अवगच्छामि, अत 'आद्यं' परमकारणं 'भवन्तं विज्ञातुं' विशेषेण बोद्धुम् 'इच्छामि' इति ॥ ३२ ॥

केन हेतुना कः सन् त्वमेवं घोररूपां शक्तिमाविष्करोषीति विज्ञप्तो भगवानुवाच—

कालोऽस्मि लोकक्षयकृत् प्रवृद्धा-
ल्लोकान् समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३३ ॥

'कालोऽस्मि' निरुपप्लवस्वरूपाप्रच्युतस्यैव विजृम्भमाणशान्तोग्रघोररूपसमग्रशक्तेः कालाख्या घोरा मम इयं शक्तिरित्यर्थः। शक्तेश्च शक्तिमदभेदादहमेव[1] काल इति उक्तम्। कीदृशः कालः। सकललोकसंहारैकव्यापारः[2]। अधुना तु 'इह' पृथिव्यां 'प्रवृद्धान्' मदोद्रिक्तान् पृथिवीभारभूतान् 'लोकान्' इमान् 'समाहर्तुं' क्षयं नेतुं 'प्रवृत्तः' प्रसृतः। ततः 'ऋतेऽपि त्वां' विनापि परिपूर्णपापात्मकत्वात् सर्व[3] एते 'न भविष्यन्ति' त्वयि अयोत्स्यमानेऽपि विनङ्क्ष्यन्त्येव। के ते। 'योधाः' संप्रहारिणः 'प्रत्यनीकेषु' प्रतिपक्षसैन्येषु 'येऽवस्थिताः' ॥ ३३ ॥

यत एवमेते संप्लवन्त्येव अवश्यंभाविना[4] विनाशेन आघ्राताः

तस्मात् त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम्।

---

१ 'भेदो यदहं' क. पाठः। २ 'व्यापकः' ख. पाठः। ३ 'सर्व एव तेन' क. पाठः। ४ 'भावविनाशेन' ख. पाठः

मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३४ ॥

कालात्मिकया मच्छक्त्या प्रागेव ग्रस्तनेतान् निघ्नन् त्वं कारणमात्रं संपद्यस्व,–इति व्यक्तार्थ एव एष श्लोकः ॥ ३४ ॥

द्रोणादयश्च अप्रतिमपराक्रमत्वात् दुर्जया इति च मा मंस्था[1] इत्याह—

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि लोकवीरान्[2] ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३५ ॥

द्रोणादयोऽपि सकललोकैकवीराः कालस्य दुर्जयत्वात् मया व्यापादिता इति तान् सुजयान् मत्वा मा भैषीरिति तात्पर्यम् ॥ ३५ ॥

एवं भगवदुक्तेरर्जुनावस्थां धृतराष्ट्राय संजय उवाच—

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३६ ॥

स्पष्टार्थः श्लोकः ॥ ३६ ॥

कृष्णं किमर्जुनः प्राहेत्याह—

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३७ ॥

---

१ 'मावमंस्थाः' क. ख. पाठः । २ 'योधवीरान्' क. पाठः ।

इत्थं सर्वशक्तेः सर्वेश्वरस्य 'तव प्रकीर्त्या' प्रशंसया सर्वं[1] 'जगत्' प्रहर्षं भजते, अत एव च त्वयि अनुरक्तं भवति। तथा तद्द्व्यापकानि[2] 'रक्षांसि' यातुधाना भयात् यतस्ततः पलायन्ते 'सिद्धसंघाः' देवविशेषसमूहाः समस्ताः प्रणमन्ति च। तत् सर्वं 'स्थाने' युक्तम् ॥ ३७ ॥

त्वदनुग्रहादेव साक्षात्कृतं परं भगवत्स्वरूपं परामृशन् पुनरपि आह—

कस्माच्च ते न नमेरन् महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसतः परं यत् ॥ ३८ ॥

अथवा 'कस्मात्' कुतश्च हेतोरेते सिद्धादयस्तुभ्यं न नमेयुः 'महात्मन्' परमपुरुष। कीदृशाय 'ते' तुभ्यम्। 'ब्रह्मणोऽपि' प्रजापतेरपि 'गरीयसे' परमगुरवे यत 'आदिकर्त्रे' आद्याय स्रष्ट्रे तस्यापि जन्महेतवे। 'अनन्त' अपरिच्छिन्नमाहात्म्य 'देवेश' सकलसुरनाथ 'जगन्निवास' समस्तभुवनैकनिधान यतस्त्वं 'सतः' इन्द्रियगोचरादिदन्तावधारणीयात् वस्तुनो यत् 'परं' व्यतिरिक्तम्, तथा असतश्च अभावरूपादपि यत् 'परमक्षरम्' अविकारं निरुत्तरं परमार्थसतत्त्वम्, अतो वेदैकैकस्वभावमनन्यवेद्यं परमकारणं त्वां कथं ते सिद्धा विदितवेद्याः सन्तो न नमस्येयुरिति तात्पर्यमिति ॥ ३८ ॥

अथ यथानुभूतभगवद्धर्मानुदीरयति—

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम्।

१ 'यत् सर्वं' क. पाठः। २ 'उत्थापकानि' क. 'तद्व्यक्तापकानि' ख. पाठः।

वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूपम् ॥ ३९ ॥

बहुशोऽपि व्याख्यातार्था[1] एते भगवद्विषयाः शब्दाः ॥३९॥

किंच—

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
अनादिमानप्रतिमप्रभावः
सर्वेश्वरः सर्वमहाविभूतिः ॥ ४० ॥

सर्वेभ्य ऐश्वर्यगुणयुक्तेभ्यो महती प्रकृष्टा विभूतिः शक्तिविजृम्भा यस्य तथाविधो हि एतादृशो भगवान् 'सर्वेश्वरः' अत एव 'अप्रतिमप्रभावः' अनन्यसामान्यमाहात्म्यः, तथा 'अनादिमान्' आदिर्विद्यते यस्य स आदिमान्, न आदिमाननादिमान् सर्वप्रथम इत्यर्थः । एवंविधः 'त्वम्' एव वाय्वादयो दैवतविशेषाः । यथा च वाय्वादीनामीश्वरस्वरूपादभिन्नत्वं, तथा सर्वमादौ व्याख्यातमेवेति ॥ ४० ॥

परमेश्वरस्य सर्वाकारत्वं परामृशन्नाह—

नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ।
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ॥ ४१ ॥

सर्वं स्पष्टार्थमेतत् ॥ ४१ ॥

किंच—

नहि त्वदन्यः कश्चिदपीह[2] देव
लोकत्रये दृश्यतेऽचिन्त्यकर्मा ।

---

१ 'अप्याख्यातार्थाः' ख. पाठः । २ 'दस्तीह' क. पाठः ।

अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४२ ॥

अत्र अपि न किंचिद्व्याख्यातमस्ति। 'सर्वं' स्वशक्त्या सम्यक् व्याप्नोषि यतः, 'ततः' सर्वात्मकस्त्वमेव। वीर्यम् उत्साहशक्तिः। पराक्रमः क्रियाशक्तिः ॥ ४२ ॥

अथ विज्ञातभगवत्परस्वभावत्वात् पूर्वं पुरुषत्वप्रतिपत्त्या भगवति विहितमतिक्रमं मन्यमानस्तत्क्षान्त्यर्थं श्लोकचतुष्टयमाह—

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखे[1] च।
अजानता महिमानं तवेमं
मया प्रमादात् प्रणयेन वापि ॥ ४३ ॥
यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु।
एकोऽथवाप्यच्युत तत्समक्षं
तत् क्षामये त्वामहमप्रमेयम् ॥ ४४ ॥
पितासि लोकस्य चराचरस्य
त्वमस्य पूज्य[2]श्च गुरुर्गरीयान्।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभावः ॥ ४५ ॥
तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम्।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रिय[3]स्यार्हसि देव सोढुम् ॥ ४६ ॥

१ 'सखेति' क. पाठः। २ 'विश्वस्य' क. पाठः। ३ 'प्रियायार्हसि' क.।

सुबोधमेतत् । किन्तु सखा त्वं मम इति,—मत्वा यत् याद-वादिशब्देन आमन्त्रितोऽसि, योऽपि अन्यो व्यतिक्रमः कृतः; तत्स-र्वमजानतो भगवन्माहात्म्यं तदानीमज्ञातवतो मे क्षन्तव्यमिति संबन्धः । 'सत्समक्षं' इति सभायां वा सतां सन्निधौ । लोक-त्रयेऽपि तव समो नास्ति, कुतोऽन्योऽधिको भविष्यतीति ॥४६॥

अथ विज्ञातमहिमानमावेदयितुं श्लोकत्रयमाह—

दिव्यानि कर्माणि तवाद्भुतानि
पूर्वाणि पूर्वेऽप्यृषयः स्मरन्ति ।
नान्योऽस्ति कर्ता जगतस्त्वमेको
धाता विधाता च विभुर्भवश्च ॥ ४७ ॥
तवाद्भुतं किं नु भवेदसह्यं
किं वा शक्यं परतः[2] कीर्तयिष्ये ।
कर्तास्य[3] सर्वस्य यतः स्वयं वै
विभो ततः सर्वमिदं त्वमेव ॥ ४८ ॥
अत्यद्भुतं कर्म न दुष्करं ते
कर्मोपमानं नहि विद्यते ते ।
न ते गुणानां परिमाणमस्ति
न तेजसो नापि बलस्य नर्द्धेः ॥ ४९ ॥

'पूर्वे' पुरातना अपि सर्वज्ञाः 'ऋषयस्तव कर्माणि स्मरन्ति' अत एव तेषामृषीणामपि तानि 'पूर्वाणि' इति। जगत्सर्गप्रलया-दीनां भगवत्कर्मणामनादिप्रबन्धप्रवृत्तत्वप्रतिपादनपरमेतत् पूर्वं व्याख्यातप्रायम् । अन्यत् सुबोधम् । किन्तु 'धाता' धारयिता 'विधाता' स्रष्टा, तव स्रष्टव्यः संसारः । 'किमद्भुतम्' आश्चर्यरूपं

१ 'एवमिदमज्ञातवतः' क. । २ 'परितः' ख. पाठः । ३ 'कर्तासि' क पाठः ।

कर्म स्वेच्छामात्रोपकरणस्य एकस्य कर्तुस्तव 'असह्यं', अत एव सहकार्यादिनिरपेक्षत्वात् 'परतः' स्वात्मव्यतिरिक्तात् कुतश्चित् 'शक्यं' साध्यं किंवा[1] ते कथयिष्यामि। इत्थं च अनन्यापेक्षतया यतस्त्वं सर्वस्य वस्तुजातस्य निर्माता, ततो हेत्वन्तराभावात् 'त्वमेवेदं सर्वं' त्वच्छक्तिरेव इत्थं चकास्तीत्यर्थः । ततश्च प्रत्याश्चर्यरूपमपि 'कर्म न ते दुष्करं' इत्यादि स्पष्टमिति ॥ ४९ ॥

अथ अनुग्रहक्षणानुभूतभगवत्स्वरूपाव्यतिरेकसमाधेर्निष्क्रान्तस्तथाविधमत्युग्रं भगवत्स्वरूपं मनुष्यधर्मप्रत्यापत्तेश्चिरं द्रष्टुमशक्तः प्राक्तनमेव दिदृक्षमाण इदमाह—

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देवरूपं
प्रसीद देवेश जगन्निवास ॥ ५० ॥
किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ५१ ॥

स्पष्टार्थमेतत् ॥ ५१ ॥

अथ एवंविधमुक्तो भगवानुवाच—

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ५२ ॥

सुबोधमेतत् । किंतु 'आत्मयोगात् दर्शितम्' इत्येतदेवं

---

१ 'वा कथ' क. पाठः ।

बोद्धव्यम्—यदा अनुग्रहपरेण 'मया' त्वमात्मनि परस्मिन् स्वभावे योगं समाधिं प्रापितः, तदा एतद्रूपं तव प्रत्यक्षीकृतं, व्यतिरिक्तत्वेन अस्य पारमेश्वरस्य स्वरूपस्य द्रष्टुमशक्यत्वात् ॥ ५२ ॥

अत एव आह—

न वेदयज्ञाधिगमैर्न दानै-
र्नच क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपं शक्यमहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ५३ ॥

मा ते व्यथा मा च विमूढता भूद्-
दृष्ट्वा रूपं घोरमुग्रं ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ५४ ॥

वेदानां यज्ञानां बहुत्वादधिगमबहुत्वम्, अधिगमशब्देन च अध्ययनश्रवणादयो गुणाः प्रतिपादिताः । दानक्रियातपःशब्दैस्तदनुष्ठानं, क्रियाशब्दश्च अनुष्ठीयमानब्रह्मचर्यादिकर्मविशेषवाचकः । यतश्च एवंविधसदाचारव्यवस्थितैरपि परज्ञानशून्यत्वादशक्यदर्शनमेतत् परमं मम रूपं मदनुग्रहादेव उन्मीलितदिव्यचक्षुषा त्वया दृष्टम् । ततो भयमोहादीनां कोऽवसरः, प्रत्युत मत्स्वरूपनित्यानुसन्धानावहितात्मना त्वया तदेव स्मर्तव्यमिति अभिप्रायः । 'घोरं' कालपुरुषाद्याकृतियोगात् । 'उग्रं' संहारादिकर्मणा । शिष्टं स्पष्टम् ॥ ५४ ॥

अथ एतत् धृतराष्ट्राय संजय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।

आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५५ ॥

स्पष्टार्थमेतत् । किन्तु 'महात्मा' विश्वरूपः सन् 'सौम्यवपुः पुनः' प्राक्तनपुरुषविग्रहात् सुदर्शनाकृतिर्भूत्वा भगवान् 'एनमर्जुनं' तथाविधाद्भुतदर्शनसंत्रस्तचित्तं वक्ष्यमाणेन प्रत्याश्वासयदिति तात्पर्यम् ॥ ५५ ॥

एवं प्रत्यागतप्रकृतिरर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५६ ॥

स्पष्टमेतत् ॥ ५६ ॥

अर्जुनाश्वासनाय भगवानुवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५७ ॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५८ ॥

निगदव्याख्यातप्रायमेतत् । यतः सर्गादितत्तत्स्वाधिकारव्यग्रचित्तत्वादपरामृष्टस्वभावा ब्रह्मादयो 'देवा अप्यस्य रूपस्य' सदा साक्षात्कारमभिकाङ्क्षन्ति, नतु लभन्ते; ततः सुतरां सर्वेण केनचित् दुष्करदर्शनमेतत्—यत् त्वया मत्प्रसादाविर्भूतपरज्ञानचक्षुषा दृष्टम् । अतो 'यथा मां' त्वं तत्त्वतः साक्षात्कृतवान्, तथा दानादिक्रियासक्तैः 'द्रष्टुम्' अशक्योऽहमिति ॥५७–५८॥

केन तर्हि उपायेन शक्योऽस्मीत्याह—

भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५९ ॥

'भक्त्या' मदिच्छयैव परदैवसर्गाभिजातजनसुलभया परिचर्यया, तत्प्रभावादेव आविर्भूतसम्यग्ज्ञानत्वात् अविद्यमानमद्व्यतिरिक्तभजनीयविषयत्वे सति 'अनन्यया'। 'ज्ञातुं' अविसंवादिना अवगमेन बोद्धुं, तथा सम्यग्ज्ञानलक्षणेन उपायेन 'द्रष्टुं' गोचरीकर्तुं, तथा तादृशोपायपरिशीलनाभ्यासातिशयात् 'प्रवेष्टुं' आत्मतया अवगाढुम् 'एवंविधः' यथा त्वया अनुभूतः 'शक्योऽहम्' न अन्यैरुपायैः। त्वं च परस्य अस्य रूपस्य साक्षाद्दर्शनात् प्रवेशपर्यन्तां परां भूमिं समधिरूढस्तेन सुदुस्तरद्वैतमोहसागरादुत्तीर्णः समाश्वसिहि। कुतस्तव इदानीमदृष्टपरमार्थजनोचितैर्भयादिभिर्दोषैः संबन्ध इत्यर्थः ॥ ५९ ॥

एतमेव[2] अर्थं सिद्धान्तीकुर्वन्नध्यायमुपसंहरति—

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ६० ॥

य एवंगुणविशिष्टोऽन्योऽपि कश्चिदभियुक्तः, 'स मामेति' मदभेदलक्षणां सिद्धिमधिगच्छति। कीदृशः। 'मत्कर्मकृत्' शास्त्रचोदितानि तानि तानि वर्णाश्रमक्रमागतानि कर्माणि करोति, किंतु मदर्थं यथोपपत्त्या मत्प्राप्तये, नतु फलान्तरसिद्धये। अत एव 'मत्परमः' अहमेव उपादेयतया प्रकृष्टो यस्य। ततश्च मद्व्यतिरिक्तसमस्तहेयोपादेयवस्तुविरक्तचित्तत्वात् 'मद्भक्तः' ममैव भक्तः, सर्वासु अवस्थासु मयि एव समर्पितान्तःकरणः। तथा स हि 'सर्वभूतेषु' चराचरेषु भावेषु 'सङ्गवर्जितः' निःसङ्गः रागरहितो 'निर्वैरः' द्वेषवर्जितः[3]। यो हि अतत्त्वतया रागद्वेषविषयत्वेन सर्वसंसारिभिः परिगृहीतेषु वस्तुषु निरतिशयानन्दनिर्भरं मत्स्वरूपमेव सततमनुभवति, स 'मामेव' एति

---

१ 'विशेषत्वे' क.। २ 'एवमेव' ख.। ३ 'रहितः' क.।

'...............सिद्धो मुक्त इहोच्यते ।'

इति तात्पर्यमित्योम् ॥ ६० ॥

मुञ्चत्येष स्वभावं न वत बहुविधैरेकमेकान्तशुद्धं
प्रेङ्खद्भिर्भावभेदैरिति विहितपरामर्शमुक्तभ्रमाणाम् ।
स्वात्मन्येवैश्वरं वो मणिमुकुर इव व्यज्यतां वैश्वरूप्यं
स्वाध्यायस्यास्य नीतं स्फुटमभिमुखतां व्याख्ययैकादशस्य ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतो-
भद्रनाम्नि भगवद्गीताविवरणे एकादशोऽध्यायः ॥ ११ ॥

---

१ 'कृत' क. पाठः ।

## अथ द्वादशोऽध्यायः ।

एवं परमाप्तभगवद्वचनलक्षणात् समस्तप्रमाणप्रामाण्यहेतोः प्रमाणोत्तमात् सम्यगवगतेऽध्यायैकादशके, प्रतिपादितप्रत्यध्यायसमुच्चयानुष्ठानपर्यवसिततात्पर्ये ज्ञानविज्ञानादौ प्रकरणाभिधेयवस्तुन्युपपन्नतमत्वेन उत्पन्ननिष्कम्पप्रतिपत्तिः, अत एव तथापात्रीभूतप्रज्ञत्वदर्शनप्रसन्नात् भगवत एव परज्ञानरूपं दिव्यचक्षुरुन्मेषकारणं परममनुग्रहमवाप्तवान्, स्वं यत्नं विनैव पारमेश्वरपरानुग्रहप्रभावमात्रादेव क्षणमात्रं साक्षात्कृतस्य परस्य तत्त्वस्य इदानीं स्वातन्त्र्येण अनुस्मरणे सुगमः कः पन्था मया आस्थेयः; अथवा मद्वचनासादितपरानुग्रहेण अभियोगिना जनेन केन मार्गेण तत् तत्त्वमुपासादितव्यमिति स्वपरार्थघनप्रतरोपायं जिज्ञासुरर्जुन उवाच—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

यथा विश्वातीतस्वरूप एव विश्वात्मकतया साक्षात्कृतोऽसि, एवमनेन प्रकारेण 'ये सततयुक्ताः' सततं सर्वदा जागरादिषु सर्वासु अवस्थासु युक्ताः समाहिताः सन्तो 'भक्ताः' प्रणयिनः 'त्वां पर्युपासते' सेवन्ते; ये च केचन 'अक्षरं' चिन्मात्रैकस्वरूपासंचलनशीलम्, अत एव 'अव्यक्तं' व्यक्तादस्मात् सर्वेन्द्रियगोचरात् नानाभावलक्षणात् वस्तुनोऽन्यं सर्वार्थनिषेधसमाधिनिष्णातधिषणाः 'त्वां पर्युपासते तेषां' उभयेषां योगिनां मध्ये

१ 'प्रतिपादिते' क. ख. । २ 'नि उपपन्न' क. । ३ 'उत्पत्ति' क. पाठः । ४ 'तत्त्वमुपसा' क. । ५ 'घनप्रतरोगुण प्रत्याहारो' ख. ।

'के योगवित्तमाः' अतिशयेन त्वत्स्वरूपोपलब्धिफलसमाधिज्ञा इति ॥ १ ॥

एवंविज्ञप्त एकतरपक्षप्राधान्यप्रतिपादनार्थं भगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

'ते' एवंविधा योगिनो 'युक्ततमाः' निरतिशयसमाधिभाजो मम 'मताः' अभिप्रेताः । तानहं परमयोगिनो मन्ये, न अन्यानित्यर्थः । के ते । 'ये मयि' सकलवस्तुप्रकाशकानन्यप्रकाश्यचित्प्रकाशैकस्वभावे 'मनः' अन्तःकरणं 'आवेश्य' तत्समापन्नं कृत्वा 'परया' समस्तसंशयादिविकल्पविच्छेदादत्युत्कृष्टया 'श्रद्धया' यथोक्तफलसंभावनया 'उपेताः' समन्विताः सन्तो 'नित्ययुक्ताः' नित्यं स्थूलसूक्ष्मसर्वभावानुभवमयीषु तासु तासु अवस्थासु यथोक्तसमाध्यवस्थिताः 'समुपासते' स्वरूपप्रत्यवमर्शलक्षणया निरुत्तरया भक्त्या सेवन्ते ॥ २ ॥

तदेवं कर्मयोगिनामेव योगवित्सु अतिशयोऽनेन प्रतिपादितः । अत एव योग्यन्तरोपायानामायासाभ्युपगमपूर्वं दुष्करत्वादिप्रतिपादनेन अवरत्वमेव प्रतिपादयितुमाह—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

'ये तु' ये पुनर्योगिनः 'इन्द्रियग्रामं' बाह्यानामाभ्यन्तराणां च इन्द्रियाणां समूहं 'संनियम्य' सम्यक् अप्रमत्ततया नियम्य, सर्वेभ्यो विषयेभ्यः प्रतिषिध्य, मामुपासते । कीदृशम् । 'अक्षरमव्यक्तं' च प्राग्व्याख्यातस्वरूपम् । अत एव 'अनिर्देश्यम्' इद-

न्तावसेयसमस्तसंवेद्यभावविलक्षणत्वात् निर्देष्टुमशक्यं वाक्पथातीतम्। तथा 'सर्वत्रगं' सर्वं व्याप्य अवतिष्ठमानमपि[1] 'अचिन्त्यं' बुद्धिगोचरातीतम्। तथा परमार्थनित्यत्वात् 'कूटस्थं' निरुपप्लवाविनश्वरैकस्वभावनिष्ठम्। अत एव 'अचलं ध्रुवं' नहि अयं पर्व[2]तादिकूटस्थपदार्थवत् चलनलक्षणेन उपप्लवेन, अत्यन्ताभावलक्षणेन वा नाशेन कदाचित् संयुज्यते। कीदृशाः सन्तः एवंविधं मामुपासते। 'सर्वत्र समबुद्धयः' सर्वस्मिन् वस्तुनि मत्स्वरूपैकदर्शित्वात् समा निर्विशेषा बुद्धिर्येषां ते तथोक्ताः। समबुद्धित्वादेव सर्वभूतानामेव हिते 'रताः' सर्वस्य आत्मत्वेन प्रतिपत्तेर्न क्वचित् द्वेषदोषकालुष्यमनुभवन्तः। अनेन विशेषणद्वयेन विना अस्य समाधेरनिष्पत्तिः प्रतिपादिता। नहि सर्वसाम्यदशानधिरूढो योगी निष्पन्न इति उच्यते। एवंविधा योगिनो[3] ये मामुपासते, 'ते' सत्यं 'मामेव प्राप्नुवन्ति' यथोक्तया[4] इतिकर्तव्यतया निष्पन्नसमाधीनां मत्स्वरूपसमापत्तिरेव समाधिफलं तेषां, न अन्यत्॥४॥

किन्तु—

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहभृद्भिरवाप्यते[5] ॥ ५ ॥

'तेषां' सर्वभावनिषेधसमाधिनिष्ठानां योगिनां सर्वभावनिष्ठत्वेन मदुपासनपरेभ्यो युक्ततमत्वेन प्राक्प्रतिपादितेभ्यो योगिभ्यः 'अधिकतरः' सातिशयः 'क्लेशः'। कीदृशानां सताम्। 'अव्यक्तासक्तचेतसां' अव्यक्ते वाङ्मनसगोचरातिक्रान्तस्वभावे मयि आसक्तमालम्बनीयत्वेन तत्रैव निषण्णं चेतोऽन्तःकरणं येषां, तथाविधानाम्। कथमव्यक्तासक्तचित्तत्वमधिकतरक्लेश-

१ 'अपि' क. नास्ति। २ 'पवनादि' ख.। ३ 'योगिनोपि' क.। ४ 'यथोक्तयेतिकर्तव्यतया' क. नास्ति। ५ 'देहवद्भिः' क. पाठः।

कारणमिति उपपादयितुमाह—यस्मात् 'देहभृद्भिः' देहं नियत-जात्यभिमानावच्छिन्नं शरीरं अहमितिप्रतिपत्त्या धारयद्भिस्तैस्तादृशैर्योगिभिः 'अव्यक्ता' सर्वात्मना निराभासा 'गतिः' समाधिप्राप्तिः 'दुःखम्' अतिक्लेशेन 'अवाप्यते' अधिगम्यते। अयमभिप्रायः—शरीरेऽहन्तया प्रतिपाद्यमाने सर्वभावव्यतिरिक्तमत्स्वरूपसमापत्तिरनुपपन्नैव, तदभिनिवेशश्च सुमहान् क्लेश एवेति ॥ ५ ॥

अथ अस्ति काचित् युक्तिर्यया देह एव मद्भावेन प्रतिपत्तुं शक्यः सर्वात्मना सर्वक्रियोपरमस्य असंभावित्वेन प्राक्प्रतिपादितत्वात्। तस्मात् शास्त्रचोदितासु क्रियास्वेव वर्तमानः पारमार्थिकमत्स्वरूपमसौ यथा सुखमवाप्नोति, न तथा दुष्करसकलक्रियानिषेधाभिनिविष्टः। नच तादृशो योगिनः सर्वत्र समबुद्धित्वमुपपद्यते सर्वार्थेषु निषेध्यतया द्वेषादिव्यक्तेः। यस्तु सुप्रबुद्धत्वात् सर्वदा सर्वथा मत्स्वरूपैकविश्रान्तसंवित्, तस्य निवृत्तहेयोपादेयविकल्पस्य सर्वत्र समबुद्धित्वमुपपन्नम्। सैषा मुख्या भगवत्स्वरूपोपासा चतुर्थी भक्त्यवस्था। या तु नित्यक्रियान्तःपातिनी नानादर्शनप्रसिद्धेतिकर्त्तव्यताविशिष्टा, सापि अनयैव दृष्ट्या उपपन्नेति प्रतिपादयितुमाह—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

'ये तु' ये पुनरव्यक्तोपासकेभ्यो योगिभ्यो व्यतिरिक्ता योगिनः 'सर्वकर्माणि' शारीरीर्मानसीर्वाचिकीः शास्त्रीया लौकिकीश्च सकलाः क्रियाः 'मयि' सकलकर्तृत्वेन प्रतिपादितस्वरूपे

'संन्यस्य' कार्यतया समर्प्य, देहाद्यहङ्कारात्मकक्षेत्रज्ञकर्तृत्वविनिवृत्ताभिमानाः 'मत्पराः' अहमेव परः कर्तृत्वादिना प्रकृष्टो येषां, ते तथाविधाः 'अनन्येन' अविद्यमानमव्यतिरिक्ततत्त्वान्तरेण 'योगेन' विहितकर्मानुष्ठानरूपेण समाधिना 'मां' यथोक्तस्वरूपं 'ध्यायन्तः' अनुस्मरन्तः 'उपासते' मुख्यया गौण्या वा भक्त्या सेवन्ते; 'तेषां' तथाविधानां कर्मयोगिनां 'नचिरात्' अव्यक्तोपासकापेक्षया अल्पीयसा कालेन 'अहं मृत्युसंसारसागरात्' पुनःपुनर्नाशोत्पादप्रबन्धपयोधेः 'समुद्धर्ता' सम्यगुत्तारको 'भवामि'। कीदृशानाम्। 'मयि' परमकारणे परमेश्वरे 'आवेशितचेतसां' मदभेदभावनया समर्पितान्तःकरणानामिति ॥ ६—७ ॥

अथ कथमिदमत्याश्चर्यमुपपद्यते—यत् लोकवत् सर्वासु क्रियासु क्रियमाणासु अपि अद्वैतपरब्रह्मस्वरूपाप्रच्युतिरूपपरमसमाधिनिष्पत्तिरिति। अत्र प्राक्प्रतिपादितामपि भक्तिं सूक्ष्मत्वात् दुर्ग्रहामुपदेश्य प्रतिपत्तिस्थैर्याय पुनराह—

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवत्स्यसि त्वं मय्येव योगमुत्तममास्थितः॥ ८ ॥

इह सर्वक्षेत्रज्ञानां मनोबुद्धिनिबन्धनाः सर्वार्थसंविदः। तथाहि—मनोऽवस्था द्विप्रकारा, स्वतन्त्रविकल्पात्मिका पूर्वानुभूतस्मरणरूपविकल्पात्मिका च। सा च द्विविधा, जागरस्वप्नभेदात्। एवं सर्वत्रैव। बुद्धिवृत्तिस्तु निश्चयात्मकत्वात् निर्विकल्पेत्येवं स्थिते 'मय्येव' एकस्मिन् परमार्थसति नित्योदितनिर्मलचित्प्रकाशस्वरूपे परमात्मनि यथोक्तस्वरूपं 'मन आधत्स्व' संनिवेशय। यत् यत् मनसा विकल्पयसि तत् तत् मदात्मकत्वेन जानीहि। तथा 'बुद्धिं' यथोक्तस्वरूपां 'मयि' एव यथोक्तस्वरूपे 'निवेशय'

१ 'परमनिर्मलचित्' ख.। २ 'विजानीहि' क.।

समर्पय यद्यत् बुद्ध्या निश्चिनुषे, तत् मदात्मकत्वेन जानीहि। अयमत्र तात्पर्यार्थः—यो योऽर्थो विकल्प्यमानो निश्चीयमानो वा तेन तेन रूपेण संवेद्यते, स संवेद्यमानत्वादेव संवित्प्रकाशादभिन्नः। संविदात्मकश्च प्रकाशो ममैव पारमार्थिकस्य एकस्य संवेदितुरव्यभिचारी धर्म इति वास्तवेन रूपेण सर्वे भावाः सर्वासु अवस्थासु मदात्मका एव, केवलं मायाव्यामोहितो लोकस्तानिदन्तया व्यवच्छिनत्ति। त्वं तु सम्यग्ज्ञानोपदेशेन प्रथमं प्रसारितबुद्धिस्ततो योग्यतातिशयात् साक्षात् मत्स्वरूपमनुभावितः सन् सर्वासु अवस्थासु सर्वभावान् परमार्थतो मत्प्रकाशकत्वेन एव परिमृशसि, इत्येवंविधमिमम् 'उत्तमं' योगान्तरापेक्षया प्रकृष्टं 'योगं' समाधिम् 'आस्थितः' समाश्रितः सन्, 'मय्येव' परमात्मनि 'निवत्स्यसि' स्थितिं लप्स्यसे मदभेदमाप्स्यसीत्यर्थः। अस्य हि कर्मयोगस्य यथोक्तज्ञानसंस्कृतविहितकर्मानुष्ठानमात्रसाधनत्वात् सर्वथा सर्वदा सर्वत्र सुसंपूर्णरूपत्वेन अनुभूयमानत्वात् दीर्घकालनैरन्तर्यादासेव्यमानक्रमसूक्ष्मबहुविधानुष्ठाननिष्णाततया अंशांशिकया कदाचित् कथञ्चिदनुभवनीयस्वरूपादभ्यासयोगादुत्तमत्वमिति ॥ ८ ॥

एवं मुख्यं भगवत्स्वरूपोपासाक्रमं प्रतिपाद्य, सर्वस्य कस्यचित् तत्र पात्रतामर्जुनवदसंभावयन्नर्जुनोपदेशेनैव उपायान्तराभ्यनुज्ञामाह—

अथावेशयितुं चित्तं न शक्नोषि मयि स्थिरम्।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९ ॥
अभ्यासेऽप्यसमर्थः[1] सन् मत्कर्मपरमो भव।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥

---

१ 'समर्थोसि' क. पाठः।

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

अथेति प्रकारोपन्यासार्थम्। यदि यथाप्रतिपादितेन प्रकारेण यथोक्तस्वरूपे 'मयि चित्तं' मनोबुद्धिवृत्त्यात्मकमन्तःकरणं 'स्थिरं' सर्वासु अवस्थासु अविचलावधानतया दृढम् 'आवेशयितुं' समर्पयितुं मत्स्वरूपाभेदेन भावयितुं 'न शक्नोषि' न प्रभवसि 'ततोऽभ्यासयोगेन' कर्मयोगांशतया षष्ठाध्यायसंसूचितसंविधानेन तत्तद्योगशास्त्रप्रणीतेतिकर्त्तव्यताविशिष्टेन वा चित्तवृत्तिनिरोधप्रयत्नात्मकाभ्यासप्रधानेन समाधिना 'मां' यथोक्तस्वरूपम् 'आप्तुम्' अभेदेन प्रतिपत्तुं 'इच्छ' अभिवाञ्छस्व मत्स्वरूपप्राप्त्यभिसन्ध्यपरित्यागेन अभ्यासयोगमपि कर्मयोगयोग्यताहेतुभूतमनुतिष्ठेत्यर्थः। एवंविधेऽपि 'अभ्यासे' अभ्यासयोगे 'असमर्थः' अशक्तः सन् 'मत्कर्मपरमः' मदर्थं कर्माणि, मत्कर्माणि तान्येव परमाणि अभीष्टसाधनतया प्रकृष्टानि यस्य स तथाविधः 'भव' कर्मयोगाङ्गतया अभ्युपगतस्य ईश्वरप्रणिधानाख्यस्य क्रियायोगस्य अनुष्ठानमाचर इत्यर्थः। ततोऽपि हि मत्स्वरूपावाप्तिलक्षणसमाधिफलसिद्धिर्भवति। अत एव आह—'मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि' इति। 'अथैतदपि' यथोक्तं 'कर्तुं' निष्पादयितुं 'अशक्तोऽसि' असमर्थस्त्वं भवसि, तदा 'मद्योगं' मद्विषयं समाधिम् 'आश्रितः' फलत्वेन समाश्रितः सन् 'सर्वकर्मफलत्यागं' सर्वेषां पूर्वोक्तानां कर्मणामनुष्ठीयमानानां यत् फलं तत्तल्लोकान्तरोपभोग्यनानाभोगात्मकसिद्धिरूपं तस्य त्यागमनभिसन्धिना संन्यासं 'यतात्मवान्' सर्वस्मात् विषयात् निगृहीतान्तःकरणेन युक्तः सन् 'कुरु' निष्पादय मयि मनः समाधाय शास्त्रविहितानि सर्वाणि कर्माणि यथोक्तज्ञानप्रसाधनोपायतया फलान्तराभिसन्धानं विना अनुतिष्ठेत्यर्थः ॥ ९–११ ॥

एवमुपदिष्टानां भगवदुपासाभेदानां क्रमेण पूर्वस्य पूर्वस्य अनुष्ठानासामर्थ्ये सति उत्तरस्य उत्तरस्य अनुष्ठानं यदुपदिष्टं, तत् न अवरत्वापेक्षया; किन्तु अधिकारिविषयस्य त्यागस्य सुकरतरत्वमेव बोद्धव्यमिति प्रतिपादयितुमाह—

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरा[१] ॥ १२ ॥

हिशब्दो हेतौ । यस्मादेवंविधो व्याख्यातक्रम[२] इह विवक्षितः, तस्मात् मत्प्राप्तये सर्वकर्मफलत्यागं योग्यतातिशयवशात् सुकरतरं त्वं कुरु,—इति पूर्वापरयोर्वाक्ययोः संबन्धः । कीदृशः क्रमः । इह 'ज्ञानं' यथोक्तया उपपत्त्या सर्वभावानां परब्रह्मरूपतावगमः, तत् 'अभ्यासात्' अभ्यासयोगात् पूर्वोक्तात् 'श्रेयः' सुकरत्वात् प्रशस्यतरम् । अभ्यासयोगो हि सर्वविषयप्रतिषेधक्रमेण चित्तवृत्तीनां निरोधे यत्नः । स च यथोक्तज्ञानलब्धप्रतिष्ठबुद्ध्यधिकारिविषयः । ततः प्रतिष्ठितबुद्ध्यधिकारिविषयं 'ज्ञानं' तदपेक्षया सुकरत्वात् 'श्रेयः' उक्तम् । अत एव अभ्यासयोगिनामव्यक्तासक्तचेतसामधिकतरः क्लेश इति प्रागुक्तम् । एवंविधाच्च 'ज्ञानात्' 'ध्यानं' ज्ञाननिश्चितोपेयवस्तुचिन्तनं 'विशिष्यते' सुकरत्वादतिरिच्यते । तस्य हि ज्ञानापेक्षया तत्त्वसाक्षात्कारप्रवृत्तेर्विशिष्टोऽधिकारी, तद्विषयत्वेन एव तस्य सुकरत्वम् । एवंविधाच्च 'ध्यानात्' 'कर्मफलत्यागः' विशिष्यते, यतो घटमानावस्थोऽसौ तादृग्ध्यानलक्षणे हि कर्मणि व्यतिरेकबुद्धिः स्फुरत्येव । तदधिकार्यपेक्षया त्यागः सिद्धावस्थाधिकारिविषयस्तादृशस्य एव सुकर इति ध्यानात् कर्मफलत्यागो विशिष्यते इति उक्तम् । यस्मात् नेह एवंविधस्त्यागो विवक्षितः, यस्य नाहं कर्ता न मे कर्मफलेन संबन्धः—

---

१ 'अनन्तरम्' ख. पाठः । २ 'व्याख्याक्र' क. पाठः ।

इति प्रलापमात्रेण निष्पत्तिः, किन्तु व्यतिक्रान्ताभ्यासादिपूर्वावस्थासिद्धयोगिविषयं सर्वभावानां परब्रह्मस्वरूपे नित्यमनुभवात् व्यतिरिक्तस्य फलस्य अदर्शनमेव त्याग उच्यते। अत एव आह 'त्यागाच्छान्तिरनन्तरा' इति। 'शान्तिः' संकल्पविकल्पक्षोभप्रक्षयाद्द्वयचिन्मात्रस्वरूपे परमात्मनि एव भगवति अहमित्यभेदेन निरुपप्लवा संविदो विश्रान्तिः। तस्यास्त्यागस्य च न अस्ति अन्तरं व्यवधानं; य एव त्यागः, सैव शान्तिरीश्वरसमापत्तिलक्षणा सिद्धिरिति त्यागात् शान्तिरनन्तरा,—इति उक्तम्। अनन्तरमिति पाठे क्रियाविशेषणत्वेन एष एव अर्थो बोद्धव्य इति॥ १२॥

अथ ईदृशस्य त्यागिनः परसाम्यसमापन्नसंविदात्मभूतस्य भक्तस्य लक्षणमाह—

अद्वेष्टा सर्वभूतानां मैत्रः करुण एवच।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी॥ १३॥
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः॥ १४॥

परब्रह्मात्मकमत्स्वरूपसमापत्तिसूचकैवंविधगुणविशिष्टो 'यः स मद्भक्तः' स एवच 'मे प्रियः' आत्मभूतत्वात् दयितः। कीदृशः। सर्वसाम्यसमापन्नत्वात् चराचरेषु अखिलेषु भूतेषु 'अद्वेष्टा' द्वेषलक्षणदोषरहितः स्वात्मतया सर्वं भावजातं पश्यतस्तस्य द्वेयाभावात् द्वेषाभाव इत्यर्थः। अनेन भावनिषेधात्मके समाधौ द्वेषदोषानुबन्धच्छेदः प्रागुक्तोऽनूदितः। अत एव 'मैत्रः' सर्वत्र सौहार्दवान्। तथा 'करुणः' दयावान् यतो 'निर्ममः' मम इदमेतदर्थक्रियाकारितया स्वमिति परिग्रहबुद्धेर्निष्क्रान्तः। तथा देहाद्यनित्यवस्तुनिष्ठादहङ्कारप्रत्ययात् निष्क्रान्तः 'निरहङ्कारः'

---

१ 'सकलविकल्पक्षोभप्रलयात्' क. पाठः।

तथा समे वेद्यत्वमात्रेण प्रतिभासमानत्वादनन्तराविष्कृतद्वेषरागात्मकविकारत्वात् तुल्ये सुखदुःखे यस्य। तथा 'क्षमी' क्रोधादिविकारहेतुषु तितिक्षावान्। तथा स्वीकृतज्ञानपरामृतत्वात् नित्यतुष्टः सदातिनिरभिकाङ्क्षः। तथा 'यतात्मा' यतः स्वात्मनि एव अवस्थापित आत्मा येन, स तथा। सर्वे हि अप्रबुद्धा अनात्मनि धनादौ नियमितात्मप्रत्ययाः। तथा 'दृढनिश्चयः' केनचित् विकल्पेन प्रकम्पयितुमशक्यत्वात् दृढः सुस्थिरोऽध्यवसायो यस्य, स तादृशः। तथा पूर्वव्याख्यातक्रमेण 'मय्यर्पितमनोबुद्धिः' मयि परमात्मनि अर्पिते निवेशिते मनोबुद्धी येन, सः। एवंविधगुणविशिष्टो मद्भक्त उच्यते, एवंविधसामग्री मदाराधनोपकरणसंपदिति अत्र तात्पर्यमिति ॥ १४ ॥

इदानीमुत्तरेषु श्लोकेषु प्रकृष्टभक्तविशेषणत्वेन उपात्तानि पदानि बहुशो व्याख्यातप्रायार्थत्वात् पठ्यन्त एव—

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयक्रोधैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।
शुभाशुभफलत्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥
समः शत्रौ च मित्रे च तथा मानावमानयोः।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित्।
अनिकेतः स्थितमतिर्भक्तिमान् मे प्रियो नरः ॥ १९ ॥

गतार्थानि एतानि विशेषणानि। किन्तु कृतकृत्यताव्यक्तिहेतुभिः

---

१ 'स्थिर' क.।

परमयोगिसंबद्धैरेवंविधैर्गुणैर्युक्तो यः, स मद्भक्तो भवति,— इत्येतावदत्र तात्पर्यं प्रागेव उक्तम् ॥ १५–१९ ॥

अथ अध्यायमुपसंहरन्नाह—

ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

'ये भक्ताः' मत्सपर्यापरा मत्परायणा 'इदं' यथाप्रतिपादितं 'धर्मामृतं' मत्स्वरूपोपासनात्मकसदाचारमयममृतमविनाशिकत्वकारणं वस्तु 'उपासते' नित्यानुशीलनेन उपसेवन्ते, ते 'अतीव' सुतरां मम 'प्रियाः' वल्लभा न ते मत्तो[1] व्यतिरिक्ता इत्यर्थः । कीदृशाः सन्त उपासते । 'श्रद्दधानाः' समस्तसिद्धिबीजभूतां श्रद्धां भजन्तः, अत एवच 'मत्परमाः' अहमेव यथोक्तस्वरूपः परमेश्वरः परमात्मा सर्वोपायैरुपेयतया परमः प्रकृष्टो येषां ते, तथा श्रद्धामूलमत्समापत्तिफलां परां सिद्धिमुपागता इत्योम् ॥ २० ॥

सर्वार्थप्रार्थनेहारहितमपि सतां मानसं लोभयन्ती
लक्ष्म्या यत्र स्वयैषा विकसति भगवद्भक्तिकल्पद्रुमश्रीः ।
तां नित्यं नन्दनोर्वीविहरणविरसाः कौतुकात् कामपीमा-
मेकां विश्रान्तिभूमिं श्रयत कृतधियो द्वादशाध्यायवृत्तिम् ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे द्वादशोऽध्यायः ॥ १२ ॥

---

१ 'मद्यतिरिक्ताः' क. ।

# अथ त्रयोदशोऽध्यायः ।

अध्यायद्वादशकेन प्रक्रान्तप्रयोजनविषयमशेषमभिधेयतत्त्वमभिहितं, प्रायशो न कश्चित् वक्तव्यशेषो विद्यते । केवलमुक्त एव अर्थोऽवशिष्टेन अध्यायपञ्चकेन निर्मलीकरणाय इदानीं प्रपञ्च्यते । तथाच—प्रस्तावनाप्रदर्शितप्रक्रियाक्रमेण पारमार्थिकयथोक्तैकस्वरूपव्यवस्थितोऽपि परमेश्वरो निरुपमनिजक्रीडामात्रप्रयोजनतया एकमेव स्वस्वभावं वेद्यवेदकविभागपरिकल्पनया शाखाद्वयेन प्रसृतमवभास्य यामिमां मायामयीं महावागुरामग्रथयत्, सा विषयविषयिविभागेन शरीरशरीरिभावेन च अवभासमाना समस्तं संसारिचक्रं पर्यवरुध्य अवस्थिता । तस्याः स्वेच्छया अनुग्राह्यत्वेन परिगृहीतं जनं प्रति उद्ग्रथनोपायभूते सकले प्रकरणे तत्र तत्र प्रतिपादितस्वरूपं ज्ञानलक्षणमर्थं परमेश्वर एव उपदिष्टवान् । तत्र विषयविषयिविभागेन अवस्थितायास्तस्या उद्वेष्टनाय सप्तमे ज्ञानलक्षणोऽर्थः प्रपञ्चितः । तथाहि तत्र परस्यैव तत्त्वस्य जडचेतनविभागेन स्थूलसूक्ष्मप्रकृतिप्रपञ्चविवेकपुरस्सरतया तस्य अर्थस्य

'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।' (७।६)

इत्यादिना प्रतिपादितया ब्रह्मतत्त्वलक्षणया परतरया प्रकृत्या परापरयोः प्रकृत्योरभेदपरमार्थताप्रतिपादनेन निर्णयः कृतः । इदानीं शरीरशरीरिभावेन व्यवस्थितायास्तस्या उद्वेष्टनोपायभूतत्वेन ज्ञानस्य निर्णयार्थं समनन्तरमध्यायमारभते । तत्र तावत् तयोः शरीरशरीरिणोर्वितत्य व्याख्यास्यमानप्रतिपादक[1]संज्ञानिर्देशेन सामान्यलक्षणं प्रतिपादयन् संक्षेपतो विवक्षितस्य ज्ञानस्य स्वरूपमपि

---

१ 'प्रतिपादित' क. पाठः ।

श्रीभगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेद तं प्राहुः क्षेत्रज्ञमिति तद्विदः॥ १॥

'इदं' सर्वप्रमातृप्रसिद्धतया व्यवस्थितं 'शरीरं' देहः क्षेत्रसाधर्म्यात् 'क्षेत्रमिति' उच्यते क्षेत्रसंज्ञया कथ्यते। यथा कुसूलादिगतानां धान्यादिबीजानां मूलस्तम्बशाखाशिलादिविशेषप्रसवाभिव्यक्त्यधिकरणः पृथिव्युद्देशः क्षेत्रमित्युच्यते, तथा कर्माशयसंभृतानां कर्मणां जात्यायुर्भोगलक्षणविपाकविशेषाभिव्यक्त्यधिकरणभूतं शरीरमपि इदं क्षेत्रमिति उच्यते। तेन तत्कर्मविपाकास्पदत्वेन यदनुभूयते, तत् शरीरमिति वेदितव्यम्। 'एतत्' च एवंविधं क्षेत्रं 'यो वेद' जानाति, 'तं तद्विदः' क्षेत्रज्ञस्वरूपज्ञाः 'क्षेत्रज्ञमिति' विदुर्जानते। किमनेन उक्तं भवति। अस्मिन् शरीरे द्विप्रकारा प्रतिपत्तिरेव स्थिता सर्वदेहिनामहन्तया इदन्तया च। तथाच-'अहं ब्राह्मणो यज्ञदत्तः' इत्यादिना देहमहन्तया व्यवस्यन्ति, कदाचित् 'ममेदं शरीरं' इतीदन्तया व्यवस्यन्ति; अतो व्यवसायिता प्रमाता तावत् कश्चिदत्र विद्यत एव। यश्च अंशः प्रमातृतया प्रतीयते, स क्षेत्रज्ञो जीवश्चेतनः इति प्रतिपत्तव्यः। एवमस्मिन् शरीरे यद्यत् वेद्यतया वेदकसंबन्धमात्रात् प्रतीयते, तत् क्षेत्रांशतया वेदितव्यम्। योऽसौ वेदकतया प्रतीयते, स क्षेत्रज्ञ आत्मा इति वेदितव्यः। एतावत्येव नित्यावहितत्वं शरीरशरीरिणोर्विवेकज्ञानकारणम्। तच्च वेद्यवेदकसंबन्धमात्रनिबन्धनसकलपरापरव्यवहाराणामपि सर्वदेहिनां मायानिमीलिततत्त्वदृशां स्वप्नेऽपि न उन्मिषति, यावदीश्वरानुग्रहशक्त्यैव सा तत्त्वदृक्

१ 'वेत्ति' ख.। २ 'संभृतानां' ख. पाठान्तरम्। ३ 'अवगन्तव्यः' ख. पाठः।

तेषां न उन्मीलिता । तेन अनुगृहीत एव विषयोऽस्य[1] ज्ञानस्य,—इति तात्पर्यम् । यत उक्तम्—तद्विदः केचनैव योगिनस्तं विदुरिति ॥ १ ॥

ननु परमार्थत एक एव प्रमाता प्रतिपादितः । प्रतिक्षेत्रं च पृथक्पृथक् वेदकप्रतीतिरबाधिता व्यवस्थिता,—इति स्वसिद्धान्तविरोधभ्रान्तिं परिहर्तुमाह—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥

इह वेदकत्वमात्रमेकमव्यभिचारि असाधारणमात्मनो लक्षणमुक्तम् । अतः परस्परभिन्नानां क्षणिकनानावस्थाजुषां वेद्यानां शरीराणामेव भिन्नरूपत्वं व्यवस्थितम् । ननु वेदकत्वमात्रतयैव तदधिष्ठायकत्वेन व्यवस्थितस्य पारमार्थिकस्य एकस्य वेदकस्य आत्मनो नानात्वमस्ति सर्वदेहगतत्वेऽपि वेदकैकलक्षणाव्यभिचारात् । या तु प्रतिशरीरं जात्यवच्छेदेन पृथक्प्रतिपत्तिः, तदचिन्त्येश्व[2]रमायाशक्तिविलसितमेव । अतस्तद्व्युदासार्थमेव च अयमुपदेशः प्रबुद्धान्प्रति अर्जुनमुखेन उच्यते । 'सर्वक्षेत्रेषु' चतुर्दशविधभूतसर्गभेदेन अवस्थितेषु अपरिसंख्येयेषु शरीरेषु एकमेव 'मां क्षेत्रज्ञं' परमात्मानं 'विद्धि' जानीहि । यथा एकक्षेत्रगतनानावयववेदकत्वेनैव क्षेत्रज्ञप्रतीतिर्मायादशायामवस्थिता, तथा समस्तशरीरवेदकत्वेन एकः पारमार्थिकोऽहमेव क्षेत्रज्ञः । ततश्च एवंविधयोः 'क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं' सम्यक्प्रतिपत्तिस्तदेव 'मम मतं' ज्ञानत्वेन अभिप्रेतम् । ननु सांख्यादिप्रतिपादितयोः शरीरशरीरिणोर्विवेकज्ञानमात्रं तात्त्विकं ज्ञानमिति तात्पर्यम् ॥ २ ॥

इदानीं नानादर्शनभेदेन व्यवस्थापितनानारूपस्य अपि क्षेत्रस्य

---

१ 'स्वज्ञानस्य' ख. पाठः । २ 'दचिन्त्यैश्वर्यमाया' क. पाठः ।

वेद्यत्वमात्रसामान्यलक्षणाभेदात् कांचिदेव दर्शनप्रक्रियामाश्रित्य तत्स्वरूपे प्रतिपादयितव्ये वेदाद्यागमप्रसिद्धसांख्यप्रक्रियासमाश्रयणेन प्रतिपादयिष्यमाणक्षेत्रस्य स्वरूपमुपक्षेप्तुमाह—

तत् क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्स्वभावश्च[1] तत्समासेन मे शृणु ॥ ३ ॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम् ॥ ४ ॥

'तत्' क्षेत्रज्ञज्ञेयतया उपक्रान्तं 'क्षेत्रं यत्' यदभिधानमित्यर्थः, तथा 'यादृक्' यादृशेन प्रकारभेदेन स्थितं 'तत्' संक्षेपेण अवधारय । तस्मिंश्च क्षेत्रे 'यत्' वस्तु 'विकारि' विशिष्टकार्यकारणत्वात् विकारवत् विकारसंयुक्तं, तदपि 'शृणु' । तथा 'यतश्च' विकारिणो 'यत्' विकारभूतं वस्तु उपपद्यते, तदपि शृणु । तथा 'स च' क्षेत्रज्ञ एवमेव 'यो' यत्पर्यायो 'यत्स्वभावः' यादृशश्च, तत्सर्वं संग्रहेण उच्यमानमवधारय । अस्य वस्तुनः स्मृतिश्रुतिप्रसिद्धत्वप्रतिपादनार्थमाह 'ऋषिभिः' स्मृतिकर्तृभिः 'बहुधा' बहुप्रकारं तत्र तत्र स्मृतिशास्त्रेषु 'गीतम्' । तथा 'छन्दोभिर्विविधैः' वेदशाखाभेदेन नानारूपैरत एव 'पृथक्' पृथक्प्रकरणभेदेन गीतम् । 'ब्रह्मसूत्रपदैः' ब्रह्मसूत्रशब्देन रहस्यभागो वेदस्य वेदान्तसंज्ञ उच्यते, तस्य यानि पदानि अवान्तरवाक्यानि; तैः 'हेतुमद्भिः' उपपत्तिसंयुक्तैः 'विनिश्चितं' विशेषेण कृतनिश्चयमिति ॥३–४॥

एवं वेदवेदान्तस्मृतिप्रसिद्धत्वमनेन वक्ष्यमाणस्य क्षेत्रादिप्रतिपादकस्य अर्थस्य प्रोक्तम् । तत्र यत् क्षेत्रं यश्च क्षेत्रज्ञ इति यदुक्तं, तत्र क्षेत्रं शरीरं; यश्च तद्वेदकः[2], स क्षेत्रज्ञ इति प्रागेव उक्तं स्वरूपमनयोर्मन्यमानो[3] यादृगित्यादिना शिष्टं वक्तुमाह—

१ 'यत् प्रभावश्च' क. पाठः । २ 'तज्ज्ञः' ख. पाठः । ३ 'स्वरूपं तयोर्मन्य' ख. पाठः ।

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

'एतत्' महाभूतादिवस्तुसमुदायात्मकं 'क्षेत्रं' विकारसंयुक्तं विकारग्रहणात् प्रकृतिभूतसंयुक्तमपि[1] संक्षेपेण कथितम् । तत्र महाभूतशब्देन व्यापकत्वादिमहत्त्वे सति तन्मात्राण्येव उक्तानि वेदितव्यानि । यतः श्लोकार्धेन कारणभूतं पदार्थचतुष्टयं सङ्गृहीतम् । तत्र 'अहङ्कारः' अस्मीतिप्रत्ययोऽस्मिताशब्देन क्वचिदुक्तः । 'बुद्धिः' निश्चयात्मकं ज्ञानं महत्तत्त्वमिति प्रसिद्धम् । तथा 'अव्यक्तं' गुणत्रयात्मिका प्रकृतिः । एतानि चत्वारि कारणभूतानि स्थूलादिक्रमेण निर्दिष्टानि । तानि च पृथिव्यादीनां भूतानां तन्मात्राणि कारणम् । अहङ्कारस्तैजसवैकारिकभूतादिभेदेन त्रिविधः । तत्र तैजसत्वेन मनसः कारणम्, वैकारिकत्वेन इन्द्रियाणाम्,भूतात्मत्वेन तन्मात्राणाम्,—इति अहङ्कारस्य त्रिविधगुणात्मकस्य कारणत्वम् । केचित्तु अहङ्कारतन्मात्रलक्षणस्य षट्कस्य[2] महत्तत्त्वं कारणमाहुः, केचिदहङ्कारस्यैवेति बुद्धेः कारणत्वम् । बुद्धेश्च गुणत्रयरूपा प्रकृतिरव्यक्तशब्देन उक्ता कारणमिति कारणभूतवस्तुचतुष्टयप्रतिपादनेन 'यद्विकारि' इति प्रक्रान्तोऽर्थो निर्णीतः । अत्र हि अव्यक्तं स्वाधिकारापेक्षया मूलकारणम् । अहङ्कारश्च बुद्धिकार्यः सन् इन्द्रियादिकारणम् । तन्मात्राणि अहङ्कारकार्याणि बुद्धिकार्याणि वा पृथिव्यादिकारणमिति चतुर्णामपि कारणत्वात् विकारित्वम् । अथ कार्यवर्गं प्रतिपादयितुमाह—'इन्द्रियाणि' पञ्च बुद्धीन्द्रियाणि श्रोत्रादीनि प्रसिद्धानि, पञ्च वागादीनि

१ 'विकृति' ख. पाठः । २ 'त्वात्' ख. ।

कर्मेन्द्रियाण्यपि तत्त्वम्, मनश्च एकादशं संकल्पविकल्पात्मकम् । 'पञ्च इन्द्रियगोचराः' इति इन्द्रियगोचरशब्देन यद्यपि शब्दादयो भूतगुणा उच्यन्ते, तथापि महाभूतानां स्वगुणोपलब्धिद्वारेण स्वरूपोपलब्धेरिन्द्रियगोचरशब्देन स्थूलान्येव भूतानि उक्तानि यतः षोडशकोऽसौ विकारवर्गः, एष च कार्य एव, न कारणमिति । एवं सांख्यदर्शनप्रसिद्धा तत्त्वचतुर्विंशतिरेषा शरीरभावेन व्यवस्थिता क्षेत्रज्ञज्ञेयत्वात् क्षेत्रमिति उक्ता । इदानीं तु दर्शनान्तरेषु तत्तत्प्रक्रियाविशेषसमाश्रयणेन यो यः पदार्थसंग्रहः कृतो भवति, तस्य सर्वस्य प्रमेयत्वानतिक्रमादस्मत्पक्षे क्षेत्रत्वमेवेति प्रतिपादयितुमाह—इच्छेत्यादि । कैश्चिदिच्छाद्वेषसुखदुःखादय आत्मधर्मत्वेन अभ्युपगतास्ते वेद्यत्वात्क्षेत्रमेव । तथा शरीरेन्द्रियादिसमुदायः 'संघातः' । 'चेतना' चेत्यतेऽनयेति कृत्वा ज्ञानं बुद्धिवृत्तिः । 'धृतिः' प्राणादिधारणानिबन्धनमहंप्रत्ययः । एतत्सर्वं वेद्यत्वानतिक्रमात् क्षेत्रमेवेत्यस्य श्लोकार्धस्य तात्पर्यम् । अत्र तु प्रमात्रेकस्वभावस्य आत्मनः कथं प्रमेयत्वं, कथंवा सर्वव्यवहारानुपपत्तिसिद्धानुसंधातृलक्षणस्वरूपस्य तस्य असम्भवः, कथंवा देशकालाद्यनवच्छिन्नमहिम्नो यावज्जीवभावित्वं,—इत्यादिनानाप्रवादप्रतिक्षेपाय बहवो विपश्चितः कृतपरिश्रमाः । सा च तत्त्वस्य साध्यमानावस्था सन्दिग्धबुद्धित्वदशानुत्तीर्णपुरुषविषयतया । अस्यां सिद्धान्तकथायामीश्वरानुग्रहाविर्भूतविशुद्धश्रद्धादिगुणापिशुनितसंशयादिदोषाभावनिर्मलप्रज्ञोपदेश्यपुरुषविशेषविषयायामुपन्यस्तायां मतिकालुष्यादृते न किञ्चित् प्रयोजनम् । नहि सुसिद्धं सुरसमाहारविशेषमास्वादयन्तं पुरुषं प्रति तत्साधनावस्थाप्रतिपादनेन प्रस्तुताहारवैरस्यजननमात्रातिरिक्तः कश्चिदुपकारः संभवतीति अकाण्डपाण्डित्यप्रकटनताण्डवाडम्बरविड-

म्वितात्मनां मार्गो न मन्तव्यः । तदेवं यथोपक्रान्तं क्षेत्रलक्षणं तावत् निर्णीतम् ॥ ५–६ ॥

इदानीं 'स च यो यत्स्वभावश्च' इति उपक्रान्तक्षेत्रज्ञलक्षणं निर्णेतव्यतया अवशिष्यते । स च

'क्षेत्रज्ञं चापि मां विद्धि········· ।' (१३।२)

इति मुख्य एव एकः क्षेत्रज्ञो विवक्षितः, तस्य

'ज्ञेयं यत्तत्प्रवक्ष्यामि··· ········ ।' (१३।१२)

इत्यादिना वितत्य लक्षणं वक्ष्यति। संप्रति तु तादृशस्य क्षेत्रज्ञस्य उक्तस्य च क्षेत्रस्य यत् ज्ञानं सम्यक्संवेदनं मुख्यज्ञानतया प्राक् प्रतिपादितं यादृग्गुणद्वारेण अभिव्यज्यते, सोऽभिव्यक्तिहेतुर्गुणगण एव ज्ञानमिति प्रतिपादयितुमाह—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥
अध्यात्मज्ञाननित्यत्वं[1] तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

संघर्षादिदोषप्रसक्तस्य प्रसिद्धपुरुषान्तरानुष्ठीयमानसदाचारानुकरणे संकल्पो मान इति उच्यते । स च अनुष्ठितस्य अपि

---

१ 'निष्ठत्वं' क. ख. ।

सदाचारमात्रस्य संसारश्वभ्रपातफलतामावहन्नासुरसर्गभाग्जन-
विषयो महान् दोषः। तथाच उक्तं

'मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः।
चत्वार्येतान्यभयङ्कराणि
भयं प्रयच्छन्त्ययथाकृतानि॥' (महाभा०)

इति। चत्वारि अग्निहोत्रादीनि वस्तूनि आश्रमधर्मरूपाणि शास्त्रचोदितत्वादनुष्ठीयमानानि अभयं तावत् कुर्वन्ति, मानादिदोषदूषितचित्तत्वेन कृतानि प्रत्युत महद्भयमनुष्ठातुः फलन्तीत्यपि हि अस्य श्लोकस्य अर्थः। एवंविधो मानो विद्यते यस्य, स मानी; तस्य भावो मानित्वं, तदभावः 'अमानित्वं' शुद्धसंकल्पत्वं नाम गुणो ज्ञानाभिव्यक्तिहेतुत्वात् ज्ञानमित्युक्तम्[1]। एवमेव 'अदम्भित्वम्'। दम्भो हि मानादिदोषदूषितसंकल्पत्वे सति दृष्टमात्रफलतया सदाचारानुष्ठानं, व्याजेन धर्माचरणमित्यर्थः। स विद्यते यस्य असौ दम्भी मिथ्याचारः, तस्य भावो दम्भित्वं; तदभावः 'अदम्भित्वं' सम्यक्क्रियानुष्ठानमित्यर्थः, तदपि पूर्ववत् ज्ञानमेव। तथा 'अहिंसा'। हिंसा नाम शास्त्रीयनियमनैरपेक्ष्येण द्वेषलौल्यादिप्रसक्तस्य[2] प्राणिनां जिघांसा, तदभावोऽहिंसा निसर्गतः सर्वभूतेषु करुणार्द्रचित्तत्वादनभिद्रोहः, तदपि ज्ञानम्। तथा 'क्षान्तिः' परैरभिद्रुह्यमाणस्य सत्यपि प्रतीकारसामर्थ्ये स्वभावतः प्रशान्तचित्तत्वात् वाङ्मनःकर्मभिरविकारित्वं, सापि हि ज्ञानम्। ननु अहिंसाक्षान्त्योर्यदि ज्ञानत्वं, तत् कथं तत्त्वज्ञानोपदेशविषयत्वेन परिगृहीतस्य अर्जुनस्य यज्ञसंग्रामादिक्रियानुष्ठाने नियुज्यमानस्य तद्गता हिंसा अक्षान्तिश्च अनुष्ठेयत्वेन उपदिष्टा। उच्यते—

१ 'मित्यर्थः' क. पाठः। २ 'प्रयुक्तस्य' ख. पाठः।

यथोक्तज्ञाननिष्ठस्य अवश्यानुष्ठेयस्वकर्मभावेन अवस्थिता हिंसा अक्षान्तिश्च हिंसैव न भवति, नच अक्षान्तिरित्युक्तमेव प्राक्। 'आर्जवम्' ऋजुत्वं यथाहृदयं वाङ्मनःप्रवृत्तिहेतुरकुटिलता। यदेवं प्रशंसन्ति–

'सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्।'

इति। तदपि ज्ञानम्। एवं पञ्चैते धर्माः परमेश्वरानुग्रहसूचकदैवसर्गभाजो, न अन्यस्य प्रक्षीयमाणसदसत्कर्मसन्तानस्य संसारस्वरूपप्रत्यवेक्षायोग्यप्रज्ञस्य सहसैव जायन्ते। ते च तद्धृदयकृतप्रतिष्ठस्य ज्ञानतरोर्मूलसन्ततिस्थानीयाः। तद्युक्तस्य पुरुषस्य अनुग्रहशक्त्या कल्याणमित्र[1]संस्तवादिना प्रेर्यमाणस्य 'आचार्योपासनं' सद्गुर्वाराधनं नाम धर्मो य उत्पद्यते, स ज्ञानम्। ज्ञानतरोः किल असौ स्कन्धस्थानीयो धर्मः, षडान्तरीयकाः शाखाप्रतानकल्पा अमी धर्माः प्रादुर्भवन्ति। तद्यथा–शास्त्राधिगमपुरस्सरः संस्कारविशेषः, तथा हेयोपादेयवस्तुविषयो विवेकः, विज्ञाततत्स्वरूपस्य हेयापवर्जनपूर्वमुपादेयानुष्ठानौन्मुख्यम्। अचार्योपासनादेवंविधधर्मोदये सति पल्लवपुष्पस्थानीयाः शौचादयो जन्मादिदोषदर्शनपर्यन्ता धर्मविशेषाः समुन्मिषन्ति। तत्र विशिष्टक्रियानुष्ठाने प्राप्ताधिकारस्य कल्याणहेतुषु तासु तासु क्रियासु आसक्तचित्तस्य तद्गुणैः सम्बध्यमानस्य प्रथमः शौचो नाम गुणः सर्वक्रियाणां तत्पूर्वकत्वात्। तच्च द्विप्रकारं बाह्यमाभ्यन्तरं च। तत्र बाह्यम्–अधिकारिदेशकालाद्यवस्थापेक्षया नियतेतिकर्तव्यतया मृज्जलादिना दुष्टद्रव्यगन्धलेपाद्यपासनपर्यन्ता मृजा। आभ्यन्तरं–बाह्यनिवृत्तौ सत्यां शुद्धोऽस्मीति निर्विप्लवा प्रतिपत्तिः, यां भावशुद्धिमित्याहुः। एतच्च शौचं कायवाङ्मनोनिर्वर्त्यानां तपः-

१ 'मित्रं समस्तवादिना' ख. पाठः।

स्वाध्यायध्यानादीनां गुणान्तराणामुपलक्षणं वेदितव्यम् । अथ 'स्थैर्यं' संशयादिदोषनिवृत्त्या अनुष्ठेयेषु अर्थेषु अचञ्चलता । तस्मिंश्च सति 'आत्मविनिग्रहः' अत्मनोऽन्तःकरणस्य निषिद्धात् विषयात् विनिग्रहो नियमनम् । ततश्च 'इन्द्रियार्थेषु' विषयेषु दृष्टानुश्रविकेषु क्षयातिशयादिदोषदर्शनात् 'वैराग्यं' रागद्वेषरहितत्वं, तत् प्रकर्षमासादयत्[1] सत्त्वान्तरेषु गुणेष्वपि पर्यवस्यति । तस्मिंश्च तादृशे गुणे सति 'अनहङ्कारः' ईदृशोऽस्मीतिदुरभिमानाभावः, यदिवा शरीरादावहमस्मीतिप्रत्ययनिवृत्तिः । ततश्च जन्मादिदोषप्रभवस्य दुःखस्यैव महादोषस्य अनुदर्शनं पृष्ठतो निरूपणम् । तद्यथा—गर्भवासादिनिरतिशयक्लेशानुभवादिकं जन्मनो दुःखं, प्राप्तशरीरग्रहस्य अवश्यंभावि मरणदुःखम् । तथा सति शरीरे वार्धक्यरोगादिदुःखमिति शरीरित्वं नाम आदिमध्यान्तावस्थासु दुःखमयमेव,—इति विवेकहर्म्याधिरूढः स्वपरविषयत्वेन विवेक्तुं क्षमः । यथोक्तं

'प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति ॥'

इति । तथाविधस्य च स्वर्गादिफलेषु क्रियाविशेषेषु 'असक्तिः' असङ्ग औदासीन्यम् । तथा दृष्टसुखहेतुषु सुतकलत्रभवनादिषु 'अनभिष्वङ्गः'[2] सर्वस्वग्रहपरित्यागः । एतां च दशां प्राप्तस्य 'इष्टानिष्टोपपत्तिषु' प्रियाप्रियपदार्थप्राप्तिषु सतीषु 'समचित्तत्वं' हर्षशोकादिविकाररहितान्तःकरणत्वम् । एवमेव तस्यां ज्ञानतरोर्नानाविधपल्लवपुष्पस्थानीयायां गुणसामग्र्यां निर्वृत्तायां फलस्थानीया 'मयि भक्तिः' उपासा । कीदृशी । 'अव्यभिचारिणी' निरपाया । केन हेतुना । 'अनन्ययोगेन' अन्येन यथाप्रतिपादित-

---

१ 'र्षसमासादनात्स' ख. पाठः । २ 'ष' ख. ।

मत्स्वरूपव्यतिरिक्तेन वस्तुना योगः संबन्धोऽन्ययोगः, तदभावोऽनन्ययोगस्तेन। किमुक्तं भवति। सर्वभावानां मत्स्वरूपाव्यतिरिक्तत्वदर्शनं ज्ञानतरोः फलभूता मुख्या मद्भक्तिः। सा हि चतुर्थी ज्ञानित्वरूपा भक्त्यवस्था। यथोक्तं प्राक्

'.........ज्ञानी त्वात्मैव मे मतः।' ( ७।१८ )

इति। तस्यां च सत्यां 'विविक्तदेशसेवित्वं' विविक्तदेशस्य तादृशनिरुत्तरभक्तिरसामृतास्वादविघ्नकारिचेतनाचेतनवस्तुरहितस्य गिरिगुहापुण्यसरित्पुलिनगुप्तगृहदेशस्य[1] सेवित्वं भजनशीलता। तद्विपरीतायां 'जनसंसदि' चित्तव्युत्थानहेतुलोकसभायां 'अरतिः' उद्वेगस्तत्परिहरणमित्यर्थः। तथा 'अध्यात्मज्ञाननित्यत्वम्' अध्यात्ममात्मनि यत् ज्ञानं परमात्मस्वभावसंवेदनं, तत् नित्यमव्यभिचारि यस्य, स तथा, तस्य भावस्तत्त्वम्। तस्मिंश्च सति 'तत्त्वज्ञानार्थदर्शनं' तत्त्वस्य परमात्मस्वरूपलक्षणस्य परस्य भावस्य ज्ञानं बोधः स्वसंवेदनानुभवः। पूर्वेण पदेन ज्ञानस्य सिद्धिं कल्पयता उत्तरेण सिद्धत्वमेव प्रतिपादितं, स एव अर्थः प्रयोजनं फलं यस्येति तस्य दर्शनं साक्षात्कारो निरुत्तरा सिद्धिरित्यर्थः। एते विविक्तदेशसेवित्वादयस्तत्त्वज्ञानार्थदर्शनान्ता धर्माः फलभूताया भक्ते रसस्थानीयाः,–इत्येतावती गुणसामग्री 'ज्ञानमिति प्रोक्तं' स्पष्टोऽर्थः। अत उक्तात् गुणसमूहात् 'अन्यथा' अन्येन विपरीतेन प्रकारेण मानित्वदम्भित्वादिना यत्स्थितं,तत्सर्वं 'अज्ञानं' ज्ञानविपरीतं वेदितव्यम्। एतच्च पुरस्तात् देवासुरसर्गकथनप्रसङ्गेन पुनरपि ज्ञानाज्ञानलक्षणं वक्ष्यति ॥ ७–११ ॥

एवंविधेन च ज्ञानेन—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते।

---

१ 'गुहादिदेशस्य' ख. पाठः।

'ज्ञेयं' ज्ञातव्यं 'यत्' यथोक्तेन ज्ञानेन फलतया अवस्थितं परमात्मलक्षणं वस्तु 'तत्' इदानीं 'प्रवक्ष्यामि' तत्स्वरूपं प्रकर्षेण कथयिष्यामि । 'यज्ज्ञात्वा' यद्बुद्ध्वा 'अमृतम्' अविनाशिस्वरूपं 'अश्नुते' व्याप्नोति । ननु अनन्यसंवेद्यस्य सर्वसंवेदकस्वभावस्य कथमिदन्तावसेयवस्त्वन्तरवत् ज्ञेयत्वेन व्यपदेशः कृतः । सत्यं, न तस्य वस्तुनः परमार्थतो ज्ञेयता संभवति । किन्तु आरुरुक्षावस्थायां ज्ञातृज्ञानज्ञेयविभागात्मकत्वादुपचारेण ज्ञेयशब्दस्तत्र प्रवर्तते, नतु वास्तवेन रूपेण तस्य ज्ञेयता विवक्षिता । यतः सोऽयमहमिति स्वात्मत्वेन प्रत्यवमर्श एव तस्य ज्ञानं, तद्वदहमिदं वेद्मि इति,—व्यतिरेकेण तस्य एकस्य अनुभवितृत्वमात्रलक्षणस्य तत्त्वस्य अवगमः संभवति ॥

तथाविधान्येव तद्विशेषणान्याह—

अनादिमत् परं ब्रह्म न सन्नासत् तदुच्यते ॥ १२ ॥[1]
सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च यत् ॥ १५ ॥
अविभक्तं विभक्तेषु विभक्तमिव संस्थितम्[2] ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

किं तज्ज्ञेयमिति ससंज्ञं निर्दिशति परं ब्रह्मेति । परमार्थतः

---

१ 'न एतन्नास' क. पाठः । २ 'चस्थितम्' ख. पाठः ।

सर्वस्य वस्तुनो ब्रह्मरूपत्वे स्थिते यत् ज्ञेयतया संप्रति आभासते, तदपरं; यत्तु[1] ज्ञातृमात्रस्वरूपं 'तत्परं ब्रह्म' इत्युक्तम्। कीदृशं तत्। 'अनादिमत्'। इदं वेद्यं वस्तु सर्वक्षेत्रज्ञसाधारणं पृथिव्यादिरूपं विषयतया व्यवस्थितं, तथा प्रतिक्षेत्रज्ञं शरीरतया व्यवस्थितम्, उभयरूपतया प्राक्प्रतिपादितं, कारणापेक्षतया सर्वमादिमत्, आगमापायधर्मकत्वादादिकोट्यवच्छिन्नं, ततश्च[2] अन्तकोट्यवच्छिन्नमपि। तद्विपरीतं तु कारणान्तरनिरपेक्षसद्भावं 'अनादिमत् परं ब्रह्म' इत्युक्तम्। अन्यच्च कीदृशम्। 'न सत्'। इह हि यदिन्द्रियैर्बाह्याभ्यन्तरैरिदमिति गृह्यते, तत् मायीयैः प्रमातृभिः सदिति प्रतिपद्यते। ब्रह्म तु प्रमात्रेकस्वभावत्वात् सर्वेन्द्रियगोचरभूतं तथा सत् न भवति। नच एवम् 'असत् तदुच्यते'। यत एवमपि सत्त्वेन प्रतिपन्नस्य सर्वस्य वस्तुनस्तथावभासकत्वात् तदेव सद्भावकारणं कथमसदिति वक्तुं शक्यम्। अत एव तस्य परमार्थसदेकप्रमातृरूपस्य विश्वरूपत्वं प्रतिपादयितुमाह—'सर्वतः पाणिपादं तत्'—इत्यादिना। सर्वेषां क्षेत्रज्ञानां यानि पादादीनि कर्मेन्द्रियाणि, यानि च चक्षुःश्रोत्रादीनि बुद्धीन्द्रियाणि तत्तत्क्रियाज्ञानसाधनत्वेन व्यवस्थितानि; तानि असाधारणकर्तृज्ञातृशक्तेरेकस्यैव तस्य[3] विश्वात्मनः शक्तिभेद इति तात्पर्यम्। यत आह 'सर्वमावृत्य तिष्ठति' इति। एकमेव तत्त्वं सर्वमिदं जगत् कर्तृतया ज्ञातृतया च व्याप्य वर्तत इति। अत एव आह 'सर्वेन्द्रियगुणाभासं' इति। यानि नानाक्षेत्रज्ञसंबद्धत्वेन अवभासमानानि सर्वाणि बाह्याभ्यन्तराणि इन्द्रियाणि तेषां शब्दादिविषयावभासकत्वादयो ये गुणा धर्माः, तानवभासयति प्रकाशयति यत्; तत् तथोक्तम्, स्वयं तु 'सर्वेन्द्रियविवर्जितम्' नहि तस्य

---

१ 'यत् तत्' ख. पाठः। २ 'तच्च' ख.। ३ 'तस्यैव' ख.।

मायावभासितावच्छिन्नस्वरूपक्षेत्रज्ञवत् नियतेन्द्रियाधीनं ज्ञानमित्यर्थः। तथा 'असक्तं' विशुद्धचिन्मात्रैकस्वभावव्यवस्थितत्वात वेद्यरूपेण प्राकृतेन प्रपञ्चेन अमिश्रीभूतम्। अथच 'सर्वभृत्' सर्वं बिभर्ति धारयति यत्। तत्र हि तत्त्वे वेद्यव्यतिरिक्तस्वभावेऽपि सर्वमिदमवस्थितं तद्विना कस्यचिदपि स्वरूपलाभाभावात्। अत एव 'निर्गुणं' गुणेभ्यः सत्त्वादिभ्यः प्रकाशप्रवृत्तिनियमात्मकेभ्यः सुखदुःखमोहवृत्तिभ्यो निष्क्रान्तं तेभ्योऽत्यन्तव्यतिरिक्तस्वरूपम्। नहि ब्रह्म अनित्यसुखाद्यात्मकं भवति, केवलमाकाशमिव सूर्यातपरजस्तिमिरादिभिस्तैस्तैर्गुणैरत्यन्तासंस्पृष्टस्वरूपमपि तत्त्वविचारशून्यैः प्रमातृभिस्तद्वत्तया गृह्यते। वस्तुतस्तु गुणभोक्तृत्वात् गुणाननुभवितृतया भुङ्क्ते, नतु तैस्तत्स्वरूपमाव्रियते। अत एव अनवच्छिन्ननिजमाहात्म्यविश्वरूपत्वादाकाशमिव घटादीनां सर्वभूतानां चराचराणां 'बहिः' ज्ञेयभावेन 'अन्तः' ज्ञातृभावेन च अवभासमानमपि परमार्थतः सामान्यसंवित्स्वभावमेवैकं तत्तत्त्वं[1] व्यवस्थितं, देहादिप्रत्ययव्यवधानमात्रकृतो बाह्याभ्यन्तरव्यपदेशः। अत एव आह नित्यनिश्चलस्वभावमात्रप्रतिष्ठितत्वात् 'अचरं' गतिधर्मविवर्जितं सर्ववस्तुवेदकतया नित्यप्रसृतशक्तित्वात 'चरं' गमनशीलमिव। तथा इदन्तावसेयसर्ववस्तुविलक्षणस्वरूपत्वात् परमसूक्ष्मं 'तत्' तस्माच्च सौक्ष्म्यात् कारणात् 'अविज्ञेयम्' इदमित्यनवधार्यस्वरूपम्। अत एव सर्वप्रमातृणां ज्ञेयत्वाभावात् 'दूरस्थम्' अतिविप्रकृष्टम्। अथच तद्विना कस्यचिदपि ज्ञानस्य कर्मणो वा अपि अनुपपत्तेः सर्वेषां 'अन्तिके' अभ्याशे स्थितम्। तथा 'विभक्तेषु' देवमनुष्यतिर्यगादित्वात् परस्परभिन्नेषु वस्तुषु सामान्यसंविदात्मकत्वेन 'अविभक्तम्' अभिन्नैकस्वरूपम्। अथच 'विभक्तवच्च

[1] 'कं तत्त्वं' ख.।

संस्थितम्' भेदेन अवभासमानत्वात् । तथा 'तत्' तत्त्वं 'भूतभर्तृ' सर्वभूतानां तस्य तस्य रूपस्य अवस्थित्येकहेतुत्वात् धारकम् । तथा 'ग्रसिष्णु' संहारशक्तियुक्तत्वात् ग्रसनशीलम् । तथा 'प्रभविष्णु' उत्पादनहेतुत्वात् स्थितिप्रलयसर्गकारणमित्यर्थः । तथा 'ज्योतिषां' सूर्यादीनां प्रकाशकानां प्रकाशहेतुत्वात् 'ज्योतिः' प्रकाशकम् । तानि हि जगद्भावप्रकाशकान्यपि संवित्प्रकाशप्रकाश्यानि । अत एव 'तमसः परमुच्यते' । यद्यत् परप्रकाश्यं,तत्तत् स्वयमप्रकाशात्मकत्वात् तमोरूपम् । तस्मात् तत् तत्त्वं परं सर्वप्रकाशकरूपत्वात्[1] प्रकृष्टं व्यतिरिक्तं वा । तथा 'ज्ञानज्ञेयं' ज्ञानेन यथाप्रतिपादितस्वरूपेण उपायेन ज्ञेयमात्मतया प्रत्यभिज्ञेयमित्यर्थः । यतो 'ज्ञानगम्यं' ज्ञानं विना तथा विषयीकर्तुमशक्यम् । परमार्थतस्तु 'सर्वस्य' कस्यचित् प्रमातुः 'हृदि' हृदये संवेत्तृतया विशेषेण स्थितं सिद्ध्यवस्थायां तथा स्वसंवेदनसंवेद्यत्वात् ॥ १२–१७ ॥

उपसंहरति—

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

'इति' एतावता ग्रन्थेन 'क्षेत्रं'

'महाभूतानि·················· ।' ( १३।२ )

इत्यादिना प्राकृतभावमयं शरीरं, 'तथा' अमानित्वादितत्त्वज्ञानार्थदर्शनान्तधर्मरूपं 'ज्ञानं' तथा

'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु······।' (१३।५)

इत्यादिना मुख्यक्षेत्रज्ञरूपं 'ज्ञेयं' तत्तत्त्वमिति[2] प्रधानं पदार्थत्रयमेतदुक्तम् । यतो 'मद्भक्तो' मदनुग्रहादेव मत्सपर्यापरः 'एतत्'

---

१ 'प्रकाशैरूपत्वात्' क. । २ 'तत्त्वं' ख. ।

त्रितयं ज्ञात्वा 'मद्भावाय' मत्स्वरूपसमापत्तये 'उपपद्यते' उपपन्नः समर्थो भवति ॥ १८ ॥

अथ यदेतदत्र ज्ञानमुपदिष्टं, तेन प्रकृतिक्षेत्रज्ञपरमात्मलक्षणं पदार्थत्रयं निर्णीतम्,–इति संग्रहेण क्रमेण प्रदर्शयितुमाह—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

यैषा 'प्रकृतिः' सप्तमेऽध्याये विषयभावेन, संप्रति शरीरभावेन विभज्य प्रतिपादितस्वरूपा, तथैव यः 'पुरुषः' विषयित्वेन शरीरित्वेन प्रतिपादितः, एतावेव अन्योन्यसंबद्धत्वेन 'अनादी विद्धि' जानीहि । नहि एतयोरेकतासंबन्धस्य पूर्वकोटिरुपलभ्यते, ज्ञानात्तु यथोक्तस्वरूपादन्तकोटिरस्त्येव, अनयोरेवमनादित्वं संबन्धस्य,–इति अत्र तात्पर्यं; नतु समशीर्षिकया नित्यत्वप्रतिपादनम् । यतः प्रकृतेर्वेद्यत्वादुदयव्ययधर्मयोगित्वे सति प्रवाहनित्यत्वं, पुरुषस्य तु परमार्थतः संविद्रूपत्वात् कूटस्थनित्यत्वम् । अत एव आह 'विकारान्' महदादीन् 'गुणांश्च' सत्त्वादीन् वेद्यैकस्वभावान् 'प्रकृतिसंभवान्' प्रधानकारणान् जानीहि ॥ १९ ॥

एवं सामान्येन प्रकृतिपुरुषयोः स्वरूपं प्रतिपाद्य, इदानीं यथा प्रकृतिः प्रतिपुरुषं नानाशरीरभावेन संबद्धा, पुरुषश्च प्रतिशरीरं नानाक्षेत्रज्ञभावेन यथा संबद्धस्तथा प्रतिपादयितुमाह—

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

कार्यं महाभूताद्यात्मकं, कारणानि बाह्याभ्यन्तराणि इन्द्रियाणि,–इति शरीराद्यात्मकः समूहः कार्यकारणशब्देन उच्यते । तस्य कर्तृत्वे तावन्मात्रनिविष्टाहंप्रत्ययरूपे 'प्रकृतिः' अव्यक्तं 'हेतुः' कारणम् । सा हि शरीरात्मना व्यवस्थिता सती तन्निविष्टा-

हंप्रत्ययनिमित्तम् । तथा सुखादीनां वेद्यत्वात् भोग्यानामात्मनो यो भोक्तृत्वाभिमानः, तत्र वेदकस्वभावत्वात् पुरुष एव कारणम् । सति पुरुषप्रत्यये सुखदुःखात्मनो भोग्यस्य विषयत्वं, पुरुषस्य च विषयित्वव्यपदेशः ॥ २० ॥

कुतः—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥

यस्मात् प्रकृतौ नानाकार्यकारणात्मकशरीरभावेन परिणते प्रधाने स्थितो मायावशात् तावन्मात्राहङ्कारावष्टम्भेन वर्तमानः 'पुरुषः प्रकृतिजान्' प्रकृतेः समुद्भूतान्[1] 'गुणान्' सत्त्वादीन् सुखाद्यात्मना परिणतान् 'भुङ्क्ते' वेदकत्वेन विषयीकरोति । यतो महाभूतगुणाः शब्दादयः सुखाद्यात्मना वेद्यत्वमापन्नाः पुरुषस्य विषयित्वव्यपदेशहेतवः । एवं शरीरशरीरिभावेन विषयविषयिभावेन च प्रकृतिपुरुषयोरविवेकजः संबन्धः । ततश्च 'अस्य' पुरुषस्य गुणेषु शरीरात्मना विषयात्मना च सङ्गोऽहङ्कारममकारात्मको दृढः संबन्धः, तत् सतीषु सत्त्वगुणप्रधानासु, असतीषु च रजस्तमःप्रधानासु योनिषु उत्पत्तिकारणमूर्तिषु यानि जन्मानि पुरुषादिरूपतया संभवाः, तेषु 'गुणसङ्गः' एव 'कारणं' हेतुः प्रकृतिपुरुषविवेकाभावमात्रनिमित्ता संसारिता पुरुषस्येत्यर्थः ॥ २१ ॥

यतः परस्य तत्त्वस्य देहेऽस्मिन् नानापुरुषसंबन्धिनि द्विधा स्थितिरित्याह—

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥

---

१ 'संभूतान्' ख. पाठः ।

'महेश्वरः' सर्वपुरुषैश्वर्यापेक्षया महानत्युत्कृष्ट ईश्वरः प्रभुः परब्रह्मशब्दापरपर्यायः स्वमायोद्भावितपुरुषव्यपेक्षया 'देहेऽस्मिन्नुपद्रष्टा भर्ता अनुमन्ता भोक्ता च' इति व्यवस्थितः । यतः प्रकृत्यादिमहदहङ्कारात्मना दृश्यत्वेन उपस्थापितमर्थं पुरुषः पश्यति,—इत्यसौ 'उपद्रष्टा' इत्युच्यते । तथा दृश्यमेव शरीरादि अहन्तया परामृशन् 'भर्ता' कार्यकारणस्य अहन्तया धारकः स एव व्यपदिश्यते । तथा प्रकृत्या मतं ज्ञातं वेद्यत्वेन प्रतिपन्नं सुखादिविषयभूतं वस्तु पृष्ठतः पुरुषो मन्यत इति 'अनुमन्ता' स उच्यते । ततश्च तस्यैव भोक्तृत्वव्यपदेशः । इत्थं सांख्यप्रक्रियया पुरुषस्य शरीरित्वविषयित्वारोपो य उच्यते, तत्र विवेकाभावः कारणं; स च मायानिबन्धनः । यदा तु विद्योदयात् विवेकजज्ञानाविर्भावः, तदा असावेव पुरुषः 'परमात्मा' इत्यभिधीयते प्रबन्धतो यथाप्रतिपादिताद्वयचिदेकस्वभावब्रह्मस्वरूपतया उच्यते ॥ २२ ॥

एवं प्रकृतिपुरुषेश्वरविवेकलक्षणस्य ज्ञानस्य फलमाह—

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥

'यो' योगी 'एवं' उक्तेन प्रकारेण 'पुरुषं' नानाक्षेत्रज्ञरूपतया अवस्थितं 'गुणैः' सुखाद्यात्मकविषयभावेन अवस्थितैः 'सह वेत्ति', 'स' तत्त्वत्रयपरमार्थवेदित्वात् 'सर्वथा' सर्वेणापि प्रकारेण तत्तद्वर्णधर्मात्मकेन तत्तदाश्रमधर्मात्मकेन च[1] 'वर्तमानः' तदनुष्ठातृतया तिष्ठन्नपि 'भूयः' पुनः 'न अभिजायते' न संसारी भवति यथोक्तेन ज्ञानाग्निना संसारप्रसवहेतूनां बीजस्थानीयानां कर्मणां दाहादिति । यथोक्तं

१ 'वा' क. ।

'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥'

इति । स्पष्टोऽर्थः ॥ २३ ॥

अत्र च आत्मनो दर्शने यथोक्तं ज्ञानमेव यद्यपि मुख्यतया उपायः, तथाप्युपायान्तरैर्गौणैरपि असौ कथञ्चित् गम्यत इत्याह—

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥
अन्ये त्वेव[1]मजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥

'केचित्' सहजसिद्धतत्त्वज्ञाना निरुत्तरपरमेश्वरानुग्रहभाजो 'ध्यानेन आत्मानं पश्यन्ति' यथोक्तब्रह्मस्वरूपतानुसरणेन साक्षात्कुर्वन्ति । अत एव केन क पश्यन्तीत्यभेदप्रतिपादनार्थमाह 'आत्मनात्मानमात्मनि पश्यन्ति' इति । किमुक्तं भवति । यत्र अधिकरणे हृदयादौ ध्यानं कुर्वन्ति, येन च अन्तःकरणेन कुर्वन्ति, यच्च तेन ध्यानेन उपलभन्ते, तत् सर्वं परब्रह्मरूपतयैव प्रत्यवमृशन्तीति तात्पर्यम् । तथाच परा काष्ठा आत्मज्ञानस्य । संप्रत्येतावतीं योग्यतामप्राप्ताः 'अन्ये सांख्येन' प्रकृतिपुरुषविवेकरूपेण ज्ञानेन आत्मानं पश्यन्ति । अन्ये 'योगेन' पातञ्जलादिप्रणीतविधिना समाधिना, अन्ये तु 'कर्मयोगेन' यथोक्तज्ञाननिष्ठतया स्वकर्मानुष्ठानरूपेण समाधिना आत्मानं पश्यन्ति,—इति आत्मज्ञानस्य परापरभेदेन प्रकारद्वयमुपन्यस्तम् । तत्र ध्यानेनेत्यादिना शुद्धज्ञानमात्रस्वरूपतया य उक्तः, सा च कर्मयोगिनामारूढावस्था । यथोक्तं

'योगारूढस्य तस्यैव शमः कारणमुच्यते ।'( ६।३ )

---

१ 'चैव' ख. पाठः ।

इति। कर्मयोगेनेति समुच्चयात्मकत्वेऽपि कर्मप्रधाना कर्मयोगिनामारुरुक्ष्ववस्था

'आरुरुक्षोर्मुनेर्योगं··················।' (६।३)

इत्यादिना प्राक्प्रतिपादिता,–इति द्विप्रकारः पर उपायः, सांख्येन योगेन च,–इति अपरः स्थूलभेदप्रतिपत्तेरनुमानात्। 'अन्ये' पुनर्द्विप्रकारेऽपि उपाये संप्रति योग्यताभावात् 'एवं' यथोक्तेन प्रकारेण आत्मानम् 'अजानन्तः' तावन्मात्रश्रुद्धादिगुणयोगात् 'अन्येभ्यो' दृष्टानुमितं तत आप्तेभ्यः 'श्रुत्वा' अवधार्य आगममात्रशरणास्तम् 'उपासते' भजन्ते। 'तेऽपि' तथाविधाः श्रद्धालक्षणस्य सिद्धिबीजस्य क्षेत्रीभूताः सन्तो 'मृत्युमतितरन्त्येव' अविनाशिनमात्मानं क्रमेण प्रतिपद्यन्ते सत्यार्थाभिनिवेशित्वात्। यतः सत्यमसत्यं च द्वयमपि संभवति। विद्यानुगृहीताः सत्यमभिनिविशन्ते, मायामोहितास्तु असत्यं; ते च तादृशमेव फलं प्राप्नुवन्ति। तथाच उक्तम्

'अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम्।
मृत्युमापद्यते मोहात् सत्यत्वेऽमृतमाहितम्॥'

इति॥ २४–२५॥

उक्तमेव अर्थं स्फुटतरं प्रतिपादयितुमा अध्यायपरिसमाप्तेराह–

यावत् संभवति किञ्चित् सत्त्वं स्थावरजङ्गमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ॥ २६॥

'यावत्' यत्परिमाणमपरिसंख्येयं 'किञ्चित् सत्त्वं' केनचिद्भेदेन युक्तं प्राणिजातं 'संभवति' विद्यते, 'तत्' सर्वं क्षेत्रस्य शरीरभावेन परिणतायाः प्रकृतेस्तथा क्षेत्रज्ञस्य नानाशरीरित्वाभिमानेन व्यवस्थितस्य आत्मनः संयोगादनादिप्रबन्धप्रवृत्तादन्योन्यसंबन्धात् हेतोः 'विद्धि' विजानीहि। किमुक्तं भवति।

अस्य अपर्यवसानस्य नानाचराचरभावरूपस्य प्रपञ्चस्य अविवेचितस्वरूपतया प्रकृतिपुरुषयोः शरीरशरीरिभावेन एकतया संबन्धो निमित्तम् । अतः शरीरशरीरिणोर्विवेक आद्यः प्रकारो यथाप्रतिपादितस्य ज्ञानस्य तेन शरीरभावपरिणतप्रकृतिविविक्तस्वरूपे सुविज्ञाते आत्मनि वेदकत्वमात्रैकलक्षणाव्यभिचारात् सर्वक्षेत्रज्ञप्रतिपत्तिभ्रमनिवृत्तेरिति ॥ २६ ॥

योगी परमात्मनः स्वाभाविकैक्यदर्शनात् सम्यग्दर्शी भवतीत्याह—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

'सर्वेषु' जङ्गमेषु स्थावरेषु च द्विप्रकारेषु अपि अवान्तरभेदादनन्तविशेषेषु अपि 'भूतेषु समं' जन्मादिविकाररहितत्वात् निर्विशेषं 'तिष्ठन्तं' परमार्थनित्यत्वात् सदा वर्तमानं 'परमेश्वरं' स्वतन्त्रं परमात्मानं यो योगी 'पश्यति' आत्मत्वेन प्रत्यवमर्शात् साक्षात्कुरुते, 'स पश्यति' तस्य एव सत्यार्थदर्शित्वात् पारमार्थिकं द्रष्टृत्वं तद्व्यतिरिक्तात्मनानात्वदर्शिनः सर्वे मिथ्यार्थदर्शिन इत्यर्थः । कीदृशेषु भूतेषु कीदृशं पश्यति । 'विनश्यत्सु' विनाशान्तजन्मादिविकारभागिषु 'अविनश्यन्तं' वेदकत्वमात्रादेकस्मात् स्वभावादप्रच्यवमानम् । स हि तथाविधो योगी समुन्मिषितेन यथोपवर्णितेन ज्ञानमयेन चक्षुषा प्रादुर्भावतिरोभावधर्मकसकलवेद्यांशविविक्तस्वरूपं वेदकैकलक्षणं परमात्मानं सर्वावस्थासु एकतत्त्वमात्मत्वेन साक्षात्कुर्वन् सम्यग्दर्शन उच्यते, अन्ये तु विपरीतदर्शना इत्यर्थः । स एवच आत्मवानिति ॥ २७ ॥

तत्र हेतुत्वमाह—

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥

यस्मात् यथोक्तेन प्रकारेण 'सर्वत्र' प्राकृतभावमयवेद्यवर्गे 'समं' सामान्यसंविद्रूपतया तुल्यं कृत्वा 'समवस्थितं' स्वभावत एव सम्यक्कृतप्रतिष्ठम् 'ईश्वरं' प्रभुं परमात्मानं 'पश्यन्' प्रत्यभिजानन् कश्चिदेव 'आत्मना' स्वयमेव 'आत्मानं' सत्यस्वभावं 'न हिनस्ति' अप्रत्यभिज्ञानेन सन्तमेव अभावं[1] न प्रापयति। किमुक्तं भवति । य एवंप्रतिपादितेन ज्ञानचक्षुषा क्षेत्रक्षेत्रज्ञविविक्तं परमात्मानं न पश्यति, स आत्मघातयुक्तो मुख्यया वृत्त्या। यथोक्तं

'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चौरेणात्मापहारिणा॥'

इति॥ २८॥

कश्च एवंविधं परमात्मस्वरूपं पश्यतीत्याह—

प्रकृत्यैव हि कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति॥ २९॥

प्रकृतिश्चेतनाचेतनविभागेन परापररूपा प्राक्प्रतिपादितद्विप्रकारा परमेश्वरेच्छावशादेव[2] क्षेत्रक्षेत्रज्ञभावेन अनादिना संबन्धेन संबद्धा सती सर्वमिदं जगच्चित्रं विरचयति। तथाच सप्तमेऽध्याये द्विप्रकारायाः प्रकृतेः स्वरूपं प्रतिपाद्य उक्तम्

'एतद्योनीनि भूतानि सर्वाणीत्युपधारय'। (७।६)

इति। अस्मिन्नपि अध्याये

'यावत् संभवति किञ्चित्……………।' (१३।२६)

इत्यादिना श्लोकेन एष एव अर्थोऽभिहितः। तदेवंरूपया 'प्रकृत्यैव' केवलया 'क्रियमाणानि' निर्वर्त्यमानानि नानाशरीरसंबद्धत्वेन अवभासमानानि कृत्स्नानि 'कर्माणि' विविधाः क्रियाः 'यः'

---

१ 'सन्तमेवाभासम्' क. २ 'शात् क्षेत्र' क.।

आत्मतत्त्वदर्शी 'पश्यति' सम्यक् निरूपयति, स तादृशो योगी 'तथा' तेन प्रकारेण 'आत्मानं' ब्रह्मस्वरूपं सत्यस्वभावं सर्वदा विशुद्धचिन्मात्रस्वरूपे स्वात्मनि एव सुप्रतिष्ठितं सन्तं 'अकर्तारं' परमार्थतः सर्वक्रियासु अव्यापृतत्वात् स्वरूपव्यतिरिक्तकार्यनिर्वृत्तिप्रयत्नरहितं 'पश्यति' । किमुक्तं भवति । यथा क्षेत्रज्ञस्य प्रकृत्यभेदाभिमानेन कर्तृत्वं, न तथा परमात्मनः । तस्य हि स्वरूपप्रत्यवमर्शमात्रे मुख्या कर्तृता, क्षेत्रज्ञस्य कर्तृतोद्भावनेन गौणी,–इति योऽयं कर्तृकार्यव्यपदेशः, स सर्वो भेदनिबन्धनः, भेदश्च मायामात्रविलसितो न वस्तुसत्तामवलम्बते । तत एकस्य तत्त्वस्य व्यतिरिक्तकार्यनिबन्धनं कर्तृत्वं न वास्तवमिति तात्पर्यम् ॥ २९ ॥

इत्थंच स्थिते प्रकृतिपुरुषविवेकज्ञानादनन्तरं वास्तवब्रह्मलक्षणैकतत्त्वविषये परं ज्ञानमाविर्भवतीति प्रतिपादयितुमाह—

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥

'तदा' तस्मिन् काले योगी 'ब्रह्म संपद्यते' यथोक्तपरमात्मनि परमार्थसत्ये एकस्मिंस्तत्त्वे समापत्तिमाप्नोति । कदा । 'यदा' यस्मिन् काले विवेकज्ञाननैर्मल्यात् सम्यक्प्रकाशमानसर्वगतैकक्षेत्रज्ञस्वरूपो योगी 'भूतपृथग्भावं' भूतानां चराचराणामनन्तभेदानां पृथग्भावमन्योन्यव्यतिरिक्तत्वम् 'एकस्थमनुपश्यति' एकस्मिन् परमात्मनि अभिन्नसंवित्प्रकाशमात्रे स्थितं तदात्मकत्वेन एव वर्तमानं साक्षात्करोति । किमनेन उक्तं भवति । प्रकाशपदवीजुषां सर्वभावानां प्रकाशमानतामात्राधीनात्मलाभानां वास्तवीं परप्रकाशैकरूपतां यदा अनुभवति योगी, यथाच सर्वमेकस्थं पश्यति,

१ 'आत्मनस्तत्त्व' क. ।

तथैव यदा 'तत एव' एकस्मात् तत्त्वात् 'विस्तारं' नानाभावमयं विभूतिवैतत्यं पश्यति, तदा ब्रह्म संपद्यते। अनेन अपि किमुक्तं भवति। विवेकजज्ञाननिष्णातनिर्मलमतिर्योगी यथा एकस्मिंस्तत्त्वे लीनं सर्वं भेदजातं तदभिन्नं पश्यति, तथैव तदेव एकं तत्त्वं विश्वभावभेदात्मना प्रसृतं तस्य सर्वात्मना भावनानात्वप्रतिपत्तिभ्रमो विगलतीत्यर्थः[1]। तथाच अयमेव अर्थः केनापि विपश्चिता अनूदितः

'यद्यत् पृथक्त्वसंदिग्धं तत्पृथक्त्वान्न भिद्यते।'

इति ॥ ३० ॥

तदेवंविधस्य परमात्मनो बहुशोऽपि उक्तं लक्षणं प्रसङ्गात पुनराह—

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥

'अयं' भगवान् 'परमात्मा' परं तत्त्वं स्वभावत एव सर्वत्र सर्वदा च अव्याहतसद्भावः, ततश्च सर्वस्मिन् शरीरे स्थितिरबाधिता एव। तथापिच तत्रस्थोऽपि प्रतिपादितैकस्वरूपमात्रे सुस्थितत्वात् 'न करोति' न भिन्नकार्यनिबन्धनं कर्तृत्वमनुभवति, ततश्च का कथा कर्मफलानुभवस्येति 'न लिप्यते'। यस्मात् 'अनादित्वात्' सर्वकारणत्वात्, अत एव 'निर्गुणत्वात्' गुणेभ्य उदयव्ययधर्मकेभ्यो निष्क्रान्तत्वात् तद्विविक्तस्वभावत्वात् 'अव्ययः' गुणवत् व्ययेन विनाशेन रहितः। यद्यपि अनादित्वमव्ययत्वं च क्षेत्रज्ञस्य अपि उक्तं, तथापि तस्य गुणमय्या प्रकृत्या संबद्धस्य तत्स्वरूपानुविधायित्वात् तत्तदुदयव्ययधर्मकत्वमुपचर्यते आ विद्योदयात्। परमात्मनस्तु उपचारोऽपि नास्ति। अतः क्षेत्रज्ञवत् न तस्य कर्तृत्वं, न कर्मफलसंयोग इति ॥ ३१ ॥

---

१ 'वीत्यर्थः' क. ख.

यथाच एतस्य सर्वशरीरस्थत्वेऽपि कर्मफलसंयोगलक्षणकलङ्कसंपर्काभावस्तथा उपमानेन दर्शयितुमाह—

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥**

'यथा सौक्ष्म्यात्' अणीयस्त्वात् 'सर्वगतं' समस्तवस्तुव्यापकं देशकालाद्यनवच्छिन्नमाहात्म्यम् 'आकाशम्' अवच्छिन्नैर्व्याप्यैर्भावैः 'न उपलिप्यते' स्वधर्मेण न संयोज्यते, 'तथा' एव 'सर्वत्र' सर्वस्मिन् सुरनरतिर्यगाद्यनन्तभेदेऽपि 'देहे' शरीरे व्यापकतया 'अवस्थितः'[1] नित्यसंनिहितोऽपि अयं परमात्मा तद्धर्मैः सुखदुःखादिभिरुत्पादविनाशादिभिर्वा कर्मफलसंबन्धित्वाभिमानजन्मभिः 'नोपलिप्यते' न संस्पृश्यते । तथाच उक्तं ब्रह्मविदा केनचित्

'यथैकस्मिन्घटाकाशे रजोधूमादिभिर्वृते ।
संयुज्यन्ते न सर्वाणि तथा जीवाः सुखादिभिः ॥'

इति ॥ ३२ ॥

एवं सर्वात्मना कर्मफलसंपर्काभावेऽपि अनन्यसाधारणप्रकाशकत्वधर्मयोगात्[2] स एव एकः क्षेत्रक्षेत्रज्ञव्यवहारप्रकाशक इत्युपमानान्तरेण दर्शयितुमाह—

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

'यथा' येन प्रकारेण अयं सकललोकप्रत्यक्षपरिदृश्यस्वभावो भगवान् भास्करः 'कृत्स्नम्' अखिलं 'लोकं' नानाभावमयं विश्वम् 'एक एव' असहायः 'प्रकाशयति' स्वस्वरूपं लम्भयति, तेन एव प्रकारेण अयं 'क्षेत्री' सर्वक्षेत्रज्ञव्यापक 'एकः' पर-

१ 'व्यवस्थितः' ख. । २ 'कधर्म' क. ।

मात्मा 'क्षेत्रं प्रकाशयति' इति। किमुक्तं भवति। प्रकाश्यवस्तुनानात्वात् प्रकाशस्य परमात्मधर्मस्य यदि परं नानात्वोपचारः परमार्थतस्तु एक एव सकलप्रकाश्यवस्तुप्रकाशकः। प्रकाशकत्वमात्रे च उपमानोपमेयभावो रविक्षेत्रिणोः। यथा हि रविर्भावानां प्रकाशको, न तथा च क्षेत्री। तथाहि कुतश्चित् कारणात् लब्धात्मनां घटगवादीनामर्थानामभिव्यञ्जकत्वमात्रेण रविः प्रकाशको न जनकत्वेन, क्षेत्री तु प्रकाश्यत्वापादनेन एव तान् जनयति, अतो जनकत्वं तस्य,—इति प्राक् प्रतिपादितमेव ॥ ३३ ॥

तदित्थंरूपमध्यायेन क्षेत्रक्षेत्रज्ञपरमात्मलक्षणतत्त्वत्रयनिर्णयमुपसंहरन्नाह—

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

'ये' योगिनः 'एवं' उक्तेन प्रकारेण क्षेत्रस्य शरीरभावेन परिणताया अपरायाः प्रकृतेः, तथा क्षेत्रज्ञस्य नानाक्षेत्राहङ्कारावष्टम्भेन अवस्थिताया जीवरूपायाः परायाः प्रकृतेः 'अन्तरं' विशेषं परस्परविविक्तं स्वरूपं 'विदुः' जानते। केन। अमानित्वादिना तत्त्वदर्शनपर्यन्तेन ज्ञानेन एव चक्षुषा। न केवलं तयोरन्तरं जानते, यावत् 'भूतप्रकृतिमोक्षं' च ये जानते। भूतात्मिका या इयं प्रकृतिः स्थूला निर्दिष्टा, ततो मोक्षं पुनस्तत्र प्रवेशाभावादात्यन्तिकं बन्धत्यागं ये विदन्ति। किमुक्तं भवति। क्षेत्रक्षेत्रज्ञयोः परस्परविविक्तस्वरूपावगममात्रमागमोपपत्तिपरिशीलनद्वारेण कदाचित् संभवति, नतु तावता प्रकृतेर्मोक्षः प्रभवति, स हि तद्विविक्तात्मस्वरूपनित्यावहितत्वेन एव भवति। ततः पृथगुक्तं 'भूतप्रकृतिमोक्षं' च इति। 'ते' एवंविधाः 'परं'

निरुत्तरं तत्त्वं सप्तमे परतरप्रकृतित्वेन प्रतिपादितं परमात्मानं 'यान्ति' प्रतिपद्यन्ते तदभेदलक्षणां परां सिद्धिमधिगच्छन्ति,—इत्योम् ॥ ३४ ॥

भविभिरखिलैर्नित्यं तापत्रयीपरिशोषितात्
परमविरसात् क्षेत्राद्भोगो यतः किल भुज्यते ।
चिदमृतघनात् तद्बोऽध्यायात् त्रयोदशतः स्तुतै-
र्वचनपृषतैः सिक्तं सूतां विमुक्तिफलश्रियम् ॥

इति श्रीमद्राजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे त्रयोदशोऽध्यायः ॥ १३ ॥

---

# अथ चतुर्दशोऽध्यायः ।

त्रयोदशाध्यायपरिसमाप्तौ

'भूतप्रकृतिमोक्षं च ये विदुः……… ।' (१३।३४)

इति यदुक्तं, तत्र भूतादिविकारभावमापन्ना प्रकृतिः किल भूतप्रकृतिशब्देन उक्ता, ततश्च तस्याः कारणभूतं प्रकृत्यात्मकं तत्त्वमस्ति,–इत्यभ्युपगतं भवति । तदभ्युपगमे च परब्रह्माद्वैतसिद्धान्तता शास्त्रस्य अस्य विरुद्ध्यते । इह हि नित्यैकचित्प्रकाशात्मकस्वभावपरामर्शप्रभवपरानन्दलक्षणं सत् तादृक्स्वभावसुव्यवस्थितमात्मतत्त्वं परब्रह्मशब्दाभिधेयमेकमेव परमार्थसत्त्वेन आगमोपपत्त्युपलब्ध्यविसंवादि सिद्धं प्रबन्धतः प्रतिपादितं, यस्य

'अनादिमत्परं ब्रह्म……………… ।' (१३।१२)

इत्यादिना लक्षणं कृतम् । ततश्च प्रकृतिर्नाम द्वितीयं तत्त्वमस्तित्वेन कथं सिद्ध्यति, किंवा तस्य स्वरूपं, कीदृशो वा परब्रह्मस्वरूपेण तत्त्वेन तस्य संबन्धः इति येन ज्ञायते । तथा भूतप्रकृतिर्द्विविधा उक्ता शरीरात्मना विषयात्मना च परिणामात्, ततः कथमात्मनो मोक्षः, किमत्यन्तपरिहारेण अन्यथा वा । तत्र आद्यपरिहारस्तावदिह न अभ्युपगतः । तथाच उक्तम्

'अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥' (१३।३१)

तथा

'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।' (५।१४)

इत्यादि । अनेन शरीरभावपरिणतायाः प्रकृतेरत्यन्तपरिहारेण मोक्षो न अभ्युपगतः । तथा विषयभावेन परिणताया अपि न

अत्यन्तपरिहारोऽभिमतः । तदुक्तं

'रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥' ( २।६४ )

तथा

'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥' ( ३।२५ )

इत्यादि च । एवं कथं विषयरूपायाः प्रकृतेर्मोक्ष इति येन ज्ञायते, तदुभयार्थविषयज्ञानं सूक्ष्मत्वात् प्रकृष्टं तत्र तत्र प्रागुक्तमपि पुनर्वक्तुं प्रतिजानंस्तत्प्रशंसापूर्वं भगवानुवाच—

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

उक्तेन रूपेण 'परं' प्रकृष्टं 'भूयः' पुनर्बहुतरं वा 'ज्ञानानां' क्षेत्रज्ञादिविषयाणां मध्ये 'उत्तमं' प्रधानं 'ज्ञानं' प्रकर्षेण कथयिष्यामि । वक्ष्यमाणेन ज्ञानेन पूर्वोक्तानां ज्ञानानां सम्यक्प्रतिपत्तिर्भविष्यतीति तेषां मध्ये तस्य उत्तमत्वम् । अत एव आह 'यत्' विदित्वा पूर्वे 'मुनयः' संयमिनः 'सर्वे' एव 'परां सिद्धिं' परसमापत्तिलक्षणां प्रकृष्टां फलनिष्पत्तिं 'इतः' संसारात् प्राप्ताः ॥१॥

यतोऽस्य ज्ञानस्य अयं प्रभावः—

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

'इदं' वक्ष्यमाणं ज्ञानम् 'उपाश्रित्य' सुगृहीतं कृत्वा अन्येऽपि योगिनो 'मम साधर्म्यं' मद्भावाभेदं प्राप्ताः सन्तः एतज्ज्ञानशून्यक्षेत्रज्ञान्तरवत् सर्गप्रलययोरपि न उत्पादविनाशव्यपदेशभाजो भवन्ति पारमार्थिकनित्यत्वाभिव्यक्तेरिति ॥ २ ॥

अथ एतज्ज्ञानं वक्तुमाह—

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

यदेतत् भूतप्रकृतिकारणभावेन व्यवस्थितं तत्त्वं परब्रह्मणो भिन्नत्वेन आशङ्कितं, तत् तस्मात् परमार्थतो न भिन्नं, ब्रह्मैव तत्; किन्तु 'महत्' तदपेक्षया स्थूलं यतो वेद्यतया परामृश्यमानम् । 'मम' परब्रह्मस्वरूपस्य जगद्भावक्रीडनकोत्पादनाधिकरणत्वात्[1] 'योनिः' तत् । 'तस्मिन्' परमार्थतो हि योनिभूते महति ब्रह्मणि 'अहं गर्भं दधामि' संविल्लक्षणस्ववीर्यसंक्रान्तिं करोमीत्यर्थः । किमनेन उक्तं भवति । यथोक्तलक्षणपरब्रह्मस्वरूपं परामृशन् प्रकृतिलक्षणं तत्त्वमवभासयामि । तस्य इदन्तायामपि चित्प्रकाशानुप्रवेशं विना प्रकाशमानत्वाभावात् ब्रह्मस्वरूपत्वं, व्यवच्छिन्नवेद्यस्वरूपत्वात्तु स्थूलत्वमिति सकलजगद्भावभेदैकहेतुभूतेदन्तात्मकं महद्ब्रह्म मम जगत्सिसृक्षारसिकस्य योनिस्थानीयम् । अत एव आह 'सर्वभूतानां' चराचराणां समस्तानां प्राणभृतां 'ततः' तस्मादिदन्तया परामृश्यमानात् स्वभावादेव 'संभवः' उत्पत्तिः । तदेतदत्यद्भुतरूपत्वं पारमेश्वर्या मायाशक्तेः सुप्रबुद्धात्रसेयपरमार्थमनेन प्रतिपादितं यत् मनागपि स्वरूपप्रच्युत्यभावे सति इत्थं नानाजगद्भावप्रपञ्चरूपतया अवभासमानत्वम् । एतच्च एवंविधमाश्चर्यरूपत्वं गर्भीकृत्य स्वरूपं प्राक् प्रतिपादितं

'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥' ( ७।१४ )

इति ॥ ३ ॥

---

१ 'नादिकारण' ख. ।

अथ लौकिकार्थरूपणगर्भीकारेण योन्यादिशब्दप्रयोगोऽत्र यः कृतः, तमेव स्फुटीकर्तुमाह—

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

'सर्वयोनिषु' समस्तेषु भावाभिव्यक्त्यधिकरणभूतेषु क्षेत्रेषु स्त्र्याद्याश्रितेषु 'या मूर्तयो' जरायुजत्वादिचतुरुत्पत्तिप्रकारैश्चतुर्विधसंस्थानभेदेन आकृतयो भूतानां 'संभवन्ति' उत्पद्यन्ते, 'तासां' सर्वासां यथाप्रतिपादितस्वरूपं 'महद्ब्रह्म' इदन्तासामान्यलक्षणं प्रकृत्यात्मकं 'योनिः' मुख्यमभिव्यक्त्यधिकरणं, तस्यां च योनौ संविल्लक्षणस्य बीजस्य स्ववीर्यस्य प्रदानात् 'अहं पिता'। यथा कश्चिद्ब्राह्मणादिः पुरुषो भार्यात्वेन परिगृहीते वनिताक्षेत्रे सन्तानोत्पादनाय वीर्यमवसृजन् गर्भमाधत्ते, नच रूपान्तरमासादयति, एवमहं स्वरूपादप्रच्युत एव यथोक्ते महति ब्रह्मणि जगद्भावहेतुं संविल्लक्षणं बीजमवसृजामि,—इति । स्वरूपाप्रच्युतिमात्रे पितृत्वेन आत्मनोऽधिकरणमात्रत्वेन योनित्वेन स्थूलस्य ब्रह्मणो रूपणं नानाभावहेतुत्वे बीजत्वेन चिदंशस्य निरूपणमिति । यथाहि अधिकरणभूतां योनिमन्तरेण सन्तानाभिव्यक्त्यभावः पुरुषवीर्यस्य, एवमिदन्तापरामर्शमात्रस्वरूपस्थूलब्रह्मात्मकप्रकृतिमन्तरेण सिसृक्षोः परमेश्वरस्य जगद्भावक्रीडनकोद्भवाभावश्चिल्लक्षणस्य वीर्यस्येत्यर्थः ॥ ४ ॥

एवमिदमिति परामृश्यमानं स्वरूपमेव प्रकृतिः, न वस्त्वन्तरं किञ्चित्; तस्या अपरस्य ब्रह्मणः प्रकाश्यप्रकाशकभावलक्षणः संबन्धः, स च प्रकाशाद्वैतं विना न घटते प्रकाश्यस्य प्रकाशरूपतामन्तरेण तथा स्वरूपलाभाभावादिति प्रकृतिविषयं तावत्

---

१ 'रूपेण' ख. । २ 'रूपणं' क. । ३. 'तस्य' क.

ज्ञानमुक्तम् । इदानीमेवंच लब्धजन्मनस्तस्याः शरीरादिभावेन व्यवस्थितभूतादिविकाररूपायाः कथं निर्मोक्ष इति अभेदार्थविषयं ज्ञानं निर्णीयते। तत्र या एषा प्रतिपादितस्वरूपा प्रकृतिः, सा शरीर-विषयभावेन आभासमानैः स्वविकारैः प्रकृत्यादिभिश्च देहिनं बध्नाति येन तत्परिहारादेव ततो निर्मोक्षः स्यात्। किन्तु यैः प्रकारैस्ते संवेद्यतामापद्यन्ते, ते प्रकारा देहिनमहङ्कारममकाराभ्यां निबध्नन्ति, ततस्तेभ्यो निर्मोक्षो भूतप्रकृतिनिर्मोक्षो भवतीति क्रमेण प्रतिपादयितुमाह—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

परमार्थतो नित्यत्वात् 'अव्ययं' विनाशरहितमतश्च जन्म-रहितमपि 'देहिनम्' आत्मानं यथोक्तप्रकृतिसमुत्था 'गुणाः' सत्त्वाद्यभिधाना वक्ष्यमाणस्वरूपा वक्ष्यमाणेन प्रकारेण 'निब-ध्नन्ति' विनाशोत्पादकदेहाहङ्कारारोपणतद्धर्मानुविधायित्वादस्व-तन्त्रीकुर्वन्ति ॥ ५ ॥

कथमिति तेषां बन्धकत्वेन विभागमाह—

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥

'तत्र' तेषां मध्ये 'सत्त्वं' नाम गुणो 'ज्ञानसङ्गेन बध्नाति' नियतविषयं नियतकरणाधीनं यत् ज्ञानं, तत्र यः सङ्गः 'इदमहं जानामि' इत्यभिमानेन आसक्तिस्तल्लीनत्वं तेन परतन्त्रीकरोति। तथा 'सुखसङ्गेन बध्नाति' सुखं तत्तदभीष्टविषयप्राप्त्या विषया-न्तराकाङ्क्षानिवृत्तिपर्यवसायिनी निर्वृतिः, तत्र सङ्गः सुखितोऽहं सुखं ममास्तीति वा अहङ्कारममकारावष्टम्भेन तल्लीनत्वं; तेन परतन्त्रीकरोति। कुतः। यतः एवंस्वभावं 'सत्त्वं' तत् 'निर्मलत्वात्'

आवरकतमोलक्षणमलविविक्तस्वरूपत्वात् 'प्रकाशकं' विषयप्रथा-कारणमतो ज्ञानसङ्गेन बध्नाति 'अनामयं' रजोविविक्तत्वात् प्रवृत्तिदुःखात्मकेन आमयेन रहितमतः सुखसङ्गेन बध्नाति सूक्ष्मत्वात्। ज्ञानसङ्गः पूर्वं व्याख्यातः ॥ ६ ॥

तथा—

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

रजःसंज्ञं गुणं 'रागात्मकं' सुखाभिलाषरूपं जानीहि। अत एव 'तृष्णासङ्गसमुद्भवम्' अनादिप्रबन्धप्रवृत्तत्वात् तृष्णा विषयरसपिपासा, तत्र सङ्गस्तदेकलीनत्वं ततः समुद्भवो जन्म यस्य, तत् तादृशं जानीहि। 'तत्' एवंस्वभावं 'रजः कर्मसङ्गेन' क्षेत्रज्ञं 'निबध्नाति' कर्मरागप्रयुक्तस्य इष्टविषयाहरणानिष्टविषयपरिहारेण प्रवृत्तिस्तत्र सङ्गस्तत्परत्वं, तेन नियतकार्यकर्तृताभिमानरूपेण परवशीकरोति ॥ ७ ॥

तथा—

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

तमोलक्षणं पुनर्गुणम् 'अज्ञानजं' प्रकाशस्वभावसत्त्वगुणप्रविविक्तत्वात् ज्ञानाभावप्रभवं, ततश्च[1] सर्वशरीरिणां 'मोहनं' ज्ञेयविषयाप्रतिपत्तिजननं जानीहि। 'तत्' तथाविधं 'तमः' प्रमादेन उपायोपेयविवेकनिरपेक्षत्वेन, तथा आलस्येन प्रवृत्त्यात्मकरजोविविक्तरूपत्वात् कार्येषु अनुद्योगेन, तथा निद्रया मोहनरूपेण सर्वेन्द्रियशक्तिविरामेण देहिनं 'निबध्नाति' नियच्छति,—इति गुणत्रयस्य स्वरूपं बन्धप्रकारश्च प्रतिपादितः ॥ ८ ॥

१ 'यतः' क.।

इदानीं यस्मिन् स्वकार्ये सति यस्य गुणस्य उत्कर्षो भवति, तथा तत्स्वरूपं प्रतिपादयितुमाह—

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥

सुखलक्षणे सत्त्वगुणकार्ये सति 'सत्त्वं सञ्जयति' सम्यगतिशयं लभते । एवं रजोगुणकार्ये 'कर्मणि रजः सञ्जयति' । तथा 'प्रमादे' पूर्वोक्तलक्षणे सति 'तमः सञ्जयति' । किं कृत्वा ! 'ज्ञानं' विषयावगमम् 'आवृत्य' तिरस्कृत्य ॥ ९ ॥

अथ एषामन्योन्याभिभववृत्तित्वं प्रतिपादयितुमाह—

रजस्तमश्चाभिभूय सत्त्वं भारत वर्धते ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

रजस्तमसी 'अभिभूय' न्यक्कृत्य सत्त्वगुणो 'वर्धते' । किमुक्तं भवति । यदा सत्त्वं विवृद्धं बलवत् भवति, न तदा तदितरो गुणः स्वकार्यमारभते । एवं तमःसत्त्वे अभिभूय रजोगुणो वर्धते । तथा रजःसत्त्वे अभिभूय तमोगुणो वर्धते ॥ १० ॥

अथ एषां गुणानां विवृद्धत्वव्यञ्जनानि लिङ्गान्याह—

सर्वद्वारेषु देहेऽस्मिन्प्रकाशमुपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥
लोभः प्रवृत्तिरारम्भः कर्मणामशमश्च तृट् ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

'अस्मिन्' शरीरे 'यदा' यस्मिन् क्षणे 'सर्वद्वारेषु' श्रोत्रादिषु 'प्रकाशं' स्फुटमसन्दिग्धं कृत्वा 'ज्ञानं' शब्दादिविषयसंवेदनमुत्पद्यते; 'तदा' सत्त्वगुणमभिभूतरजस्तमस्कत्वात् 'विवृद्धम्' उप-

चितम्,—इति जानीयात्। तथा 'रजसि' प्रवृद्धे अभिभूतसत्त्वतमस्कत्वादुपचिते सति 'एतानि' लिङ्गानि उत्पद्यन्ते। तद्यथा 'लोभः' इष्टविषये प्राप्तेऽपि नैव निवृत्तिः, तदाहरणार्थं 'प्रवृत्तिः' उन्मुखीभावः। ततश्च अनन्तरं 'आरम्भः' क्रिया तदाहरणव्यापार इत्यर्थः। तथा प्राप्तेऽपि कस्मिंश्चिद्विषये विषयान्तरविषयाणां 'क्रियाणाम्' 'अशमः' शान्त्यभावः। तथा 'तृट्' तृष्णाभिलाषो राग इत्यर्थः। तथा 'तमसि विवृद्धे' सत्त्वरजोऽभिभवात् लब्धबले सति 'एतानि' लिङ्गानि 'जायन्ते'। तद्यथा 'अप्रकाशः' सत्त्वगुणाभिभवात् प्रकाशाभावो विषयासंवेदनम्। तथा रजोगुणाभिभवात् 'अप्रवृत्तिः' क्रियाभावः। ततश्च स्वयं विवृद्धत्वात् प्रमादमोहावुक्तलक्षणाविति ॥ ११—१३ ॥

अथ एषां वृद्धौ सत्यां प्राणप्रयाणे सति विशिष्टलोकान्तरप्राप्तिनिर्देशेन बन्धहेतुत्वमेव प्रतिपादयितुमाह—

यदा सत्त्वे विवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

'यदा' यस्मिन् काले सत्त्वगुणे 'विवृद्धे' बलवति सति 'देहभृत्' शरीरी 'प्रलयं याति' विनाशव्यपदेशं लभते, 'तदा उत्तमविदां' प्रकृष्टज्ञानानां देवादीनां संबन्धिनो 'लोकान्' भुवनानि सत्त्वगुणमयत्वात् 'अमलान्' विशुद्धान् प्राप्नोति तत्र जातव्यपदेशं लभते। तथा 'रजसि' प्रवृद्धे सति 'प्रलीनः' सन् 'कर्मसङ्गिषु' रजोगुणप्रधानत्वात् तत्तत्क्रियाविशेषपरेषु मर्त्येषु 'जायते'। तथैव 'तमसि' प्रवृद्धे प्रलीनः सन् 'मूढयोनिषु' तिर्यक्स्थावरादिषु तमःप्रधानेषु जायते इति ॥ १४,१५ ॥

प्रयाणसमये सत्त्वादिगुणवृद्धौ फलनिर्देशार्थमाह—

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

'सुकृतस्य' सत्त्वविवृद्धौ सत्यां यथाशास्त्रं सम्यगनुष्ठितस्य 'कर्मणः' यज्ञादेः क्रियाविशेषस्य 'सात्त्विकं' सत्त्वगुणादागतं 'निर्मलं' विशुद्धं विशिष्टज्ञानसुखस्वरूपं 'फलं' भवतीति शेषः । 'रजसस्तु' रजोविवृद्धौ सत्यां 'दुःखं फलं' संशयादिदुष्टचित्तत्वात्, श्रद्धादिगुणविशुद्ध्यभावे यत् कर्म क्रियते, तत् प्रवृत्तिलक्षणं दुःखमेव फलतीत्यर्थः । एवमेव 'तमसो' विवृद्धौ सत्यां कृतस्य 'कर्मणो' मोहादिदुष्टचित्तत्वात् शास्त्रविधिवैपरीत्येन प्रयुक्तस्य कर्मणः 'अज्ञानं' मोह एव 'फलम्' ॥ १६ ॥

संग्रहेण एतदेव आह—

सत्त्वात् संजायते ज्ञानं रजसो लोभ एवच ।
प्रमादमोहौ जायेते तमसोऽज्ञानमेवच ॥ १७ ॥

स्पष्टार्थः श्लोकः । एतस्य सत्त्वादीनां गुणानां पृथक्स्वरूपसमुदायाचारफलादिभेदप्रपञ्चप्रतिपादनस्य सर्वास्ववस्थासु तेषां वेद्यैकस्वरूपताप्रतिपादनतात्पर्यं[1] वेदितव्यमिति ॥ १७ ॥

अस्य च प्रयोजनमाह—

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

स्पष्टार्थौ श्लोकौ ॥ १८,१९ ॥

---

१ 'दनं' क. ।

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

शरीरविषयादिभावेन परिणताः सर्वे प्रकृतिविकाररूपा भावा देहसमुद्भवाः, सति हि देहे शरीरविषयात्मकत्वेन समुद्भवन्तीति तदात्मनैव उपलभ्यतामभिप्रपद्यन्ते । तत् 'एतान्' प्रतिपादितस्वरूपान् 'त्रीन्' सत्त्वादीन् 'गुणान्'वेदकैकस्वभावात् स्वात्मनो व्यतिरेचनेन 'अतीत्य' निस्तीर्य 'देही' क्षेत्रज्ञस्तद्व्यतिरेचनादेव शरीरादितो निवृत्ताहङ्कारममकाराभिमानत्वात् शुद्धचिन्मात्रस्वभाव एव प्रतिष्ठिततात्त्विकाहङ्कारो गुणमयशरीरादिभावप्रतिबद्धैः 'जन्ममृत्युजरादुःखैः' उत्पादविनाशपरिणामक्लेशैः 'विमुक्तो' विवर्जितः सन् 'अमृतं' परं ब्रह्म परमात्मानं 'अश्नुते' प्राप्नोति तदभेदं गच्छतीत्यर्थः । किमनेन उक्तं भवति । गुणेभ्यः प्रतिपादितस्वरूपेभ्य आत्मनः स्वाभाविकविविक्तत्वभावना भूतप्रकृतेर्मोक्षो, नतु शरीरविषयादिरूपायास्तस्याः परिहारमात्रं मोक्ष इति ॥२०॥

अथ गुणातीतस्वरूपं विशेषतो जिज्ञासुरर्जुन उवाच—

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥

'कैर्लिङ्गैः' अभिव्यञ्जकैर्लक्षणैः 'एतान्' उक्तरूपान् 'गुणानतीतो भवति' तेभ्यो विमुक्तः संपद्यते । यश्च गुणातीतः, स 'किमाचारः' किं तस्य चेष्टितमित्यर्थः । केन च प्रकारेण 'एतानतिवर्तते' व्यतिक्रामति गुणातीतत्वप्राप्तिहेतुः को विधिरिति ॥२१॥

प्रश्नत्रयनिर्णयार्थमुत्तरं भगवानुवाच—

प्रकाशं च प्रवृत्तिं च मोहमेवच पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

---

१ 'तथा' ख. ।

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येवं यो ज्ञस्तिष्ठति नेङ्गते ॥ २३ ॥
समदुःखसुखस्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥
मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भफलत्यागी[1] गुणातीतः स उच्यते ॥ २५ ॥

'स' एवंविधः श्लोकचतुष्टयप्रतिपाद्यविशेषणविशिष्टो 'गुणातीतः उच्यते' इति संबन्धः । कोऽसौ । य एतानि वस्तूनि 'संप्रवृत्तानि' सम्यगभिव्यक्तानि सन्ति 'न द्वेष्टि' समाधिविपर्ययत्वात् तेषु अप्रीतिं न भजते इत्यर्थः । तथा 'निवृत्तानि' अलब्धवृत्तय एव एते भवन्तु,–इति न प्रार्थयते इत्यर्थः । कानि तानीत्याह 'प्रकाशं' सत्त्वगुणस्य विवृद्ध्यभिव्यञ्जकं ज्ञानादिरूपं लिङ्गं, तथा 'प्रवृत्तिं' रजोगुणस्य तथाविधं क्रियात्मकं लिङ्गं, तथा 'मोहं' तमोगुणस्य तादृशमेव अज्ञानात्मकं लिङ्गमिति । एतेषु सत्त्वादिगुणवृद्धिचिह्नभूतेषु वस्तुषु प्रवृत्तिहेतुषु निवृत्तिहेतुषु वा नित्यनिर्विकारस्वरूपप्रतिष्ठत्वात्[2] यो रागद्वेषाभ्यां मनागपि न आव्रियते, स गुणातीत उच्यते इति । एतन्मुख्यं गुणातीतसत्तालिङ्गम् । एतच्च गुणातीतलक्षणमुक्तं वक्ष्यमाणं च द्वितीये स्थिरप्रज्ञत्वलक्षणकथनप्रसङ्गेन प्रतिपादितमिहापि अनुवर्तनीयम् । ननु प्रवृत्तिमोहौ प्रवृत्तौ सन्तौ रजस्तमोविवृद्धिलिङ्गभूतावप्रकाशत्वात् द्वेष्यौ भवतां नाम योगिनः, प्रकाशस्तु सत्त्वविवृद्धिलिङ्गभूतः प्रवृत्तः सन् कस्य द्वेष्यो भवेत् येन उक्तं 'प्रकाशं च प्रवृत्तिं यो न द्वेष्टि स गुणातीतः' इति । अत्र उच्यते–इह अभ्यासयोगिनो रजस्तमोलिङ्गवत् सत्त्वलिङ्गमपि प्रकाशात्मकं प्रवृत्तं निषेध्यत्वात्

१ 'परित्यागी' क. । २ 'रूपं' ख. पाठः ।

द्वेष्यं भवति । तथा च पातञ्जले चितिशक्तिस्वरूपमुक्त्वा

'सत्त्वगुणात्मिका चेयमतोऽविपरीता[1] विवेकख्यातिरित्यतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि ।'

इति उक्तम् । कर्मयोगिनस्तु गुणातीतदशाधिरूढस्य विशेषोऽयमुक्तः—यत्प्रकाशमपि प्रवृत्तं न द्वेष्टि, नच तस्य निवृत्तिमभिकाङ्क्षति । तथाहि सति द्वेषरागानुषङ्गात् गुणातीतता न घटते । तेन विशुद्धस्वभावाप्रच्युतसंविदः प्रकाशादीनि प्रवृत्तानि निवृत्तानि वा हेयतया उपादेयतया वा यस्य द्वेषरागौ न उद्भावयतः, स गुणातीत उच्यते; तदेतत् गुणातीतलिङ्गमित्यर्थः । तस्य लिङ्गान्तरमाह 'उदासीनवदासीनः' इत्यादि । 'यो गुणैः' प्रवृत्तैर्निवृत्तैर्वा 'न विचाल्यते' स्वरूपात् न प्रच्याव्यते, स गुणातीत—इतिस्वरूपः । कुतो न विचाल्यते इति हेतुगर्भं विशेषणमाह 'उदासीनवदासीन' इति यः परस्य सुखं दुःखं वा प्रवर्तमानं तेन अमिश्रीभूतचित्तत्वात् स्वस्थो निर्विकारस्तटस्थ एव पश्यति, स उदासीन इति उच्यते । तेन तुल्यः स एव प्रकाशादिप्रवृत्तिनिवृत्त्योः परकीययोरिव निर्विकार एव आसीनः स्वरूपविश्रान्तः । अत एवं[2] 'गुणा वर्तन्ते' प्रवृत्तिमनुभवन्तीति । एतावति 'यो ज्ञो' बोद्धा सन् 'तिष्ठति' स्वस्थितिं भजते, अत एव 'नेङ्गते' न स्वरूपात् चलति, स गुणातीत उच्यते तदस्य लिङ्गमित्यर्थः । एतेन कैर्लिङ्गैर्गुणातीतो भवतीत्यत्र उत्तरमुक्तम् । किमाचार इत्यत्र उत्तरमाह 'समदुःखसुख' इत्यादि । दुःखसुखस्वप्ना इति रजःसत्त्वतमोवृत्तय उक्ताः । समा अविशेषेण निरूप्यमाणत्वात् तुल्यास्ते यस्य स तथोक्तः । न सुखे प्रीयते, न दुःखं द्वेष्टि, न स्वप्ने[3] मुह्यतीत्येवंविधस्तस्य समाचारः । 'तुल्यो मित्रारिपक्षयोः'

१ 'विवेकविपरीतख्याति' ख. । २ 'एव ये' ख. । ३ 'सुखे' ख. पाठः ।

इत्येतदन्तमनयैव दिशा किमाचार इत्यस्य उत्तरमेतत् । कथंच एतान् गुणानतिवर्तते इत्यत्र उत्तरमाह 'सर्व' इत्यादि सर्वेषामारम्भाणां यज्ञतपोदानादिक्रियाविषयाणामुद्यमानां निरतिशयनिजानन्दनिर्भरनिर्भयस्वात्मोपासाप्रवणत्वात् फलस्य स्वर्गादिभोगप्राप्तिलक्षणस्य त्यागी निरभिसन्धानत्वात् वर्जयिता ज्ञाननिष्ठत्वेन फलाभिसन्धिशून्यतया शास्त्रोक्तस्वकर्मानुष्ठानलक्षणो विधिर्गुणातीतत्वप्राप्तिहेतुरित्यर्थः ॥ २२–२५ ॥

गुणातीतत्वप्राप्तिहेतुं परं विधिमाह–

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥

'यः' च यथोक्तस्वरूपं 'मामव्यभिचारेण' मद्व्यतिरिक्तविषयान्तरालम्बनव्यभिचाररहितेन 'भक्तियोगेन' प्राक्प्रतिपादितचतुष्प्रकारेण भक्तिरूपेण समाधिना 'सेवते' आर्तत्वादिज्ञानित्वपर्यन्तावस्थासमुचितविधिपूर्वमुपास्ते, 'स' परां काष्ठां प्राप्तः सन् 'एतान्' यथोक्तान् गुणान् 'समतीत्य' अतिक्रम्य 'ब्रह्मभूयाय' ब्रह्मभावाय 'कल्पते' यथोक्तस्वरूपं ब्रह्मैव संपद्यते इति इदानीमेव उपायान्तरदुस्तरात् द्वैतमोहमहासागरादुत्तीर्णो भवतीत्यर्थः । यतो यथोक्तेन क्रमेण प्रत्यभिज्ञाताद्वयचिन्मात्रस्वरूपपरब्रह्मरूपे मयि परमात्मनि सुविश्रान्तसंविदो योगिनो नतु गुणरूपं किञ्चित् व्यतिरिक्तं पदार्थान्तरमवशिष्यते । यस्मात् यथाप्रतिपादितं तात्त्विकं मत्स्वरूपमेव अचिन्त्यमन्मायामहिम्नैव इदन्तया परामृश्यमानं यथा प्रकृत्याख्यभावस्वरूपतामापत्स्यते, तथैव तात्त्विका मद्धर्मा अमी अपरामृश्यमानाः सत्त्वादिगुणव्यपदेशभाजो भवन्ति । तथाच प्रकाशो नाम मद्धर्मो व्यतिरिक्तप्रका-

१ 'निभव' ख. । २ 'तीततत्त्व' ख. ।

श्यानपेक्षनित्योदितचिदात्मकज्योतिरूपः, स व्यतिरिक्तपरिमितप्रकाश्यनिष्ठतया तत्स्वरूपानुविधायित्वात् परिमितत्वमिव आपन्नः सत्त्वगुणव्यपदेशं लभते। एवं स्वरूपानुभवमात्रलक्षणक्रियात्मापि मद्धर्मः, स व्यतिरिक्तपरिमितप्रकाश्यनिष्ठतया रजोगुणव्यपदेशं लभते। तथा देशकालाद्यनवच्छिन्नमहिम्नि स्वाभाविकी नित्या या स्थितिः, सैव भिन्नाश्रयनिष्ठतया नियमात्मकतमोगुणव्यपदेशं लभते। एवं परामर्शवैचित्र्यात् भावनामात्रव्यापारो मायाशक्तिः प्रकृतिगुणादिभावविकल्पात्मकमत्यद्भुतमिदं त्रैलोक्यालेख्यमुल्लिखन्ती सर्वदेहिनो मोहयति। सैव यदा भक्तिरूपेण विजृम्भमाणया विद्याशक्त्या तिरस्कृता भवति, तदा पारमार्थिकं ब्रह्मैव एकं तत्त्वमवशिष्यते। तत उक्तं–यो भक्तियोगेन मां सेवते, स ब्रह्मभूयाय कल्पते–इति ॥ २६ ॥

अत्र हेतुमाह—

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

यस्मात् 'ब्रह्मणो' यथोक्तस्य च परस्य तत्त्वस्य 'अहं प्रतिष्ठा' मयि तदव्यभिचारितया तत्त्वस्वरूपानुविधायि प्रतिष्ठितम्। यतः क्षेत्रज्ञक्षेत्रादिभावेन अवस्थितं ब्रह्मैव यद्यपि उक्तं, तथापि तदवच्छिन्नवस्तुनिष्ठतया तत्स्वरूपानुविधायि सर्वत्र प्रतिष्ठितम्। कीदृशस्य ब्रह्मणोऽहं प्रतिष्ठा। 'अमृतस्याव्ययस्य च' न व्ययोऽपक्षयलक्षणो विकारः, तेन रहितस्य; अत एव अमृतस्य नित्यसद्भावस्य। न केवलं ब्रह्मणोऽहं प्रतिष्ठा, यावत् तद्धर्मस्य शाश्वतिकस्य चित्प्रकाशात्मनोऽपि अहं प्रतिष्ठा, अनपेक्षितव्यतिरिक्तकारणः सहज आनन्द ऐकान्तिकं सुखं, तस्यापि अहं प्रतिष्ठा। किमुक्तं

भवति। प्रकाशानन्दाक्षरत्वरूपं यत् परं ब्रह्म, सोऽहं भक्तिलक्षणेनैव एकेन उपायेन प्राप्य इत्योम्॥ २७॥

यैस्तुच्छैस्त्रपुसीसताम्रमलिनैः सत्त्वादिभी रूपकै-
दौर्गत्यं भजते जनो व्यवहरन्संसारदीर्घापणे।
सिद्धे चास्य रसे चतुर्दशमहाध्यायाभिधेयात्मके
नीतास्ते परमार्थतां ददतु वो लक्ष्मीं क्षणादक्षयाम्॥

इति श्रीमद्राजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे चतुर्दशोऽध्यायः॥ १४॥

## अथ पञ्चदशोऽध्यायः ।

एवं त्रयोदशाध्याये स्थूलदृष्ट्या भूतप्रकृतेर्मोक्षः परप्राप्तिहेतुत्वेन प्रतिपादितः, चतुर्दशेन तु सूक्ष्मया दृष्ट्या गुणपरमार्थायास्तस्यास्तदतिक्रमेण विशेषतो ब्रह्मभावप्राप्तिरुपदिष्टा । इदानीं भुवनसन्तानभावेन परिणतायास्तस्या निर्मोक्षप्रतिपादनक्रमेण अपुनरावृत्तिपदप्राप्तिं प्रतिपादयितुं श्रीभगवानुवाच—

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

प्रतिपाद्यमानविशेषणसाधर्म्यादश्वत्थवृक्षाध्यवसायेन नानाभुवनसन्तानरूपः संसारप्रपञ्चो विवक्षितः । तं 'अश्वत्थं' एवंविधं 'आहुः' परावरद्रष्टारः कथयन्ति । कीदृशम् । 'ऊर्ध्वमूलं' बहुलप्रपञ्चस्य अपि भुवनसन्तानस्य केवलं भोगभूमिकर्मभूमिभेदेन संग्रहात् द्विप्रकारत्वे सति भोगभूमिरूपो भाग ऊर्ध्वशब्देन उक्तो भोगस्य फलत्वात् फलस्य च प्राधान्यात् । मूलशब्देन च अविद्यादिक्लेशजालमुक्तं, सति हि तस्मिन् भोगभूम्यात्मना क्षेत्रज्ञान् प्रति प्रकृतिर्विपरिणमति । अन्यच्च कीदृशं तम् । 'अधःशाखं' अधःशब्देन कर्मभूम्यात्मको भाग उच्यते, तेन पुनरावृत्त्यधिकरणत्वादधोविषयत्वेन उक्ताः कर्मभूमय एव शाखा इत्थमधःशाखा यस्य, तं तथाविधम् । यतः सत्सु क्लेशेषु शुभाशुभभोगाधिकरणभूतेभ्यो भुवनेभ्यः क्षेत्रज्ञानां पुनः कर्मभूमौ निपतनमवश्यमेव स्थितम् । यदुक्तम्—

'आ ब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।' (८।१६)

इति । अन्यच्च कीदृशम् । 'अव्ययं' अनन्तत्वात् परमेश्वरमायावभासितानां क्षेत्रज्ञानां गमागमनिवृत्तेस्तान्प्रति तथा अस्य परि-

णमतः प्रवाहनित्यत्वेन अविद्यमानव्ययत्वम्। अन्यच्च कीदृशम्। 'यस्य छन्दांसि' वेदाः 'पर्णानि' पत्राणि । किमुक्तं भवति। वेदसमुद्भवत्वात् तानि तानि कर्माणि छन्दःशब्देन उक्तानि, तान्येव तादृक्परिणामावधिभूतत्वात् पर्णत्वेन अस्या अध्यवसितानि। 'तं' एवंविधमेनं क्लेशप्रभवत्रयीनियमितकर्मफलभूतभोगाधिकरणात्मकं भुवनसन्तानरूपमूर्ध्वमूलत्वादिना सादृश्यादश्वत्थं 'यो वेद' वेद्यत्वेन वेदकस्वरूपात् व्यतिरिक्तं जानाति 'स' वेदार्थवित्, नतु यस्तस्मिन् ममत्वादिग्रहेण निमग्नमना इत्यर्थः॥१॥

ननु किमयमश्वत्थ ऊर्ध्वमूल एव अधःशाख एवच स्यात्, उत रूपान्तरमपि अस्य अस्तीत्याशङ्कायां तत्प्रतिपादनार्थमाह—

अधश्चोर्ध्वं प्रसृता यस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके॥ २॥

'यस्य' च अश्वत्थस्य उक्तेन क्रमेण 'अधः शाखाः प्रसृता ऊर्ध्वं' च प्रसृताः। कुतः। चशब्दो हेतौ। यस्मात् 'अधः' मर्त्यलोकशब्देन उक्तायां कर्मभूमौ 'मूलानि अनुसन्ततानि' क्लेशा एव प्रसृता इत्यर्थः। कर्माण्यपि हि क्लेशमूलानि, अत एव तादृंशि मूलानि 'कर्मानुबन्धीनि' कर्माणि शुभाशुभाः क्रिया अनुबन्धं गमयितुं शीलं येषां, तानि तथोक्तानि। भोगभूमिषु हि भोगत्वेन क्लेशा एव यथा विजृम्भन्ते, तथा कर्मभूमिषु अत एव कर्मत्वेन विजृम्भन्ते। ततश्च कर्मप्रभवा एव भोगभूमय ऊर्ध्वप्रसृतशाखात्वेन अध्यवसिताः, तथा उभयरूपा अपि अस्य शखाः। कीदृश्य इत्याह 'गुणप्रवृद्धाः' गुणैः सत्त्वादिभिः सुखाद्यात्मना परिणमद्भिः प्रवृद्धा उपचयं प्राप्ताः। यावान् हि प्रसरस्तासां,

स सर्वो गुणानुविद्ध एव भोगात्मना वा कर्मात्मना वा विजृम्भते। तेन यथा रसेन शाखा वृक्षस्य प्रवर्धन्ते[1], एवं गुणैः कर्मभूमयः फलभूमयश्च प्रवर्धन्ते[2] तदात्मका एव ता इत्यर्थः। तथा 'विषयप्रवालाः' विषयाः शब्दादयो बुद्धिप्रधानासु भूमिषु अध्यवसिताः प्रवालस्थानीयाः पल्लवतुल्या यासाम्। उपरितनीष्वधस्तनीषु च सर्वास्वेव हि भूमिषु शुभाशुभविषयत्वेन परिणता गुणा एव पर्यायेण गमागमहेतुत्वमापद्यमानाः क्षेत्रज्ञान् निबध्नन्तीति तात्पर्यम् ॥ २ ॥

तदेवंविधस्य[3] उक्तस्य भवस्य वक्ष्यमाणज्ञानाभावादाह—

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा।

'अस्य' यथाप्रतिपादितस्य अश्वत्थस्य 'तथा' तेन प्रकारेण 'रूपं' स्वभावो 'नोपलभ्यते' तत्त्वतो नैव प्रतिपद्यते। अन्यथैवहि अयमचिन्त्येश्वरमायामात्रनिबन्धनतया तत्त्वनिःसाररूपत्वेन स्थितो ज्ञानशून्यत्वाच्च अन्यथैव परमार्थसत्त्वेन अवभासमानो ममकारग्रहेण प्राणिनो निबध्नाति यथा अस्य स्वरूपं न उपलभ्यते। 'नच संप्रतिष्ठा' आद्यन्तान्तरालवर्तिनी[4] सम्यक्स्थित्यवस्थापि तथा न लभ्यते ॥

यतो येन येन रूपेण अस्य स्थितिः, तत्सर्वं परिणामित्वादस्थिरमत एवंविधस्य अस्य स्वभावप्रकाशस्य व्यवधायकस्य छेदोपायमाह—

अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण शितेन छित्त्वा ॥ ३ ॥

---

१ 'प्रवर्तन्ते' क. पाठः। २ 'प्रवर्तन्ते' क. पाठः। ३ 'एवंविधभवस्य उक्तस्य' ख. पाठः। ४ 'आभ्यन्तरवर्ति' ख. पाठः।

ततः पदं तत्परिमार्गितव्यं
यस्मिन् गतो न निवर्तेत भूयः ।

'एनं' यथाप्रतिपादितस्वरूपं क्षेत्रज्ञानां क्लेशनिमित्तकर्मानुरूपपरिपाकानुभवाधिकरणभूतभुवनसन्तानात्मकं[1] 'अश्वत्थं' तत्साधर्म्यादश्वत्थेन रूपितम्, अत एव 'सुविरूढमूलं' सुष्ठु दार्ढ्येन विविधं कृत्वा रूढानि प्ररोहं प्राप्तानि क्लेशा एव मूलानि यस्य, तं तादृशं 'असङ्गशस्त्रेण' ममताग्रहरूपगाढाश्लेषत्यागात्मना विवेकपाषाणकषणवशात् 'शितेन' तीक्ष्णेन कुठारेण 'छित्त्वा' मूलतो द्विधा कृत्वा 'ततः' अनन्तरं पुनःपुनःप्रतिपादितस्वरूपं 'पदं' निरुत्तरं धाम 'परिमार्गितव्यं' अन्वेषणीयम् । कीदृशम् । 'यस्मिन्' प्राप्ते योगी 'भूयो न निवर्तेत' पुनः संसारवर्त्मनि न आविर्भवेदकृत्रिमस्वभावविश्रान्तिलक्षणं मोक्षमवाप्नुयात् ॥

यस्मादेतस्मिन्नेव परप्रकाशावरणहेतौ महति विघ्ने यथोक्तेन रूपेण निकृत्ते सति योगी—

तमेव चाद्यं पुरुषं प्रपद्ये-
द्यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

यदेतदुक्तव्यवधानविच्छेदात् योगी प्राप्नुयात्, स एव परमः पुरुषः परमकारणं परमात्मा । ततस्तस्मिन् पदे प्राप्ते परं 'पुरुषं प्रपद्येत्' तत्समापन्नो भवेत् योगीत्यर्थः । कं परं पुरुषं प्रपद्येत् । 'यतो' यस्मादेकस्मात् सर्वकारणभूतात् 'पुराणी' प्रवहमानत्वात् चिरन्तनी 'प्रवृत्तिः' यथाप्रतिपादितजगत्क्रीडनकनिर्माणात्मिका क्रिया 'प्रसृता' इत्थमवभासमानत्वात् प्रकर्षेण सृता गता व्यापिनी संवृत्तेत्यर्थः । किमुक्तं भवति । यदैव परपदप्राप्तिलक्षणपरमात्मस्वभावविश्रान्तिरुपजायते, तदैव तदिच्छामात्रैककारणत्वं जगद्वैचित्र्याभासस्य योगिनः प्रतिपद्यन्ते ॥ ४ ॥

---

१ 'भुवनसत्तात्मकं' ख. पाठः ।

अत एव—

निर्माणमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

'तदव्ययं' नित्यत्वादपक्षयादि[1]दोषरहितं 'पदं' स्वाभाविकात्मलक्षणं स्थानं 'अमूढाः' प्रत्युदितविद्याशक्तित्वात् प्रबुद्धाः 'गच्छन्ति' प्राप्नुवन्ति तादात्म्यं लभन्ते इत्यर्थः । कीदृशाः सन्तः । 'निर्माणमोहाः' अनात्मादिषु आत्मादिप्रत्ययलक्षणाभिमानमयात् मोहात् निष्क्रान्ताः । यतो 'जितसङ्गदोषाः' सङ्ग आसक्तिरनात्मादौ वस्तुनि आत्माभिमानेन गाढनिमग्नचित्तत्वं, स एव दोषः संसारहेतुत्वात् महदवद्यं जितस्तिरस्कृतो यैस्ते तथाविधाः । [2]कथं तैः स जेय इति हेतुगर्भं विशेषणमाह 'अध्यात्मनित्याः' इति अध्यात्ममात्मनि पारमार्थिके स्वस्वभावे नित्याः सदातदेकनिष्ठा इत्यर्थः । कथमध्यात्मनित्यत्वं स्यादिति पूर्ववत् विशेषणं 'विनिवृत्तकामाः' इति काम्यन्त इति कामाः ऐहिकामुष्मिका इष्टाः शब्दादयो भोगा विनिवृत्तास्तत्त्वज्ञानाभ्यासात् विच्छिन्नास्ते येषां, ते तथाविधाः । कामा हि बाह्यान्विषयान् प्रति चित्तमाकर्षयन्तोऽध्यात्मनिष्ठतां विघ्नयन्ति, अतो विनिवृत्तकामा अध्यात्मनित्या इत्युक्तम् । विनिवृत्तकामत्वं च कथं स्यादिति पूर्ववत् विशेषणमाह 'द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैः' इति द्वन्द्वैः क्षुत्तृष्णाशीतोष्णजरामरणादिभिः, [3]तथा तद्विपरीतैस्तृप्तिह्लादादिभिरनित्यशरीराद्यहङ्कारनिबन्धनैः क्लेशैः सर्वैरेव सुख[4]दुःखाद्यभिधानैर्वि-

१ 'दिरहितं' ख. । २ 'कथं भूतैः' साधुः पाठः । ३ 'तथैतद्वि' ख. पाठः । ४ 'दुःखात्मकत्वाद्य' ख. पाठः ।

मुक्ताः परिवर्जिताः । ते हि तथाविधा निवृत्तकामा भवन्ति। तदयमत्र क्रमो विवक्षितः—ये भगवदनुग्रहाविर्भूतविवेकजज्ञानत्वात् प्रबुद्धयोगिनो हेयोपादेयविवेकक्षमबुद्धयो जायन्ते, ते सुखाद्यात्मकत्वेन संवेद्यत्वमापन्नान् सर्वान्प्राकृतान् भावान् हेयत्वेन,आत्मतत्त्वं च यथाप्रतिपादितस्वरूपमुपादेयत्वेन निश्चिन्वन्तो द्वन्द्वात्मकैः क्लेशैर्विमुच्यन्ते। तेभ्यो निवृत्ताश्च तद्विधधर्मिणि सहजनित्यानन्दमये स्वात्मन्येव नित्यावहिता भवन्ति। ततश्च बाह्येषु भावेषु प्रतिपादितोपपत्त्या शास्त्रीयकर्मापरित्यागे सति स्पृश्यमानेष्वपि शरज्जलदपटलेष्विव वायवो निःसङ्गा भवन्ति । ततश्च निःसङ्गत्वात् निर्मला[1] विच्छिन्नविपर्ययप्रत्ययाः सन्तः परमात्मन्येव परमार्थसत्ये सुप्रतिष्ठाहंप्रतीतयः परमं पदमाप्नुवन्ति ॥ ५ ॥

कीदृशं तत्—

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

'तत्' पदं सूर्यादयो न भासयन्ति, तेषां हि प्रकाशं कारणान्तरलब्धजन्मकं चेतनाचेतनभावाभिव्यञ्जकत्वेन प्रकाशकमनन्यप्रकाश्यसंवित्प्रकाशात्मना परमशब्दप्रतिपादितेन स्वस्वभावेन परमात्मेच्छामात्रेण भासयत् प्रकाशयति । अतः सूर्यादीनां कथं तत्पदं प्रकाश्यं स्यात्, अथ तदेव 'मम' यथोक्तस्वरूपस्य परमकारणस्य परमेश्वरस्य 'धाम' स्थानं यत्प्राप्य यत्समापद्य योगिनो 'न निवर्तन्ते' न पुनः संसारभूमिमन्यजीववदवतरन्ति ॥ ६ ॥

---

१ 'मैलाऽविच्छिन्नाविप' ख. ।

ननु स्वेच्छामात्रेण सर्वभावप्रकाशकेऽनन्यप्रकाश्यचित्प्रकाशैकस्वभावे परमात्मनि एव एकस्मिंस्तत्त्वे परमार्थसत्त्वेन व्यवस्थिते प्रतिशरीरं ज्ञत्वादिधर्मयोगिनोऽन्योन्यभिन्नाः क इव इमे जीवा नाम यथेच्छमिन्द्रियवर्गं स्वस्वविषये प्रवृत्तिनिवृत्ती लम्भयन्तीति संशयानान् प्रति जीवविवेकार्थमाह—

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

य एष जीवो नाम पदार्थः 'प्रकृतिस्थानि' शब्दादिभावेन परिणतायां यथोक्तस्वरूपायां प्रकृतौ स्थितानि तदेकालम्बनत्वात् तदाश्रितानि प्राधान्यात् श्रोत्रादिबुद्धीन्द्रियविवक्षया पञ्च 'इन्द्रियाणि' मनसा प्रवृत्तिनिवृत्तिसाधनभूतेन अन्तःकरणेन षष्ठेन सहितानि 'कर्षति' उपादेये स्वविषये युञ्जानः, हेयाच्च ततो निवर्तयन्नाक्षिपति विक्षिपति च; स 'जीवलोके' जगति 'ममैवांशः' स च प्रतिपादितस्वरूपस्य परमकारणस्य अंशो भाग इव 'सनातनो' नित्यो 'जीवभूतः' मदिच्छावशादन्योन्यभिन्नजीवरूपतां प्राप्तः । किमुक्तं भवति । जीवपरमात्मनोर्नास्ति मनागपि वास्तवो भेदः । एवकारेण जीवस्य चिन्मात्रस्वरूपातिरिक्तवस्त्वन्तरसंपर्कसंभावनाभावोऽवधारितः । तेन परमार्थतः परमकारणादभिन्नस्य अपि प्रतिक्षेत्रं विभक्तेन्द्रियवर्गोपकर्षत्वादिना नानात्वप्रतीतिरचिन्त्यमन्मायाशक्तिजनिता न अस्य वास्तवी । सा हि मायाशक्तिस्तत्त्वज्ञानावसरविभाव्यनिःसारस्वरूपा संप्रति सर्वभावभेदविभ्रमोद्भावनेन इत्थं व्यामोहयतीति

'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।' ( ७।१४ )

इत्यादिना प्रागेव प्रतिपादिताद्भुतस्वरूपा । ततश्च आकाशस्य नित्यनिर्मलनिर्विभागानन्तमहिम्नोऽपि घटाद्यवच्छेदकवस्तुवशात्

यथा अंशवत्त्वपरिकल्पना, तथा परमात्मनोऽपि शरीराद्यवच्छेदकवस्तुवशात् जीवरूपांशवत्त्वपरिकल्पना इयं; नतु तस्य उक्तस्वरूपस्य वस्तुतो भागाः संभवन्ति। योऽपि प्रदीप्तहुताशराशिस्फुलिङ्गनिचयोपमानप्रतिपादनव्यवहारः परमात्मजीवात्मनोरागमेषु श्रूयते, सोऽपि औपचारिक एव; न वास्तवः। यतो ब्रह्मविदः—एकमेव तत्त्वं परमार्थसत् ब्रह्मसंज्ञया अनेकमिव चकास्ति—इति आचक्षते। तथाच कश्चित्

'ईश्वरोऽव्याकृतप्राणविराड्भूतेन्द्रियोर्मिभिः।
यः प्रनृत्यन्निवाभाति तस्मै ब्रह्माब्धये नमः॥'

इत्याह॥ ७॥

ननु ततस्ततः शरीरादुपात्तशुभाशुभकर्मणा उपचितवासनाधिवासित एव जीवः शरीरान्तरं प्रतिपद्यमानः संसारपरम्परापरिवर्तनमनुभवन् कथं न वस्तुतोऽन्यो भिन्नो भवेदिति भेदभ्रान्तिमपाकर्तुमाह—

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥ ८॥**

एवं मदंशत्वात् वस्तुतो मदभिन्नो जीवपदार्थो 'यत् शरीरमवाप्नोति' केनचित् नवीनशरीरेण संबध्यमानत्वात् जातव्यपदेशं लभत इत्यर्थः, तथा 'यच्चाप्युत्क्रामति' तत्कर्मविपाकप्रक्षये केनचिच्छरीरेण वियुज्यमानत्वादुत्क्रामंस्तद्व्यपदेशं लभते; तदयम् 'ईश्वरः' स्वतन्त्रस्वरूपमात्रप्रतिष्ठः परमात्मैव सन् 'एतानि' सूक्ष्मरूपाणि इन्द्रियाणि 'गृहीत्वा' अधिष्ठेयत्वेन स्वीकृत्य 'संयाति' देहाद्देहान्तरगन्तृत्वव्यपदेशभाग्भवति। न पुनर्नित्यनिर्विभागव्यापकचिन्मात्रैकस्वरूपस्य अस्य देहाद्देहान्तरगमनलक्षणं संयानं जन्मम-

१ 'देशाद् देशान्तर' क. पाठः।

रणशब्दवाच्यं वस्तुतः संभवति । इदमत्र तात्पर्यं—पारमार्थिकस्वरूपप्रत्यवमर्शाभावमात्रात् लब्धजन्मनो निजमायाशक्त्युद्भावितावच्छेदहेतुविविधशरीरसंबन्धात् जीवनानात्वमिव अवभासयति अयमीश्वरः। तेन यथा घटकुसूलगृहाद्यवच्छेदकवस्तुसंबन्धादेकमेव निर्विभागमाकाशं घटाकाशं कुसूलाकाशमित्यादिभेदव्यपदेशमतत्त्वविदः प्रतिपद्यन्ते, तथैव अयमीश्वरः स्वरूपप्रतिष्ठ एव सन् नानाकार्यकारणसंबन्धात् नानात्वमिव प्रतिपद्यते; तत्संबन्धेऽपि सति यथैव विशुद्धसंविन्मयस्वरूपमात्रप्रतिष्ठ एव, तथा उपमानेन प्रकटयति । कुतश्चित् 'आशयात्' कमलाकरादेर्यथा स्पर्शमात्रस्वभावो 'वायुर्गन्धान्' कमलकुवलयादिमकरन्दामोदान् सूक्ष्मरूपान् स्वीकृत्य कुमुदाकरादिकमाशयान्तरं 'संयाति' तथैव अयमिन्द्रियादीनि गृहीत्वा देहात् देहान्तरं चिन्मात्रस्वरूपप्रतिष्ठ एव संयातीव । किमनेन उक्तं भवति । यथा तत्तदाशयगतगन्धपरमाणुपरिग्रहेऽपि स्पर्शमात्रगुणात् स्वरूपादप्रच्यवमानो गन्धवत्तां न अवपद्यते पवनः, अथच तत्संबन्धात्कमलसुरभिः कुमुदमकरन्दसुगन्धिरिति भिन्नव्यपदेशभाग्भवति; तथा अयमात्मा निरावरणानन्तनिर्विभागचिदेकस्वभावोऽपि मायोद्भावितदेहादिपदार्थसंबन्धात् नानाव्यपदेशं भजते । नतु वस्तुतोऽस्य भेदः, संभवति च अयमुपमानोपमेयभावो विवक्षितो यद्वस्त्वन्तरसंबन्धेऽपि स्वरूपाप्रच्युतिरस्येति ॥ ८ ॥

जात्यायुर्भोगलक्षणविपाकाभिव्यञ्जकजन्ममरणधर्मयोगिशरीरादिसंबन्धेऽपि वास्तवीं स्वरूपमात्रप्रतिष्ठतामस्य आत्मनः प्रतिपाद्य, इदानीं तदन्तरालवर्तिभोगलक्षणविपाकाभिव्यञ्जकदशासंबन्धेऽपि अस्य तां प्रतिपादयितुमाह—

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेवच ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।' ( १३।३ ) इत्यादिना प्रदर्शितन्यायेन अयमेक एव आत्मा नानाक्षेत्रवर्तिविभिन्नविषयाधिष्ठातृत्वमात्रेण नानात्वमिव प्रतिपद्यमानो 'विषयान्' शब्दादीन् सुखादिहेतून् 'उपसेवते' तत उपलब्धृत्वमात्रैकस्वभावाव्यभिचारादेक एव सन् भजते—भोक्तृत्वावस्थायामपि तैरनावृतस्वरूप एव असावित्यर्थः ॥ ९ ॥

तिष्ठन्तमुत्क्रामन्तं वा भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

'तिष्ठन्तं' लब्धव्यपदेशत्वात् कस्मिंश्चिच्छरीरे तेन तेन जात्यादिना व्यपदेशेन अवच्छिन्नतया स्थितिमनुभवन्तं, तथा 'उत्क्रामन्तं' तस्मात् तादृशात् शरीरात् शरीरान्तराश्रयणाय उद्गच्छन्तं जन्ममरणयोगित्वव्यपदेशं भजन्तमित्यर्थः, तथा तदन्तराले 'गुणान्वितं' सत्त्वादिगुणसंयुक्तं शब्दादिविषयजं सुखाद्यात्मकं भोगमुपभुञ्जानं वेदकत्वमात्रेण तद्भोक्तृत्वव्यपदेशभाजमिति जन्ममरणस्थित्यवस्थास्वपि एकस्मिन्नेव स्वाभाविके सर्वक्षेत्राधिष्ठातरि स्वरूपे प्रागुक्तेन रूपेण वर्तमानं 'विमूढाः' मायाशक्तिमहिम्ना मनागपि स्वरूपप्रत्यवमर्शानुन्मेषलक्षणेन विशेषेण मूढा विचेतसः सम्यग्ज्ञानरहिता 'नानुपश्यन्ति' पारमार्थिकेन रूपेण स्थितमपि तथाप्रत्यवमर्शाभावात् न साक्षात्कुर्वन्ति । के तर्हि तं पश्यन्तीत्याह 'ज्ञानचक्षुषः' ज्ञानं यथावस्थितवस्तुसंवेदनमेव चक्षुर्लोचनं येषां, ते 'पश्यन्ति' आत्मतया साक्षात्कुर्वन्ति । नहि असौ रूपात्मकविषयसाधनभूतेन चक्षुरात्मना इन्द्रियेण दृश्यते, तद्दर्शने सम्यग्ज्ञानमेव साधनमतस्तत् चक्षुष्ट्वेन निरूपितमिति ॥ १० ॥

किंच—

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

येऽपि ज्ञानचक्षुषो 'योगिनः' समाहिताः, तेऽपि 'एनं' परमात्मानं यथोक्तेन क्रमेण यतमाना नित्याविलुप्तोत्साहतया यत्नपराः सन्तः 'आत्मन्यवस्थितं' सदा स्वभावत एव अपरोक्षतया वर्तमानमेव 'पश्यन्ति' यथावत् प्रत्यभिजानन्तीत्यर्थः । 'अकृतात्मानस्तु' यतमाना 'अपि एनं न पश्यन्ति' । किमुक्तं भवति । परमेश्वरानुग्रहं विना अनुन्मिषितसम्यग्ज्ञानत्वादकृतस्तद्दर्शनाय असंपादित आत्मा अन्तःकरणं यैस्ते तादृशाः आसुरसर्गभाजो यतमाना अपि तेन तेन केनचित् प्रकारेण उद्युक्ता अपि न पश्यन्ति सम्यग्ज्ञानलक्षणस्य मुख्यस्य तद्दर्शनसाधनस्य अभावात् ॥ ११ ॥

यश्च अयमेवमद्भुतशक्तिः परमात्मा, सोऽहमेवेति आत्मनिष्ठत्वेन तत्स्वरूपं प्रतिपादयितुमाह—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥

'यद्' एतदादित्यान्तर्गतं सूर्यसंनिविष्टं 'तेजः' ज्योतिः समस्तं भुवनमभिव्यञ्जकतया प्रकाशयति, 'यच्चन्द्रमसि' सोमे संनिविष्टम् 'अखिलं जगत्' आप्याययति, 'यच्चाग्नौ' जातवेदसि स्थितं पाकादिस्वकार्यं निर्वर्तयति; तत् त्रिधा अवभासमानमपि ममैव एकस्य संबन्धि एकमेकप्रकारं संविदात्मकं जानीहि । नहि असंविदात्मकत्वे कस्यचित्स्वकार्यस्य संपादनपर्यवसायिता उपपद्यते । संविच्च एकैव एकस्य पारमार्थिकस्य संवेदितुर्ममैव असाधारणो धर्मः । ततोऽहमेव सर्वमित्येतत्परमेतत् ॥ १२ ॥

अत एव आह—

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

'गां' पृथिवीं 'आविश्य' स्वशक्त्या व्याप्य 'भूतानि' चराचरान्प्राणिनः 'अहमोजसा' स्वबलेन 'धारयामि' बिभर्मि पृथिवीगता धारणशक्तिर्ममैव स्वाभाविकं बलमित्यर्थः । तथा 'रसात्मकः' अमृतमयः 'सोमो भूत्वा' चन्द्रात्मतया आत्मानमेव अवभास्य 'सर्वा ओषधीः' समस्तप्राणिप्राणनहेतुभूता द्रव्यजातीरहमेव 'पुष्णामि' उपचिताः संपादयामि आप्यायनरूपा ममैव शक्तिरित्यर्थः । तथा 'वैश्वानरो' जातवेदा 'भूत्वा' तदात्मकः सन् 'अहम्' एव 'प्राणिनां' प्राणभृतां 'देहं' शरीरं 'आस्थितः' आविष्टः प्राणापानाभ्यां बहिः सूर्येन्दुभावेन व्यवस्थिताभ्यां स्वशक्तिभेदाभ्यां समायुक्तः सहितो भक्ष्यादिभेदात् 'चतुर्विधमन्नम्' अभ्यवहार्यं द्रव्यं 'पचामि' परिणामं प्रापयामि । जाठरस्य अग्नेः सकलशरीरविभक्तात्मतया वर्तमानस्य समस्तान्नरसपाचिका सर्वप्राणिजीवनहेतुर्या शक्तिः, सा ममैव एकस्य शक्तिमतः संबन्धिनी,—इति सप्तमाध्यायादावुक्तन्यायेन प्रतिपादितैव अत्र उपपत्तिः ॥ १३, १४ ॥

किंच बहुना—

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदकृदेव चाहम् ॥ १५ ॥

'सर्वस्य' कस्यचित् प्राणभृतः 'अहम्' एकः परमात्मा 'हृदि' सर्ववस्तुसंवेदनाधिकरणभूते शरीरैकदेशे 'संनिविष्टः' सर्वार्थसंवेदितृतया कृतस्थितिः। अतो 'मत्तः' मत्सकाशादेव न अन्यतः कुतश्चित् सर्वक्षेत्रज्ञानां स्मृतिज्ञानापोहनलक्षणः शक्तिप्रसरः। किमनेन उक्तं भवति। इह सर्वक्षेत्रज्ञानां क्षेत्रविषयादिविभागवि-[1]भक्तभावसंवेदकस्वभावानां संवेदनशक्तिस्तत्तत्पदार्थभावाभावपरिच्छेदकत्वात् द्विधा प्रवर्तते। तथाहि कदाचित् कस्यचिदभावपरिच्छेदकत्वेन एकप्रकारैव अपोहनरूपतया प्रसरति। भावपरिच्छेदकत्वेन च प्रसरो द्विप्रकारो ज्ञानात्मकः, स्मृत्यात्मकश्च। यदभूतपूर्वस्य प्रकाशनं, तत् ज्ञानं; यदनुभूतपूर्वस्य प्रत्यवमर्शनं, सा स्मृतिः; उभयथापि प्रकाशनाभावस्तु अपोहनमिति त्रिप्रकारोऽपि अयं क्षेत्रज्ञशक्तिप्रसरः संवेदका[2]त्मकत्वात् परमार्थसंवेदितुरेकस्मात् मत्त एव प्रसरन् मायावशात् नानाक्षेत्रज्ञसंबन्धतया प्रतीयते इत्यर्थः। यथाच एवं प्रसरो मत्तः प्रसरति, तथा सकलजगत्प्रक्रियाप्रपञ्चप्रथनप्रथमकारणभूतः परापरतत्त्वरूपः शब्दराशिरपि मत्त एव। तेन च अनन्तप्रपञ्चप्रसृतेनापि अहमेव एको वेद्य इत्याह 'वेदैश्च सर्वैः' इत्यादि। वेदो वर्णाश्रमविभागव्यवस्थितविविधक्रियानियामकः शब्दराशिः, तस्य अन्तो निष्ठा वेदान्तः 'आत्मैव परमेश्वर एकं तत्त्वम्' इत्यादिज्ञानव्यवस्थापको वचनप्रपञ्चः; तस्य उभयरूपस्यापि अहमेव एकः कर्तेति। अनेन वेदवेदान्तात्मकशब्दस्य स्वतःसिद्धत्वं द्वैतवादिव्यवस्थितेश्वरप्रणीतत्वं च पराकर्तुमभिप्रेतं यतः। अयमत्र अशयः—इह अहमद्वयचित्प्रकाशैकस्वभाव एकः पदार्थः परमार्थसन्नित्ययं तावत्सिद्धान्तो व्यवस्थापितः। स च एवंविधोऽहं येन अव्यभिचारिणा प्रत्यवमर्शात्मके-

१ 'दिविभक्त' ख.। २ 'संवेदात्मकत्वात्' ख.।

न धर्मेण तथाविधं स्वरूपं व्यवस्थापयामि, तत्परं शब्दतत्त्वम्। तद[1]स्य परमार्थतो मत्स्वरूपाभिन्नस्य अपि मदिच्छोद्भावितेदन्ताभासमाननानाजगद्भावभेदव्यवस्थापकत्वेन विजृम्भमाणस्य तद्वदनन्तविकल्पात्मकं स्वरूपमपरं शब्दतत्त्वम्। तस्य एवंविधस्य ज्ञानधर्मस्यैव विकल्पात्मकस्य श्रोत्रग्राह्यध्वनिविशेषात्मकतया अवभासितः पदार्थः संकेततया मयैव सत्यसंकल्पेन परमगुरुणा पूर्वेषामपि पूर्वेण परेण पुरुषेण मुख्यकार्यज्ञेयार्थविषयतया वेदवेदान्तरूपवाचकत्वेन प्रतिनियमितः। तादृगर्थवाचकत्वेन च अवभासमानमेव वेदवेदान्तयोर्मत्कार्यत्वं, तदनेन अनन्तप्रपञ्चेन अपि वेदवेदान्तप्राधान्यप्रतिपादितेन शब्दात्मकेन स्वशक्तिप्रसरेण नानावाच्यनिष्ठतया अवस्थितेन अपि परमार्थतश्चिदात्मकमत्स्वरूपव्यतिरिक्तपदार्थान्तराभावादहमेव एको बोद्धव्य इति 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यनेन उक्तम्॥ १५॥

तदित्थंस्थिते त्रिप्रकारः प्रमातृव्यवहारो व्यवस्थितः। तथा च यस्य भौतिकशरीरनिष्ठाहंप्रत्ययनिबन्धनो व्यवहारः, स स्थूलः प्रमाता। यस्य च तादृक्शरीरवेदकतद्व्यतिरिक्तजीवनिष्ठाहंप्रत्ययनिबन्धनो व्यवहारः, स सूक्ष्मः प्रमाता। द्वावेतौ भेदस्फुरणात् मायीयौ प्रमातारौ। यस्य पुनरशेषक्षेत्रव्यापकपरमार्थसत्यसामान्यसंवित्प्रकाशैकस्वभावपरमात्मनिष्ठाहंप्रत्ययनिबन्धनो भेदप्रतीतिकल्पनामात्रसंस्पर्शशून्यस्वरूपप्रत्यवमर्शमात्रात्मको व्यवहारः, स परमार्थसत्यः परमपुरुषः; तत्स्वरूपसमापत्तिश्च परा सिद्धिरिति क्रमेण प्रतिपादयन् शास्त्रसिद्धान्तसंग्रहं प्र[2]तिपादयितुमाह—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एवच।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ १६॥

१ 'तस्य पर' ख. पाठः। २ 'दर्शयितुं' ख. पाठः।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्ययमीश्वरः ॥ १७॥
यस्मात्क्षरमतीतोऽहमक्षरस्यापि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

यद्यपि आपातनिकयैव श्लोकचतुष्टयमेतत् व्याख्यातप्रायं, तथापि विस्पष्टार्थं व्याख्यायते। इहहि 'लोके' परमेश्वरमायाशक्त्युद्भावितक्रीडामात्रपरमार्थे समस्ते जगति 'द्वावेव पुरुषौ' द्विप्रकारैव भेदनिबन्धनव्यवहारा पुरुषजातिरित्यर्थः । अत एव तावन्योन्यभिन्नतया सर्वप्रमातृसंवेद्यस्वरूपत्वे सति 'इमौ' इति प्रत्यक्षनिर्देशविषयेण इदंशब्देन निर्दिष्टौ । कौ तौ द्वाविति तयोः संज्ञामाह 'क्षरश्चाक्षर एवच' इति। एतयोर्लक्षणमाह—एकस्तावत् 'क्षरः' प्रतिक्षणविनश्वरजन्मादिविकारयोगिभौतिकशरीरनिष्ठाहङ्कारात्मकत्वात् स्वरूपसंचलनशीलः । तथाहि शरीरगता जन्मादयो विकारास्तद्धर्मानुविधायिनि तद्व्यतिरिक्तस्वभावेऽपि तस्मिन्नुपचर्यन्ते, ततः 'सर्वाणि भूतानि क्षरः' इत्युक्तम् । तथा निर्विकारसंविन्मात्रनिष्ठत्वात् कूटवत् पर्वतशिखरादिवत् निष्कम्पतया[1] स्थितः 'कूटस्थः' अत एव क्षरस्वरूपविपरीतत्वात् 'अक्षरः' इत्युच्यते । अनेन मध्यमा सूक्ष्मा दशा पुरुषस्य प्रतिपादिता यस्यां ज्ञातृमात्रस्वरूपनिष्ठत्वात्क्षरस्वरूपं ज्ञेयशरीरधर्मानुविधायित्वं च नास्ति । परस्परभेदेन व्यवस्थिता नानाक्षेत्रज्ञप्रतीतिश्च न तावदुच्छिन्ना ॥ एवं मायोद्भावितं पुरुषजातिद्वैविध्यं प्रतिपाद्य पारमार्थिकं परपुरुषस्वरूपं प्रतिपादयितुमाह 'उत्तमः

१ 'निष्प्रकंपतया' ख. पाठः ।

पुरुषः' इत्यादि। एताभ्यां क्षराक्षरशब्दप्रतिपादिताभ्यां पुरुषाभ्यां 'अन्यः' सत्यस्वरूपमात्रप्रतिष्ठत्वात् विलक्षणः, अत एव 'उत्तमः' सर्वपुरुषातिशायिधर्मा, अत एव 'परमात्मा' मायाहेतुकागमापायानित्यधर्मसामानाधिकरण्याभावात्परमो निरुत्तरः सत्य आत्मा चेतनोऽसावित्युक्तः। कोऽसौ। 'यो' निष्प्रतीघातस्वच्छन्देच्छापरिस्पन्दित्वात् 'ईश्वरः' सन् इदं चराचरमनन्तभावजातं सन्ततं 'लोकत्रयं' सकलं जीवलोकं 'आविश्य' तथा प्रकाशकतया व्याप्य 'बिभर्ति' धारयति इत्थं स्थितिमनुभावयति। सामान्यसंवित्प्रकाशमात्रप्रकाश्यमानतामन्तरेण न कश्चित्पदार्थः केनचित्पदार्थेन अवस्थातुमलमित्यसकृदुक्तमेव एतत्प्रकरणे। लोकत्रयस्य च अव्ययमिति विशेषणं प्रवाहनित्यत्वादक्षयत्वविवक्षया बोद्धव्यम्। अत एव मायीयपुरुषवैलक्षण्यं प्रतिपादयितुमाह 'यस्मात्' इत्यादि। यतो हेतोर्यथाप्रतिपादितस्वरूपं 'क्षरं' स्थूलं पुरुषमतिक्रान्तः 'अक्षरस्य' च यथाप्रतिपादितस्वरूपस्य सूक्ष्मस्य असत्यभेदप्रत्ययाभावात् 'उत्तमः' प्रकृष्टः, ततोऽन्वर्थया संज्ञया लोकशास्त्रयोः 'पुरुषोत्तमः' इति अहं प्रतीतः। एवंच यथोक्तेन प्रकारेण 'यः' योगी 'मामसंमूढः' सन्देहादिमोहरहितः सन् पुरुषोत्तमतया 'जानाति' आत्मत्वेन प्रत्यवमृशति, 'स' अवशेषितज्ञेयतत्त्वत्वात्सर्वभावेन सर्वात्मकत्वेन वास्तवेन 'भजति' सेवते–स एको मुख्यया वृत्त्या मद्भक्त इत्यर्थः। सर्वभावसंवित्स्रो[1]तसां सामान्यसंवित्प्रकाशसागरसामरस्यानुभवलक्षणं विज्ञानं मद्भक्तेः परं रूपमुक्तमिति। यदुक्तं स्तोत्रे केनचित्

'चित्प्रकाशपरामर्शशक्तिमूर्त्यावशिष्यते।
अप्यद्वयदशोन्मेषे भव्यानां भक्तिरेव ते॥'

इति॥ १६–१९॥

---

१ 'सरित्' क.।

यथोक्तज्ञानफलनिर्देशेन अध्यायमुपसंहरन्नाह—

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥

'इति' यथोक्तेन प्रकारेण 'गुह्यतमं' सर्वरहस्यातिशायि 'शास्त्रमिदं' भवता प्रत्यक्षानुभूतफलं 'मया' अभिहितं न अतः परं वक्तव्यमस्तीत्यर्थः । अत एव आह 'एतद्बुद्ध्वा' यथावदवगम्य 'बुद्धिमान्' पुरुषः 'स्यात्' । अविज्ञाते तु अस्मिन् सत्यामपि बुद्धावबुद्धिमन्त एव प्रमातारः शरीरादिहेयवस्तुनिमग्नचित्तत्वात् तेषाम् । तथा एतदेव अनुष्ठाय 'कृतकृत्यः' पुरुषः स्यात् कृतं निरवशेषितं कृत्यं यथाकरणीयं येन, स तथा । एतज्ज्ञानप्रतिपादितार्थानुष्ठानव्यतिरेकेण या काचित् क्रिया अनुष्ठीयते, तया सम्यगनुष्ठितया अपि न कृतार्थः स्यादिति सर्वज्ञानानां सर्वक्रियाणां च यथोक्तज्ञाननिष्ठत्वेन अनुष्ठितानां परमात्मस्वरूपसमापत्तिलक्षणपरसिद्धिसाधनत्वमित्योम् ॥ २० ॥

ऊर्ध्वाधःक्लेशमूलाश्रितफलपदवीकर्मभूभूरिशाखा-
सन्तानव्यक्तसत्त्वाद्युपचितविषयव्रातपत्रौघचित्रम् ।
अश्वत्थं छेत्तुमेनं भुवनचयमयं तत्त्वदिग्व्यक्तिहेतोः
सन्तोऽध्यायेऽत्र शस्त्रं त्रि[1]तपनगणिते बोधमुत्तेजयन्तु ॥

इति श्रीमद्राजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे पञ्चदशोऽध्यायः ॥ १५ ॥

---

१ 'तपनत्रिगुणिते' क. पाठः ।

## अथ षोडशोऽध्यायः ।

एवमस्य पञ्चदशाध्यायपर्यन्तशास्त्रोपनिषद्भूतस्य ज्ञानस्य पूर्वं

'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥' (९।१४)

इत्यादिना, तथा

'मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।

आसुरीं राक्षसीं चैव प्रकृतिं मोहिनीं श्रिताः ॥' (९।१३)

इत्यादिना च सर्गद्वयोपोद्घातेन विषयाविषयविवेचनादि यत्सूचितं, तदिदानीमनेन अध्यायेन वितर्त्य[1] निर्णेतुं भगवानुवाच—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥
अहिंसा सत्यमक्रोधस्त्यागोऽसक्तिरपैशुनम् ।
दया भूतेष्व[2]लौल्यं च मार्दवं ह्रीरचापलम् ॥ २ ॥
तेजः क्षमा धृतिस्तुष्टिरद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥

इह प्रथमाध्यायोपोद्घातप्रदर्शितविभागेन दैवस्य आसुरस्य च सर्गस्य अवान्तरभेद[3]परिकल्पनया यद्यपि बहवः प्रकारा उक्ताः, तथापि अधुना मोक्षैकनिष्ठताभिव्यञ्जकगुणसामग्रीसंपन्नस्य उत्तमस्य दैवस्य सर्गस्य परापरभेदेन द्विप्रकारत्वं तावत् प्रतिपाद्यते । तत्र अभयादयो नातिमानितान्ताः सप्तविंशतिर्गुणाः सामान्येन दैवीं संपदं दैवसर्गसंपत्तिमभि तदाभिमुख्येन तां स्वीकर्तुं जातस्य कर्मभूमौ लब्धजन्मनः पुरुषस्य भवन्तीति यद्यपि उक्ताः, तथापि अभयादयः प्रथमे चत्वारो गुणाः परां 'दैवीं संपदम-

१ 'वितन्य' ख. । २ 'भूतेष्वलोलत्वं' ख. पाठः । ३ 'भेदकल्पनया' क. ।

भिजातस्य' भवन्ति; दानादयस्तु विशेषा अपरामभिजातस्य भवन्तीति विशेषोऽत्र विवक्षितः। स तथैव व्याख्यायते। तत्र 'अभयं' सर्वतः कुतश्चित् चेतनाचेतनरूपात् भावजातात् यथोक्ताद्वयज्ञानप्रतिष्ठितबुद्धित्वे सति आत्माभेदेन[1] प्रतिपाद्यमानात् भयस्य आत्मव्यतिरिक्तपदार्थाश्रयस्य प्रेप्सितविषयाप्राप्तिविघातादिहेतोः साध्वसस्य अभावः। तच्च परमात्मस्वरूपसमापन्नकल्पस्य योगिनो भवति। यदुक्तमुत्पलदेवपादैः

'योऽविकल्पमिदमर्थमण्डलं
पश्यतीश निखिलं भवद्वपुः।
स्वात्मपक्षपरिपूरिते जग-
त्यस्य नित्यसुखिनः कुतो भयम्॥' (उ०स्तो०१३।१६)

इति। तथा तस्य कारणभूता 'सत्त्वशुद्धिः' सत्त्वगुणप्रधानत्वात् सत्त्वशब्दवाच्यस्य चित्तस्य शुद्धिर्भेदमलप्रक्षालनाभ्यासात् नैर्मल्यं, तथा तस्या अपि कारणभूता 'ज्ञानयोगव्यवस्थितिः' ज्ञाने यथाप्रतिपादितशास्त्रार्थबोधे व्यवस्थितिः निरुपप्लवा प्रतिष्ठा, तथा तद्धेतौ योगे शास्त्रचोदितस्वकर्मानुष्ठानलक्षणे परस्मिन् समाधौ व्यवस्थितिस्तथैव निर्विप्लवा प्रतिष्ठेति। एते परां दैवीं संपदमभिजातस्य योगिनो धर्माः संभवन्ति। स हि आरूढदशां प्राप्तः। अथ 'दानं' स्वद्रव्यस्य परस्वत्वापादनम्। तच्च द्विप्रकारं करुणामात्रहेतुकं दीनाद्यर्थिजनविषयत्वेन अविशेषप्रवृत्तिकमेकं, शास्त्रचोदितविधिविशेषसंपत्तये विशिष्टेतिकर्तव्यतासंस्कृतं पात्रदेशकालादिविशेषमपरम्। तथा 'दमः' शास्त्रविरुद्धेभ्योऽर्थेभ्य इन्द्रियाणां बाह्याभ्यन्तराणां निग्रहः। तथा 'यज्ञः' वर्णाश्रमक्रमविभक्तो नित्यनैमित्तिकभेदेन द्विविधो विशिष्टदेवतायागः। तथा

१ 'आत्मभेदेन प्रतिपद्य' ख.।

'स्वाध्यायो' यथास्वमध्येयत्वेन उपदिष्टस्य शास्त्रस्य मन्त्रादेर्वाध्ययनमभ्यासेन बोधः। तथा 'तपः' तथैव नित्यनैमित्तिकभेदेन शास्त्रीयनियमपूर्वं क्षुत्तृष्णादिसहिष्णुतया शरीरतपनम्। तथा 'आर्जवं' ऋजुत्वं प्रकृतिसरलब्रह्ममार्गैकालम्बनत्वात् समस्तकायवाक्चित्तसाध्यक्रियाविशेषसाफल्यैककारणमकौटिल्यम्। तथा 'अहिंसा' शास्त्रनिषिद्धायाः प्राणिवधादिक्रियायाः कामक्रोधलोभहेतुकायाः कृतकारितानुमोदितादिविशेषपरिशुद्धं परिवर्जनम्। तथा 'सत्यं' आत्यन्तिकभूतहितसंपादनाभिसन्धिपरिशुद्धे यथादृष्टानुमितार्थकथनम्। 'अक्रोधो' हिंसानिष्पत्तिहेतोर्विवेकहारिणः कोपाख्यस्य चित्तक्षोभस्य अभावः। 'त्यागो' दानस्य उक्तत्वात् तत्तत्क्रियाफलाभिसन्धेः परिहारः। 'असक्तिः' शास्त्रविहितसेवेषु विषयेषु[1] अनिमग्नचित्तत्वम्। 'अपैशुनं' पिशुनः परदोषसूचकस्तस्य भावः पैशुनं तदभावः, राजादिविषये द्वेषात् परावद्याविष्करणाभावः। तथा 'दया भूतेषु' सर्वप्राणिषु क्लेशापन्नेषु तदुज्जिहीर्षया करुणा। तथा 'अलौल्यं' निषिद्धेषु विषयेषु लम्पटत्वं लौल्यं, तदभावोऽलौल्यं, तेषु अप्रवृत्तिरित्यर्थः। विहितेषु प्रवृत्तौ निषिद्धेषु विषयेषु अप्रवृत्तावपि सत्यां रागद्वेषरहितत्वेन भाव्यम्। तथा 'मार्दवं' मृदुर्निखिले[2] भूतव्राते स्वात्मस्वरूपपरमेश्वरत्वभावनया अतिकोमलान्तःकरणः, तस्य भावो मार्दवम्। तथा 'ह्रीः' लज्जा, अस्मिन् निषेव्यमाने साधुजनो मा विगर्हेदिति आशङ्कया दुश्चिन्तितदुर्वचनदुश्चेष्टितेषु जुगुप्सेति यावत्। तथा 'अचापलं' चपलः संकटेषु[3] अस्थिरस्तस्य भावश्चापलं, तदभावः; अवश्यकरणीयेषु [4]अप्रमत्तत्वमित्यर्थः।

१ 'विहितविषयेषु' क.। २ 'मृदुषु निखिलेषु भूतव्रातेषु स्वात्मरूपेश्वरभावनया' ख.। ३ 'सत्कार्येष्वस्थिरः' ख.। ४ 'अप्रमत्ततेत्यर्थः' ख. पाठः।

'तेजः' परानभिभवनीयत्वकारणं स्वाभाविकमोजः । तथा 'क्षमा' तेजस्वित्वे सत्यपि परापराधसहिष्णुता । 'धृतिः' अवसादहेतौ सन्निहितेऽपि स्वपरिस्पन्दाच्यवनलक्षणं धैर्यम् । तथा 'तुष्टिः' सर्वथा सर्वदा विषाददोषानाक्रान्तचित्तत्वम् । तथा 'अद्रोहः' प्राणिनां हननविषयाया इच्छाया अपि अभावः । तथा 'नातिमानिता' मानो देहादिषु अनित्येषु अहङ्कारस्तथा परतन्त्रेषु भोगेषु ममकारः, स सर्वदा निश्चलत्वादतिशयवानतिमान उच्यते; तद॑भावो नातिमानः । स च मुमुक्षूणामेव संभवति । ते हि यथोक्तातिमानमहादोषोच्छेदे नित्योदिता भवन्ति । अत एवच तस्मिन् सति दानादयो धर्मा दैवसंपदभिव्यक्तिहेतवः संपद्यन्ते इति सर्वेषां संस्कारकत्वेन तस्य पर्यन्ते निर्देशः कृतः इति ॥ १—३ ॥

एवं मुमुक्षुजनाव्यभिचारिणीं दैवसर्गाभिव्यञ्जिकां परापरां गुणसामग्रीं प्रतिपाद्य इदानीं तथैव द्विप्रकारस्य तद्विपरीतस्य आसुरस्य सर्गस्य तां क्रमेण प्रतिपादयति । दैवसर्गवत् परापरभेदेन आसुरोऽपि सर्गो द्विप्रकारो विवक्षितः । तत्र तमोगुणप्रधानो नरकतिर्यग्योनिपातहेतुकर्माधिकृतपुरुषात्मकः पर इति । अस्य अग्रे विस्तरेण विशेषणानि वक्ष्यति । संप्रति तु सामान्यगुणोद्देशद्वारेण आसुरीं संपदं प्रतिपादयितुमाह—

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥

एते धर्माः 'आसुरीं' रजस्तमःप्रधानत्वादासुरशब्देन उक्तां 'संपदं' शरीरादिसंपत्तिमभिमतां स्वीकर्तुं जातस्य कर्मभूमावुत्पन्नस्य पुरुषस्य भवन्ति । तत्र 'दम्भः' दृष्टमात्रपरतया श्रद्धा-

१ 'तदभिभावो' ख. पाठः ।

दिरहितचित्तत्वेन नानाविधधर्मक्रियाचरणम् । 'दर्पः' स्वगुणसंभावनया हर्षमोहात्मकश्चित्तविकारोऽभिमानात्मा ख्यातः । 'क्रोधः' हिंसाहेतुर्विकारः । 'पारुष्यं' वाक्चित्तचेष्टानां रूक्षता । 'अज्ञानं' ज्ञानस्य पदार्थतत्त्वबोधस्य अभावः, दम्भादिसर्वदोषहेतुभूतत्वात् सर्वेषामन्ते निर्दिष्टः—इत्येते रजस्तमःप्रभवा धर्मा आसुरं सर्गं सूचयन्ति ॥ ४ ॥

एतयोः सर्गयोः फलं निर्देष्टुमाह—

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥

एषा यथानिर्दिष्टा 'दैवी संपत्' दैवसर्गनिष्पत्तिः[1] 'विमोक्षाय' संसारदुर्गापक्रान्तये, नहि यथोक्तगुणानुमितदैवसर्गभाक् विमोक्षमनवाप्य ततो निवर्तत इत्यर्थः । 'आसुरी' पुनस्तद्विपरीता बन्धलक्षणतद्विपरीतफला एव । ततश्च त्वं दुस्तरात् संसारदुर्गात् 'कथमहमेवंविधो मुच्येय' इत्यात्मनि असामर्थ्यजनितं शोकं मा कार्षीः । यतो यथोक्तलक्षणसंवादात् 'दैवीं संपदमभिजातोऽसि' ॥ ५ ॥

अथ द्विविधत्वमेव सर्गस्य कर्माधिकृतं जनं[2] प्रति नियमयितुमाह—

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एवच ।
दैवो विस्तरतः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥

यथाप्रतिपादितेन विभागेन 'द्वौ' द्वावेव न तृतीयो 'भूतसर्गौ' भूतानां कर्मभूमिजन्मनां पुरुषाणां सर्गौ प्रादुर्भावौ । कौ तौ । 'दैव आसुर एवच' । तत्र सत्त्वगुणप्रधानत्वात् देवसंबन्धिसर्गसदृश उपचारात् दैवशब्देन उक्त एकः । तथा रजोगुणप्रधान-

---

१ 'निर्वृत्तिः' ख. । २ 'जन्म' क. ।

त्वादासुरसंबन्धिसर्गसदृशस्तथैव उपचारात् द्वितीयः । तयो-र्मध्यात् 'दैवः' परापरगुणप्रतिपादनक्रमेण वितत्य प्रतिपादितः । आसुरस्तु सामान्यतः प्रतिपादितः । तमिदानीं कथ्यमानमव-धारय ॥ ६ ॥

तत्र परस्य तावदासुरस्य सर्गस्य स्वरूपमाह—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतमकिञ्चित्कमहेतुकम् ॥ ८ ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः ॥ ९ ॥

'आसुराः' उद्रिक्ततमसो 'जनाः प्रवृत्तिं' संसारप्रवर्तनहेतु-भूतं शास्त्रचोदितं कर्म 'न विदुः' न जानते, नच 'निवृत्तिं' संसारनिवर्तनहेतुभूतं ज्ञानादिसंस्कृतं कर्म; ते स्वर्गापवर्गलक्षण-फलनिरपेक्षतया दृष्टमात्रप्रयोजनं कर्म आरभन्ते इत्यर्थः । अत एव प्रवृत्तिनिवृत्तिसाधनानि तेषां न संभवन्तीत्याह—न शौचमिति । 'शौचं' शास्त्रनियमितेतिकर्तव्यतासंपाद्यं शुचित्वं कायचित्तयोः शुद्धत्वं तेषां नास्ति, 'नापि चाचारः' शास्त्रनियमितं वाङ्मनः-कर्मभिर्विशिष्टमाचरणम् । नच 'सत्यं' उक्तलक्षणं यथादृष्टानु-भूतार्थकथनं सर्वत्र यथेष्टचेष्टा एवं[1] त इत्यर्थः । कुत एवम् । यतस्ते इदं 'जगत् जीवलोकं शास्त्रीयमर्यादया वर्तमानं 'असत्यं'[2] अवस्तु-भूतम् 'आहुः' अतश्च तत्स्थित्यर्थं शास्त्रेण शौचादिमर्यादा या स्थापिता, सा मुग्धप्रतारणा,—इति ते कथयन्तीत्यर्थः । अत एव 'अप्रतिष्ठं ते एतदाहुः' नापि अस्य निसर्गासत्यरूपस्य शौचादिना

१ 'एवेत्यर्थः' । २ 'असत्यवस्तु' ख. ।

प्रतिष्ठा स्थितिः कर्तुं शक्येत्यर्थः। 'अनीश्वरं च एतदाहुः'। न अस्य कश्चिदीश्वरो नियन्ता संभवति, यत्प्रणीतशास्त्रचोदिताः शौचादयोऽनुष्ठेया भवेयुः। 'अपरस्परसंभूतं' भावानामन्योन्यकार्यकारणभावो यः प्रत्यक्षदृष्टः शास्त्रेण च व्यवस्थापितः, तं ते नास्तिकाः स्वभावमात्रवादिनो न इच्छन्ति। सर्वः कश्चिद्भावः स्वयमुत्पद्यते, स्वयं च विनश्यति; न कारणान्तरमपेक्षते इत्यपरस्परसंभूतमिदं सर्वमाहुः। तथा 'अकिञ्चित्कम्' अविद्यमानं किञ्चित् सत्यरूपमंशमात्रमपि यस्य, तत्तादृशमाहुः। अत एव 'अहेतुकं' स्वकर्मादिकारणरहितम्। तेषामेवंविधानां लोकायतिकादीनां तामसानां व्यापारमाह—ते हि 'एतां' एवंविधामीश्वरकर्मपरलोकाद्यभाववादमयीं 'दृष्टिं' नास्तिकदर्शनम् 'अवष्टभ्य' गाढमवलम्ब्य 'नष्टात्मानः' वस्तुतः सन्नेव आत्मा अदर्शनं प्राप्तः परमार्थसत्यश्चिद्रूपः पदार्थो येषां, ते तथा। अत एव 'अल्पबुद्धयः' अल्पमात्रविषयदर्शित्वात् परिमिता बुद्धिर्धीर्येषां, ते तथाविधाः सन्तः 'उग्रकर्माणः' दारुणव्यापाराः 'जगतः' जीवलोकस्य 'क्षयाय' विनाशाय 'प्रभवन्ति' प्रवर्तन्ते, तदर्थमेव कर्माणि कुर्वते। किमुक्तं भवति। त एवंविधा नास्तिका यानि कर्माणि कुर्वते, तेषां नरकतिर्यक्स्थावरादिभावपरिणामः फलं; न ते पुनः कर्मभूमौ पुरुषयोनिमासादयन्तीत्यर्थः। अत एव 'अशुभाः' पापात्मकाः॥ ७—९॥

एवमुद्रिक्ततमस्कस्य परस्य आसुरसर्गस्य स्वरूपं प्रतिपाद्य, इदानीमुद्रिक्तरजस्कस्य अपरस्य तत्प्रतिपादयितुमाह—

कामामाश्रित्य दुष्पूरं दम्भलोभमदान्विताः।
असद्ग्रहाश्रिताः क्रूराः प्रचरन्त्यशुचिव्रताः॥ १०॥

अन्ये आसुरा जना एवंविधाः 'प्रचरन्ति' व्यवहरन्ति।

किं कृत्वा। 'दुष्पूरं' दुःखेन पूरयितुं कर्तुं न शक्यं 'कामं' विषयतृष्णात्मकं संकल्पं 'आश्रित्य' अवलम्ब्य अत एव दम्भेन उक्तलक्षणेन लोभेन गर्वेन मदेन चित्तोद्रेकेण अन्विता अनुगता व्याप्ताः। तथा 'असद्ग्राहाश्रिताः' तथाविधदुष्टाभिनिवेशावलम्बिनः। तथाच 'क्रूराः' हिंसादिषु अनिरपेक्षाः। तथा 'अशुचिव्रताः' अशुचीनि शास्त्रपरिदृष्टनियमापवर्तनैरशुद्धानि तानि तानि काम्यानि व्रतानि नियमविशेषा येषां, ते तथोक्ताः। किमुक्तं भवति। रजःप्रधानत्वात् व्रतादिरूपं कामनानिमित्तकं कर्म आरभन्ते, तमोऽनुगतत्वात्तु तत् तेषामशुचि भवति, दम्भादिदोषान्विताश्च ते भवन्ति ॥ १० ॥

किंच—

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः।**
**कामोपभोगपरमा एतावदितिनिश्चिताः॥ ११ ॥**
**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।**
**ईहन्ते कामभोगार्थानन्यायेनार्थसंचयान् ॥ १२ ॥**

त एवंविधाः 'अर्थसंचयान्' धनसमृद्धीः 'ईहन्ते' चेष्टन्ते। कीदृशान्। 'कामभोगार्थान्' विषयास्वादप्रयोजनान्। कथमीहन्ते। 'अन्यायेन' न्यायः शास्त्रीयाधिकारिदेशकालावस्थाद्यपेक्षमुख्यकल्पानुकल्पविहितस्ववृत्तनियमस्तं विना। कीदृशाः सन्त एवं कुर्वन्ति। 'चिन्तां' अर्थार्जनविषयं ध्यानम् 'अपरिमेयां' तत्तृष्णाया आनन्त्यात् बहुविधां, किन्तु 'प्रलयान्तां' प्रलयो विनाशः शरीराभावोऽन्तोऽवसानं यस्यास्तां तादृशीम् 'उपाश्रिताः' अवलम्बितवन्तः। तथा 'कामोपभोगपरमाः' काम्यन्त इति कामा विषयसुखानि, तेषामुपभोगः सततमनुभवनं परमः फलत्वेन

१ 'पवर्तनेन' ख.। २ 'आलम्बितवन्तः' ख.।

प्रकृष्टो येषाम्। अत एवच 'एतावत्' कामोपभोगमात्रमिह सारः 'इतिनिश्चिताः' निःसंशयबुद्धयः। अत एव तद्विषयाभिराशाभिर्मनोरथैरेव पाशशतैर्बन्धनरज्जुसमूहैः 'बद्धाः' संयता विघ्नितविषयान्तरस्वातन्त्र्याः, ततश्च कामक्रोधौ रागद्वेषाविष्टानिष्टविषयौ परायणमाश्रयो येषां, ते तथाविधाः ॥ ११–१२ ॥

किंच—

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥
अनेकचित्ता विभ्रान्ता मोहस्यैव वशं गताः।
प्रसक्ताः कामभोगेषु पतन्ति निरयेऽशुचौ ॥ १६ ॥

इति एवंविधेनापि अज्ञानेन तत्त्वार्थावबोधाभावेन[1] विमोहिता वैचित्त्यमापादिताः सन्तः 'अशुचौ' अत्यन्तामेध्ये 'निरये' गर्भवासादौ निपतन्ति निमज्जन्ति पुनःपुनर्जायन्त इत्यर्थः। कीदृशेन अज्ञानेन। 'अद्य' अस्मिन् दिने तावत् 'इदं' धनादिवस्तु 'मया लब्धं' स्वीकृतम्। 'इमं' च मे चेतसि स्थितं 'मनोरथम्' अभिलषितं वस्तु 'प्राप्स्ये' इदानीमधिगमिष्यामि। 'इदं' तावत् 'धनं' सुवर्णादि 'अस्ति' विद्यते। 'इदं'[2] च अन्यत् रत्नादि 'भविष्यति' स्वत्वमापत्स्यते। तथा 'असौ' कश्चित् रिपुर्व्यापादितः, अतः परानपि तैस्तैरुपायैर्व्यापादयिष्यामि। तथा 'अहमीश्वरः' द्रव्यपुरुषादीनां स्वामी। तथा 'अहं भोगी' विषयसुखानुभविता।

१ 'तत्त्वा प्रबोधा' ख. पाठः। २ 'इत्थम्' ख.।

'सिद्धः' लब्धप्रतिष्ठोऽहम् । तथा 'बलवान्' सामर्थ्ययुक्तोऽहम् । तथा 'सुखी' स्वीकृताभिलषितविषयः । तथा 'आढ्यः' धनवान् 'अभिजनवान्' कुलीनोऽहम् । किं बहुना 'कः' परो 'मया' तुल्यो विद्यते । तथा 'यक्ष्ये' यज्ञानाचरिष्यामि । तथा 'मोदिष्ये' हर्षमनुभविष्यामि,—इत्येवंविधैर्भूतवर्तमानभविष्यत्कालभाविषु शरीरविषयादिषु अनित्येषु भावेषु विकल्पैरनेकं प्रतिक्षणं भिद्यमानत्वात् बहुरूपं चित्तं येषां, ते तथा; अत एव 'विभ्रान्ताः' तत्त्वावगमाभावात् विशेषेण भ्रान्ता अनवस्थिताः, यतो 'मोहस्यैव' तमोरूपस्य अज्ञानस्य 'वशं गताः' तत्पारतन्त्र्यं प्राप्ताः।ततश्च कामानां शब्दादिसुखानां भोगेषु अनुभवेषु 'प्रसक्ताः' अनन्यपरत्वरूपेण[2] प्रकर्षेण सक्ता निमग्नचित्ताः ॥ १३—१६ ॥

किंच—

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥
अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

'ते' पूर्वोक्तविशेषणाः रजस्तमःप्रधानासुरसर्गभाजो जना 'यजन्ते नाम'। नामशब्दोऽलीकपर्यायः। तेन अलीकमेव निष्फलमेव यजन्ते यागक्रियामनुतिष्ठन्तीत्यर्थः । कुतो निष्फलमेव । यत एवंविधाः सन्तो 'दम्भेन' उक्तलक्षणेन व्याजेन शास्त्रोक्तं विधिं परित्यज्य यजन्ते । किंविधाः सन्तः । 'आत्मसंभाविताः' आत्मनैव स्वयमेव संभाविताः वयमेवंविधगुणविशिष्टा इति गृहीताभिमानाः, नतु गुणदोषविचारनिपुणेन परेण केनचित् संभाविताः । तथा 'स्तब्धाः' प्रणतिविषये प्रह्वत्वरहिताः, यतो धन-

१ 'विद्यमान' ख. । २ 'अत्यन्तपरत्व' ख. ।

समुद्गताभ्यां मानमदाभ्यामहङ्कारात्मकाभ्यां युक्ताः। तथा अहङ्कारादीन् संश्रिताः,—इति गतार्थम्। तथाविधाः सन्तो 'मां' परमात्मानं सर्वगतमज्ञानमोहितत्वादप्रत्यवमर्शेन 'प्रद्विषन्तः' अप्रीतिहेतुत्वेन[1] अध्यवस्यन्तः, यतो 'अभ्यसूयकाः' नास्तिकत्वात् निन्दापराः ॥ १७–१८ ॥

एवंविधान्—

तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

'तान्' पुरुषापसदान् 'क्रूरान्' दारुणाचारान् नास्ति आत्मा, नास्ति ईश्वरादि,—[2] इत्यादिना मां 'द्विषतः' मां प्रति अप्रीतिं चित्तवाक्चेष्टाभिः प्रथयतः सतः 'अजस्रं' नित्यमेव 'संसारेषु' कर्मभूमिषु तासु तासु 'आसुरीषु' दुष्टकर्माधिकारहेतुत्वात् 'अशुभासु' पापात्मिकासु 'योनिषु' गर्भवासेषु 'क्षिपामि' न्यस्यामि। ते नास्तिकत्वदुष्टसंकल्पाः सन्त एवंविधाः पुनः पुनर्जायन्त इत्यर्थः ॥१९॥

ते च—

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

एवंविधा एते जना 'आसुरीं' यथोक्तां 'योनिं' जन्मभूमिं भूयोभूयः प्राप्ताः प्रतिजन्म पूर्वसंस्कारदाढ्र्यात् 'मूढाः' ज्ञानरहिताः सन्तो 'मां' परमात्मानमनधिगम्यैव ततो योनेरन्यां 'अधमां' निकृष्टां 'गतिं यान्ति' प्राप्नुवन्ति ॥ २० ॥

कस्मात् ते एवंविधास्त्वां न प्राप्नुवन्तीत्याह—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यज ॥ २१ ॥

१ 'हेतुना' ख.। २ 'ईश्वर इत्यादिना' ख.।

'आत्मनः' परस्य तत्त्वस्य 'नाशनम्' अदर्शनकारणं, येन हेतुभूतेन आत्मा नश्यति न दृश्यते तत् त्रिप्रकारं 'नरकस्य' कर्मभूमिफलभेदेन उभयप्रकारस्य[1] निरयस्य 'इदं द्वारं' प्रवेशकर्मकृत्। 'कामः' सुखानुशायी रागलक्षणः क्लेशः। तथा 'क्रोधः' द्वेषलक्षणः। तथा 'लोभः' उत्तरोत्तरं विषयेषु गर्धः। यत एते सर्वे आसुरा जना एतैः कामादिभिर्युक्ताः सन्तो मामप्रपश्यन्त एव दुर्गतिं गच्छन्ति, 'तस्मात्' हेतोस्त्वम् 'एतत् त्रयं' परिहर दैवसर्गसंभवत्वादेतद्युक्तमात्मानं मा मंस्था इत्यर्थः ॥ २१ ॥

यस्मात्—

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

'एतैः' कामादिभिर्गुणात्मकैर्दोषैर्निर्गुणस्वभावेन निसर्गशुद्धेन आत्मन अत्यन्तासंबद्धैरज्ञानोपलक्षणतिमिराविर्भावमार्गैः 'त्रिभिः-र्वियुक्तः'[2] हेयतया प्रतिपन्नैः सद्भिः पृथग्भूतो 'नरः' मुमुक्षुर्दैवसर्गभाक् पुरुषो हितं यथोक्तं ज्ञानकर्मानुष्ठानरूपं 'आचरति' 'ततः परां' प्रकृष्टां परमात्मसमापत्तिरूपां 'गतिं' सिद्धिमाप्नोति २२

एवंविधस्य च श्रेयसश्चरणं शास्त्रोक्तविधानरूपम्, ततस्तत्परेण भवितव्यमित्याह—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

'यः' पुरुषस्तत्तत्फलनिष्पत्तिहेतुं तत्तत्क्रियादिविषयं शास्त्रेण चोदितं विधिं तत्तदितिकर्तव्यतारूपं विधानम् 'उत्सृज्य' उदस्य 'कामकारतः' स्वाच्छन्द्यात् 'वर्तते' व्यवहरति[3], 'स न'

---

१ 'द्विप्रकारस्य' ख.। २ 'विमुक्तः' ख.। ३ 'ते' ख.।

आरब्धक्रियानिष्पत्तिरूपां 'सिद्धिं' लभते। ततश्च तत्फलभूतं 'सुखं' स्वर्गादिभोग्यां निर्वृतिमपि 'न' लभते, नच 'परां गतिं' अपवर्गलक्षणां लभते॥ २३॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
कृत्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥ २४॥

'तस्मात्' उक्तात् कारणात् इदं कार्यमिदं न कार्यमिति व्यवस्थायां शास्त्रमेव एकं 'ते प्रमाणम्'। शास्त्रं हि नाम सदा साक्षात्कृतयथास्थितार्थतत्त्वस्य परमगुरोः परमात्मनः परस्य आप्तस्य वचनम्। अतस्तदेव अविसंवादत्वात्[1] प्रमाणं कृत्वा शास्त्रोक्तेन विधानेन चोदितं 'कर्म' त्वम् 'इह' कर्मभूमौ 'कर्तुं' स्वजातिविहितं कर्म अनुष्ठातुम् 'अर्हसि' इत्योम्॥ २४॥

स्फीतालोकां दिनरुचिमिव द्योतयत्याशु दैवीं
घोरां रात्रिमिव मुकुलयत्यासुरीं यश्च दृष्टिम्।
आत्मादित्यं तमुदितमतः षोडशाध्यायशैलाद्-
दृष्ट्वैव द्राग् भवत भविनो विद्रवन्मोहनिद्राः॥

इति श्रीमद्राजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे षोडशोऽध्यायः॥ १६॥

---

१ 'वादकत्वात्' क.

# अथ सप्तदशोऽध्यायः ।

तदनेन इदमुक्तम्—अपर्यालोचितसकलशास्त्रपौर्वापर्येण शास्त्रैकदेशमात्रमाश्रित्य युद्धलक्षणस्वकर्मपरित्यागाय द्वितीये यदुपन्यस्तं त्वया, तच्छास्त्राभासत्वादशास्त्रमेव; अतो यथाप्रतिपादितशास्त्रनिश्चयावहितेन[1] त्वया भवितव्यमिति सिद्धान्ते उक्ते संशयानोऽर्जुन उवाच—

ये शास्त्रविधिमुत्सृज्य वर्तन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

'ये' केचित् कर्मणि शास्त्रोक्तं विधिं परित्यज्य 'श्रद्धया' निर्विकल्पफलसंभावनया व्याख्यातलक्षणया 'अन्विताः' सन्तः 'वर्तन्ते' क्रियासु व्यवहरन्ति । 'तेषां का निष्ठा' का सिद्धिः । किं 'सत्त्वं' किं सात्त्विकी सिद्धिस्तेषामित्यर्थः । आहोस्वित् 'रजः' राजसी, अथ किं 'तमः' तामसी ॥ १ ॥

अत्र उत्तरं भगवानुवाच—

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति ताः शृणु ॥ २ ॥

यया श्रद्धया एव केवलया[2] अन्वितानां सिद्धौ त्वं संशयितः 'सा त्रिविधा भवति' । तद्यथा 'सात्त्विकी राजसी तामसी चेति' । यतो 'देहिनां' मायोद्भावितनानादेहाहंप्रत्ययनिबन्धनभेदानां जीवानां 'स्वभावजा' असौ । ते हि दैवासुरसर्गभेदेन प्रतिपादितस्वरूपाः । तत्र दैवसर्गभाजां सात्त्विकः सत्त्वादागतः सत्त्वगुणहेतुकः स्वभावः स्वरूपं तेषां श्रद्धा तादृश्येव । तथा आसुरसर्गभाजां रजस्तमोगुणप्राधान्यात् तद्धेतुको द्विप्रकारः

१ 'वहितत्वेन' ख. । २ 'केवलान्वितानां सिद्धौ त्वं संशयमितः' ख. ।

स्वभावः राजसस्तामसश्च; श्रद्धापि तेषां तादृश्येव । तेन इदमुक्तं भवति । सात्त्विकस्वभावानां सात्त्विकी श्रद्धा, सा शास्त्रविध्युपपन्ना एव भवति । या तु राजसस्वभावानां, सा राजसी शास्त्रविध्याभासयुक्ता भवति; न सम्यग्विधानोपपन्ना । तामसी तु शास्त्रविधिहीनैवेति विभागस्य वक्ष्यमाणत्वात् । अतो या शास्त्रविधिहीना, सा सात्त्विक्येव न भवति । या तु शास्त्रविधियुक्ता, सा न राजसी भवति, नापि तामसी,—इत्येवं विभक्तस्वरूपाः 'ताः' श्रद्धा मया विभज्य उच्यमानास्त्वमवधारयेति ॥ २ ॥

इति उपक्रम्य स्वभावश्रद्धयोरन्योन्यकारणत्वं तावदाह—

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

इह 'सर्वस्य' देहिनः समस्तस्य जीववर्गस्य 'सत्त्वानुरूपा' स्वभावानुसारिणी 'श्रद्धा भवति' । तेन यस्य सत्त्वं स्वभावः—चित्तं सत्त्वगुणप्रधानं भवति, तस्य सात्त्विकी श्रद्धा भवति; एवं रजोगुणप्रधानचित्तस्य राजसी, तमोगुणप्रधानचित्तस्य तामसी,—इत्यानन्त्येऽपि जीवानामपि त्रैविध्येन संक्षिप्य उक्ता । वस्तुतः सत्त्वादीनां गुणानामंशांशिकया तारतम्यात् यथा जीवचित्तानामानन्त्यं, तथा श्रद्धाया अपि आनन्त्यं, तत्पूर्वकत्वेन च अनुष्ठितयागकर्मणां[१] फलस्यापि आनन्त्यम् । इत्थं श्रद्धायाः सत्त्वादिरूपत्वं व्याख्यातम् । इदानीं सत्त्वस्य स्वभावस्य श्रद्धानुरूपत्वं व्याचष्टे 'अयं पुरुषः' नानाकार्यकारणसंघातमात्रनिबद्धात्मभावः 'श्रद्धामयः' श्रद्धाप्रकृतिकः । ततश्च 'यः' पुरुषः 'यच्छ्रद्धः' या सात्त्विक्यादिका श्रद्धा यस्य, स तादृशः 'स एव' भवति । यस्य सात्त्विकी श्रद्धा, स सात्त्विकः, यस्य राजसी

१ 'अनुष्ठितानां कर्मणां' ख. ।

श्रद्धा, स राजसः, यस्य तामसी श्रद्धा, स तामसः इति। किमनेन उक्तं भवति। पूर्वं सत्त्वानुरूपा श्रद्धा सर्वस्य भवतीति उक्तम्, इदानीं तु श्रद्धानुरूपं सर्वस्य सत्त्वं भवतीति प्रतिपादितम्। अतः श्रद्धासत्त्वयोः पुरुषगतयोः सात्त्विकत्वा[1]दन्योन्यकारणत्वमनादिप्रबन्धप्रवृत्तमवस्थितमिति अत्र तात्पर्यम् ॥ ३ ॥

तमेव त्रिप्रकारायाः श्रद्धाया अभिव्यञ्जकं क्रियाविशेषमाह—

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
भूता[2]न् प्रेतपिशाचांश्च यजन्ते तामसा जनाः ॥ ४ ॥

'सात्त्विकाः' सत्त्वगुणमयचित्ताः सत्त्वगुणमयान् 'देवान्[3]' इन्द्राग्निप्रजापतिप्रभृतीन् 'यजन्ते' शास्त्रोक्तविधिपूर्वकं पूजयन्ते। एवं 'राजसाः' यक्षादीन् शास्त्राभासविधिपूर्वकं यजन्ते। 'तामसाश्च' प्रेतादीनशास्त्रविहितेन एव विधानेन यजन्ते ॥ ४ ॥

एते च राजसास्ताम[4]सा आसुरा इति तेषां चेष्टितमाह—

अशास्त्रविहितं घोरं तपस्तप्यन्ति ये जनाः।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतनम्।
मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥ ६ ॥

'तान्' एवंविधान् कर्मभूमिजन्मनः पुरुषान् 'आसुरनिश्चयान् विद्धि'। आसुरो रजस्तमःप्रधानत्वादसुरसंबन्धी तत्सदृशो निश्चयो निष्ठा येषां, तांस्तथाविधान् जानीहि। कांस्तान्। 'ये जना घोरं' दुःसहं चित्तशरीरक्लेशकारणत्वात् दारुणं 'तपस्तप्यन्ति' विशिष्टफलाभिसन्धानेन नियमविशेषमाचरन्ति। कुतो दारुण-

---

१ 'त्वादन्योन्यन्यस्य' क.। २ 'भूतप्रेत' ख.। ३ 'देवांश्च' ख.।
४ 'मसाश्च' ख.।

मिति हेतुगर्भं विशेषणमाह 'अशास्त्रविहितम्' इति । शास्त्रेण सर्वदा सर्वविशिष्टजनाविगीतानुष्ठानेन वेदादिना विहितमनुष्ठितं शास्त्रविहितम् । एवंहि शास्त्रीयो विधिः—

'यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा ।
तथा तपसि वर्तेत न मूढव्रतमाचरेत् ॥'

इति । एवंविधहेतुनियमनैरपेक्ष्येण फलप्राप्तितृष्णात्वरितचेतसो राजसास्तामसाश्च स्वमनीषिकया एव दारुणं तपश्चरन्ति । यतो 'दम्भाहङ्कारसंयुक्ताः' दम्भेन उक्तलक्षणेन दृष्टमात्रफलेन कर्मणा, तथा अहङ्कारेण 'अहं शास्त्रोक्तं सम्यक् बुध्ये' यद्वा 'अनुतिष्ठामि शास्त्रार्थम्' इत्यात्मसंभावनात्मकेन अभिमानेन संयुक्ताः समन्विताः । तथा 'कामरागबलान्विताः' कामेषु विषयभोगेषु रागोऽभिलाषस्तस्य बलमशास्त्रविहितक्रियाप्रवर्तने[1] सामर्थ्यं, तेन अन्विता युक्ताः । तेन घोरेण तपसा किं कुर्वाणाः । 'अचेतनं' जडं प्राकृतं 'भूतग्रामं' पृथिव्यादिसंघातं, शरीरे देहे स्थितं तदधिष्ठातृभावेन वर्तमानं 'मां' आत्मानं 'कर्षयन्तः' तात्त्विकस्वरूपानवबोधेन क्षपयन्त इव तेषां तथाविधानां दारुणस्य तपसो देहचित्तव्यवधानमात्रमेव फलमित्यर्थः ॥ ५-६ ॥

न केवलमेवंविधेन चेष्टितेन आसुराणामेव स्वभावोऽनुमीयते, यावत् दैवस्य आसुरस्य च सर्वस्य कस्यचित् जन्तोराहारादिभिरपि क्रियाविशेषैर्दृष्टादृष्टफलविशेषैः स्वभावोऽनुमीयत इत्याह—

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥**

आहारादीनां त्रिविधत्वं सात्त्विकत्वादित्रिविधपुरुषप्रियत्वात् । शिष्टं व्याख्यातप्रायम् ॥ ७ ॥

---

१ 'क्रियानुष्ठानसामर्थ्यं' ख. ।

अथ एषां भेदकथनार्थमाह—

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः॥८॥

सात्त्विकानां सत्त्वगुणोद्रिक्तश्रद्धानां प्रिया अभिमता एवंविधा 'आहाराः'। कीदृशाः। आयुषो जीवितस्य, सत्त्वस्य बुद्धेः, बलस्य सामर्थ्यस्य, आरोग्यस्य व्याधिरहितत्वस्य, सुखस्य निर्वृतेः, प्रीतेः तृप्तेस्तत्कारणभूताया विवर्धनाः परिपोषकाः; 'रस्याः' आस्वादनीयाः 'स्निग्धाः' बृंहणाः 'स्थिराः' साराः 'हृद्याः' हृदयानुकूलाः ॥ ८ ॥

अथ राजसप्रियानाह—

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

'राजसस्य' रजःप्रधानश्रद्धस्य 'इष्टाः' अभिमता एवंविधा 'आहाराः'। कीदृशाः। कटवस्तिक्तरसा निम्बादयः। तिक्ते हि कटुशब्दव्यवहारो दृष्टो मुनिना—

'यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥'

इति। अम्लाश्शुक्ताः, लवणाः क्षाराः, अत्युष्णा उत्कटोष्णाः, तीक्ष्णा ऊषणा मरिचादयः, रूक्षाः स्नेहशून्याः, विदाहिनः उष्णवीर्या अत एव मनःशरीरक्लेशहेतुत्वात् दुःखशोकयोर्व्यथानुशोचनयोरामयानां व्याधीनां च दातारः ॥ ९ ॥

अथ तामसप्रियमाहारमाह—

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

तामसस्य तमःप्रधानस्वभावश्रद्धस्य एवमशनमभिमतम्।

कीदृशम्। 'यातयामं' अतिक्रान्तबहुकालं सत् 'गतरसं' विनष्टास्वादम्, तथा 'पूति' दुर्गन्धि, तथा 'पर्युषितं' अतिक्रान्तरात्रिकं यद्भक्ष्यत्वेन उक्तम्, 'उच्छिष्टं' दम्पतिभुक्तशिष्टं अन्येन वा जुष्टम्, 'अमेध्यं' स्वभावत एव अशुद्धमशुद्धसंपर्कात् वा। सात्त्विकस्य अपि अवस्थावशात् कट्वादिराजसाहारप्रियता संभवतीति व्यवहारदर्शनात् स्वभावमात्रविषय एव विभागनियमो वेदितव्यः ॥ १० ॥

इदानीं यज्ञादीनां त्रैविध्यमाह। तत्र यज्ञस्य तावत्—

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमित्येव मनः समाधाय स सात्त्विकः ॥ ११ ॥

'स सात्त्विकः' सात्त्विकपुरुषानुष्ठेयत्वात् सत्त्वहेतुकः 'यज्ञः' यागविधिरुच्यते। कोऽसौ। फलं दृष्टादृष्टं सौभाग्यं काङ्क्षति प्रार्थयते यः स फलाकाङ्क्षी, तद्विपरीतस्तु अफलाकाङ्क्षी; तेन तथाविधेन निरभिसन्धिना ज्ञानवता मुमुक्षुणा 'य इज्यते' अनुष्ठीयते। कीदृशः। 'विधिदृष्टः' विधीयतेऽनेन कार्यमिति विधिः शास्त्रं, तस्मिन् विधौ शास्त्रे दृष्टो विभावितेतिकर्तव्यतास्वरूपः। अफलाकाङ्क्षिणा च इज्यते चेति विप्रतिषेधं निराकर्तुमाह कथमिज्यते। 'यष्टव्यं' वर्णाश्रमविभागेन शास्त्रचोदितं सहजं यागाख्यं कर्म अवश्यकर्तव्यमेव,—इति चित्तं समाहितं कृत्वा, नतु फललिप्सया। यदपि उच्यते—न निष्कामस्य क्रिया संभवतीति, तत्र ब्रूमः—नहि इच्छामात्रस्य प्रतिषेधो निष्कामता, किन्तु दृष्टानुश्रविकभोगविषयसंकल्पाभावो निष्कामता इह विवक्षिता ॥ ११ ॥

---

१ 'वादेव' ख.। २ 'कृत्वानन्तफल' ख.।

अथ राजसं यज्ञमाह—

अभिसन्धाय तु फलं दम्भार्थमपि चैव यः ।
इज्यते विद्धि तं यज्ञं राजसं चलमध्रुवम् ॥ १२ ॥

'तम्' एवंविधं 'यज्ञं राजसं' रजःप्रधानबुद्धिना रजःप्रधान-श्रद्धेन च कर्त्रा कृतत्वात् रजोगुणात्मकफलम्, अत एव 'चलं' निश्चयाभावादव्यवस्थितं, फलव्यभिचाराच्च 'अध्रुवम्' अनावश्यकम्। कं तम्। यः फलं स्वर्गादिभोग्यमभिसन्धाय संकल्प्य तथा 'दम्भार्थं' दम्भोऽदृष्टं मुखे कृत्वा दृष्टफलविषया क्रिया अर्थः प्रयोजनं यत्र तथा 'इज्यते' अनुष्ठीयते ॥ १२ ॥

अथ तामसमाह—

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

विधिना[1] शास्त्रोक्तया इतिकर्तव्यतया रहितम्। तथा 'असृष्टान्नम्' असृष्टं पाकादिसंस्कारविरहात् विरसमन्नादि यत्र। तथा 'मन्त्रहीनं' तत्तत्क्रियाविहितेन रहितम्। तथा 'अदक्षिणम्' दक्षिणालक्षणेन प्रधानेन अङ्गेन शून्यम्। तथा श्रद्धया उक्तलक्षणया विनाकृतम्। एवंविधं यज्ञं तामसपुरुषकर्तृकमाहुः ॥१३॥

अथ सात्त्विकत्वादिभेदेन तपसस्त्रैविध्यं प्रतिपाद्य,[2] इदानीं शारीरादिभेदेन तावत् तस्य त्रैविध्यमाह। तत्र शारीरं तावत्—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

एतत् 'शारीरं' शरीरसंबन्धि 'तपः' कथ्यते । किं तत्। देवादीनां पूजनं, 'शौचं' मृज्जलादिना शरीरशुद्धिः, 'आर्जवं'

---

१ 'विधिहीनं शास्त्रोक्तेतिकर्तव्यतारहितं' ख. पाठः। २ 'प्रतिपाद्यते तत्र शारी'।

कायव्यापारविषयमकौटिल्यं, 'ब्रह्मचर्यं' प्रसिद्धम्, 'अहिंसा' हननक्रियाभावः । पूजादीनां कायव्यापारनिर्वर्त्यत्वात् शारीरमेतत् तपः ॥ १४ ॥

अथ वाचिकम्—

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

वागुनिर्वर्त्यत्वात् वाक्प्रकृतिकमेतत् तप उच्यते । किं तत् । स्वभावत एव माधुर्यात् 'अनुद्वेगकरं' परस्य अखेदावहं, तथा 'सत्यं' अवितथं सत् 'प्रियं' मनोज्ञं 'हितं' च कल्याणपर्यवसायि 'वाक्यं' वचनं, तथा स्वाध्यायस्य स्वशास्त्रपाठस्य अभीक्ष्णमावर्तनम् ॥ १५ ॥

अथ मानसं—

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

'एतत् तपो' मनोनिर्वर्त्यत्वात् 'मानसमुच्यते' । किं तत् । 'मनःप्रसादः'[1] स्वभावत एव रागद्वेषादिदोषरहितत्वादकलुषचित्तत्वं, 'सौम्यत्वं' प्रशान्तता, 'मौनं' यद्यपि मुनिभावो मुख्यया वृत्त्या, तथापि वाङ्नियमे रूढं, तच्च संकल्पशुद्धिहेतुत्वात् मानसं तपः । तथा 'आत्मविनिग्रहः' आत्मनोऽन्तःकरणस्य निषिद्धेभ्यो विषयेभ्यो विनिग्रहो नियमनम् । तथा भावस्य आशयस्य संशुद्धिरनार्जवादिकलङ्काभावात् नैर्मल्यम् ॥ १६ ॥

अथ त्रिविधमपि एतत् सात्त्विकादिभेदात्पुनस्त्रिविधमाह । तत्र सात्त्विकं तावत्—

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

---

१ 'स्वमनसः' ख. ।

शारीरादिभेदेन त्रिविधमपि एतत् तप एवंविधं सत् सात्त्विकं भवति। कीदृशम्। 'श्रद्धया' उक्तलक्षणया फलसंभावनया 'परया' सात्त्विक्या 'उपेतं' युक्तम्। अत एव फलाकाङ्क्षारहितैः 'युक्तैः' समाहितैराचरितम् ॥ १७ ॥

अथ राजसं—

सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

'तदिह तपो राजसं प्रोक्तम्'। किं तत्। 'यत्' सत्काराद्यर्थं 'क्रियते'। सत्कारादीनां त्रयाणां मनोवाक्कायभेदात् यथाक्रमं त्रित्वमवसेयम्। तेन परतः प्रसन्नचित्तात् सत्कारो बहुमानो मेऽस्तु, तथा स्तुत्यादिना वाग्व्यापारेण मानः, तथा कायव्यापारेण पूजनं ममास्तु,—इत्येवमर्थं दम्भेन उक्तलक्षणेन यत्क्रियते, तदेवमुक्तम्। चलमध्रुवमिति व्याख्यातम् ॥ १८ ॥

अथ तामसमाह—

मूढग्रहेणात्मनो यत्पीडया क्रियते तपः।
परस्योत्सादनार्थं च तत्तामसमुदाहृतम् ॥ १९ ॥

'तत्तामसं तप' उक्तम्। किं तत्। 'यत्' मूढग्रहेण' मूढस्य कार्याकार्यविचार[1]हीनस्य अज्ञस्य सतो यो ग्रहोऽभिनिवेशस्तेन कृतं, तथा स्वचित्तस्य स्वशरीरस्य च 'पीडया' कदर्थनेन यत्कृतं यत् निर्वर्तितं, तथा 'परस्य' द्वेष्यस्य 'उत्सादनार्थं' स्थानच्या[2]वनादिसंपत्तये यत्कृतमिति ॥ १९ ॥

शारीरादिभेदेन त्रिविधस्य तपसः प्रत्येकं सात्त्विकादिभेदात् नवविधत्वं प्रतिपाद्य, इदानीं दानं त्रिविधमाह। तत्र सात्त्विकं तावत्—

---

१ 'हीनज्ञानस्य'। २ 'च्यवन' ख.।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

'तत् सात्त्विकं दानं' सात्त्विकचित्तेन सात्त्विकश्रद्धावता च पुरुषेण निर्वर्तितत्वात्सात्त्विकशब्देन उक्तम्। किं तत्। 'यत्' एवंविधेषु क्रियाविशेषेषु अधिकृतेन मया तत्तदितिकर्तव्यतोपसंस्कृतं देयमेवेत्येतावदभिसन्धाय 'दीयते'। अत एव कस्मै दीयते। 'अनुपकारिणे' यस्मात् दृष्टविषयोऽदृष्टविषयो वा कश्चिदुपकारो न अपेक्ष्यते, केवलं विध्यर्थानुष्ठानाङ्गतया यः स्थितस्तस्मै यद्दीयते। अत एव तस्य दानस्य विषयमाह 'पात्रे' इति जातिकुलविद्याकर्मपङ्क्तिपावनत्वादिशरीरगुणसंपन्नः पात्रमुच्यते, तद्विषयत्वेन यद्दीयते, तथा 'देशे' पुण्यसरित्तीर्थायतनादौ, तथा 'काले' विषुवद्ग्रहोपरागादौ यद्दीयते; तत्सात्त्विकं दानम्। नित्यनैमित्तिकक्रियाङ्गत्वेन व्यवस्थितविशिष्टविधिपूर्वकस्य दानस्य यज्ञेऽन्तर्भावात् पृथग्दाननिर्देशः पूर्तादिदानपरिग्रहार्थो वेदितव्यः ॥ २० ॥

अथ राजसं—

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमिति स्मृतम् ॥ २१ ॥

'तद्राजसं दानं स्मृतम्'। किं तत्। 'यत्प्रत्युपकारार्थं दीयते' प्रतीपमुपकारः प्रत्युपकारस्तदर्थं तत्प्रयोजनतया, एतस्मादिहैव मम कश्चिदुपकारः संपत्स्यत इत्यभिसन्धाय यद्दीयते; तथा 'फलं' वा पारलौकिकं 'उद्दिश्य' संकल्प्य दीयते। कीदृशम्। 'परिक्लिष्टं' स्वल्पं कृच्छ्रप्राप्यं वा ॥ २१ ॥

अथ तामसमाह—

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

'तत्तामसं दानम्'। किं तत्। देशकालपात्रहीनतया असत्कारेण अवज्ञया यद्दीयते सात्त्विकविपरीतमित्यर्थः। तदेवं सात्त्विकानि यज्ञतपोदानानि दैवसर्गाभिव्यञ्जकानीति अत्र तात्पर्यम् ॥२२॥

ततश्च य एते ब्रह्मप्राप्तिप्रसवमनसो दैवसर्गभाजो, ये च एते संसारबन्धाभिमुखचेतसस्तद्विपरीतवृत्तयः, तथा उभयेषां यज्ञादिविषयां ज्ञानाज्ञाननिबन्धनत्वात् द्विप्रकारां स्थितिं क्रमेण प्रतिपादयितुमाह—

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्रह्मणा तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

इह 'ब्रह्मणः' परमात्मलक्षणस्य परस्य तत्त्वस्य 'त्रिविधः' त्रिप्रकारो 'निर्देशः' स्वरूपाभिधानं परमार्थविद्भिः स्मर्यते स्म। के ते त्रयः प्रकाराः। 'ॐ तत् सदिति'। तत्र ॐमिति चित्प्रकाशमात्रस्य ब्रह्मस्वरूपस्य वाचकं पदम्। अनेन च पदेन तेनैव परमगुरुणा व्यस्तसमस्तरूपवाचकतया नियमितेन यथा तादृक्[1] सत्स्वरूपमभिधीयते, तथा मात्रात्रयार्धमात्राव्याप्तिप्रदर्शनक्रमेण तत्र तत्र रहस्यशास्त्रे व्याख्यातमेतत्। तदित्यनेन तस्य ब्रह्मणस्तादृक्स्वरूपप्रत्यवमर्शात्मकः[2] सततव्यभिचारी स्वधर्मोऽभिधीयते, नहि तस्य स्वसंवेदनमात्रसंवेद्यस्य तदितिसर्वनामव्यतिरेकेण शब्दान्तरप्रतिपाद्यं रूपं भवितुमर्हति। सदित्यनेन पदेन अनन्यसाधारणताविद्यमानताशोभनतालक्षणं ब्रह्मणः स्वरूपमभिधीयते। तदेवंपदत्रयप्रतिपाद्यसकलस्वरूपेण 'तेन ब्रह्मणा' परमेश्वरेण 'वेदाः' समस्तक्रियाविषयविशिष्टेतिकर्तव्यताकलापवाचकाः समस्तदेशकालपुरुषाव्यभिचारिस्वरूपाः शब्दराशयः, तथा यज्ञवतामुपक्रमविभक्ता नित्यादयो यागक्रियावि-

१ 'तादृक् स्वरूपं ख.। २ प्रत्यवमर्शकः सततव्यभिचारिस्वधर्मः ख.

शेषाः 'पुरा' नित्यत्वात् सर्वदैव पूर्वकालं 'विहिताः' निर्मिताः। ततः सदानिर्मीयमाणत्वात् तेषां नित्यत्वम् ॥ २३ ॥

यतश्च एवंविधस्य ब्रह्मण ओमित्येवमादयः शब्दा वाचकाः—

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥

'तस्मात्' हेतोः 'ब्रह्मवादिनाम्' तत्त्वमसीत्येवंवदनशीलानां ज्ञानिनां 'ओमिति' एतन्मन्त्रपदं यथोक्तब्रह्मस्वरूपवाचकं 'उदाहृत्य' विशिष्टेन समाधिना उच्चार्य यज्ञक्रियाः 'सततं प्रवर्तन्ते' प्रसरन्ति। उदाहरणक्रियायाश्च यज्ञदानादिक्रियापेक्षं पौर्वकाल्यमिति न भिन्नकर्तृत्वमत्र अवसेयम् । कीदृश्यः क्रियाः । 'विधानोक्ताः' विधीयन्तेऽस्मिन्विविधा यज्ञादयो भावा इति विधानं वेदादिशास्त्रं, तेन उक्ताः प्रतिपादितस्वरूपाः । किमनेन उक्तं भवति । मुख्यदैवसर्गभाजां मुमुक्षूणां ब्रह्माद्वैतभावनया सर्वाः क्रियाः प्रवर्तन्त इति ॥ २४ ॥

किंच—

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥२५॥

'तदिति' एतन्मन्त्रपदमविनश्वररूपप्रत्यवमर्शार्थमुदाहृत्य पूर्ववदुच्चार्य अपवर्गमभिलषद्भिः[1] सात्त्विकैर्दैवसर्गभाग्भिर्यज्ञादयः क्रियाः 'क्रियन्ते' अनुष्ठीयन्ते । कथम् । फलं स्वर्गादिविनश्वरभोगलक्षणां सिद्धिं 'अनभिसन्धाय' असंकल्प्य । ते हि[2] नित्यनिरुपमानन्दमयब्रह्मस्वरूपप्रत्यवमर्शात्मकैकफलाभिकाङ्क्षिणः[3] ॥ २५ ॥

---

१ 'वर्गार्थिभिः' ख. । २ 'तैर्हि' ख. । ३ 'मभिकांक्ष्यम्' ख.

अपि च—

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ गीयते ॥ २६ ॥

'सद्भावे' सतो विद्यमानस्य नित्यस्य भावः सत्त्वं, तस्मिन्, तथा 'साधुभावे' साधोः शोभनस्य भावः सत्त्वं, तस्मिन्नित्येतयोरर्थयोः 'सदित्येतत्' मन्त्रपदं वाचकत्वेन 'प्रयुज्यते' । तथा 'प्रशस्ते' ज्यायसि 'कर्मणि' व्यापारविशेषे 'सच्छब्दो' वाचकत्वेन 'गीयते' शब्द्यते ॥ २६ ॥

यत एवमतः—

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

यज्ञादिषु यथोक्तब्रह्मभावनामयी 'स्थितिः' प्रतिष्ठा इह परमार्थसती परमशोभना 'सदिति' अनेन शब्देन 'उच्यते' प्रतिपाद्यते । 'तदर्थीयं' यज्ञादिप्रयोजनं 'कर्म' प्रशस्तो व्यापारविशेषः 'सदिति' अनेनैव पदेन कथ्यते ॥ २७ ॥

एवं मोक्षकाङ्क्षिणां सात्त्विकानां यज्ञादिविषयां ब्रह्मसमापत्तिहेतुं स्थितिं प्रतिपाद्य, इदानीमासुराणां संसारबन्धहेतुं च एतद्विपरीतां स्थितिं प्रतिपादयितुमाह—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥

ज्ञानशून्यजनाव्यभिचारिण्या 'अश्रद्धया' परमार्थसद्ब्रह्मासंभावनया 'हुतं' यत् यज्ञविधिर्यो विहितः, तया 'दत्तं तपश्च तप्तं' दानतपसी अनुष्ठिते, अन्यद्वा सुकृतं किञ्चन 'कृतं'; तत्सर्वं 'असदिति' उच्यते न तत् नित्यं, नापि शोभनम् । कुतः । यतस्तत् 'अश्रद्धया' अनुष्ठितं वस्तु 'न प्रेत्य' न परलोके सद्वा साधु वा,

'नच इह' यतस्तत्फलस्य पारलौकिकस्य ऐहिकस्य वा विनश्वरत्वादसत्त्वमसव्याधिदोषयोगाच्च असाधुत्वम् । अतस्तथाविधैः कर्तृभिः कृतानां यज्ञादीनां संसारबन्धलक्षणमसदेव फलं बोद्धव्यमिति दैवासुरसर्गाभिव्यञ्जकयज्ञादिक्रियाभेदप्रतिपादनस्य प्रयोजनं यथोक्तात्मज्ञानलक्षणपरमरहस्योपदेशविषयाविषयविभागविस्तरं वेदितव्यमित्योम् ॥ २८ ॥

अध्यायश्च नगेन्दुकः कविवरस्यायं प्रयोगे नवे
निर्व्यूढः फलितं बिभर्ति सुजनो यस्मिन् वराभ्युद्गमम् ।
श्रद्धाभक्तिसखीसमर्पितनवाकल्पक्रियोद्भासिनीं
सर्वैश्वर्यसमागमाभ्युदयदामासाद्य संविद्वधूम् ॥

इति श्रीमद्राजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे सप्तदशोऽध्यायः ॥ १७ ॥

---

१ 'दसत्त्वमस्तु तद्व्याधि' ख.

## अथाष्टादशोऽध्यायः ।

'मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ।' ( १६।५ ) इति भगवतस्तदनुग्रहक्षणसाक्षात्कृतपरस्वरूपस्य परमगुरोः परमप्रमाणभूतात् वचनादात्मनो यथोक्तदैवसर्गगुणसामग्रीसंपन्नत्वसंभावनया यथोपदिष्टार्थानुष्ठानपात्रतां प्रतिपाद्य, अवश्यकरणीयानां स्वकर्मणामनुष्ठाने समुपजातोत्साहस्तेषामपवर्गफलत्वेन कारणभूतयोः संन्यासत्यागयोः

'ज्ञेयः स नित्यसंन्यासी············ ।' ( ५।३ )

तथा

'यस्य सर्वे समारम्भाः············ ।' ( २।५० )

इत्यादिना च संक्षेपतः पूर्वमवगतार्थयोरधुना विस्तरतः परमार्थं जिज्ञासमानोऽर्जुन उवाच—

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥

संन्यासस्तावत् सम्यक् न्यसनं, तस्य सुष्ठु परिहार एव अर्थः; त्यागस्य च हानमेव अर्थः,—इति अनयोरेकार्थत्वात् किं परस्परपर्यायत्वमुत भिन्नार्थता । तत्कीदृशोऽर्थभेदोऽनयोरिति प्रश्नबीजं हृदि कृत्वा 'संन्यासस्य त्यागस्य च तत्त्वं' परमार्थं 'पृथक्' विवेकेन 'वेदितुं' ज्ञातुम् 'इच्छामि' इति ॥ १ ॥

अर्जुनप्रश्नादनन्तरमनयोरेकार्थतां गर्भीकृत्य उत्तरं भगवानुवाच—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

'कवयः' परावरद्रष्टारः 'संन्यासं काम्यानां कर्मणां त्यागं

विदुः'। काम्यन्त इति कामा विषयभोगास्तेभ्यो हितानि तत्साधनभूतत्वात् तदनुकूलानि यज्ञादीनि कर्माणि काम्यानि उच्यन्ते। तेषां 'त्यागं' परिहारं भोगरूपफलतृष्णाभिसन्धिना अनुष्ठानस्य वर्जनं संन्यासं कथयन्ति। तेन नित्यादीनि सर्वाणि कर्माणि कामाभिसन्धिना अनुष्ठीयमानानि काम्यानि संपद्यन्ते। तेषां तथानुष्ठानवर्जनं मुमुक्षोः संन्यासः। एवंच व्याख्याने पूर्वापरग्रन्थविरोधो न आपद्यते। यतः पञ्चमे अर्जुनसंशयच्छेदाय संन्यासकर्मयोगयोः कैश्चित्प्रतिपन्नां भिन्नार्थतां

'..................संन्यासात्कर्मयोगो विशिष्यते।

इति

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।' (५।२)

इति उपक्रम्य तयोस्तु कर्मयोगस्य नीरागद्वेषतया कर्मानुष्ठानलक्षणविशेषप्रतिपादनोपक्रमेण संन्यासस्य

'ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति।' (५।३)

इत्यादिना लक्षणमुक्तम्। तेन विशिष्टरूपतया यथाविहितानां सर्वकर्मणामनुष्ठानमेव संन्यास इति स्थितम्। अथ त्यागं व्याचष्टे 'विचक्षणाः' परमार्थविदः सर्वेषां नित्यादिविभागेन व्यवस्थितानां यज्ञादीनां वर्णाश्रमविहितानां कर्मणां फलस्य स्वर्गादिभोगलक्षणस्य परिहारं 'त्यागमाहुः', नतु यज्ञादिरूपस्य[1] कर्मण एव परिहारं त्यागमाहुः। तथैवच पूर्वं

'यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह।

त्यागे यस्य हुतं सर्वं स त्यागी स[2] च बुद्धिमान्॥' (२।५०)

इति त्यागस्य अपि लक्षणमुक्तम्। एवंच कर्मफलस्य अनभिसन्धानं त्यागो, नतु कर्मणः परिहार इति उक्तं भवति। ततश्च संन्यासत्यागयोरेकार्थतैव सिद्धान्तः॥ २॥

---

१ 'स्वरूपस्य' ख.। २ 'समबुद्धिमान्' ख.।

अतश्च तयोर्भिन्नार्थतावादिनां मतमुपन्यस्य तमेव संन्यासैकार्थं त्यागं सम्यक् प्रतिपादयितुमाह—

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥

इह 'एके' केचन 'मनीषिणो' मतिमन्तः केवलज्ञानवादाभिनिविष्टाः सर्वं नाम 'कर्म त्याज्यं' परिहार्यमिति कथयन्ति । यतस्तत्सर्वं कर्म अशुद्ध्यतिशयक्षयादिभिर्दोषैर्युक्तम् । अन्ये पुनर्मनीषिणो यथोक्तकर्मयोगवादिनो यज्ञदानतपोरूपं शास्त्रविहितं कर्म 'न त्याज्यं' न परिहार्यमित्याहुः । यथाच यज्ञादेर्नियतस्य कर्मणः परिहारानुपपत्तिः, तथा बहुशः प्रतिपादितमेव प्राक् ॥ ३ ॥

इत्थंच संन्यासत्यागयोः परमार्थत एकार्थयोः तत्स्वरूपावगमसन्देहनिवृत्तये त्यागविषयमेव वक्तव्यमाह—

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रदर्शितः ॥ ४ ॥

'तत्र' तथाविधे संन्यासादभिन्नार्थे 'त्यागे' प्रोक्तलक्षणे विषये 'निश्चयं' निर्णयं मन्मतमवधारय । व्याख्यातलक्षणस्य क इदानीं निश्चयोऽवशिष्यते यदर्थमेवमुच्यते इति । अत्र आह—हिशब्दो हेतौ, यस्मात् सामान्येन उक्तलक्षणः 'त्यागो' विशेषतो वक्ष्यमाणहेयोपादेयरूपेण विभागेन 'त्रिप्रकारः' पुरस्तात् सम्यक् प्रकटीकृतः ॥ ४ ॥

इत्थं त्यागविषयनिश्चये वक्तव्ये सति कर्मणां त्यागस्य पराभिमतापवर्गलक्षणफलाहेतुत्वादत्यागत्वमेव प्रतिपादयितुं प्रदर्शितागमोपपत्तिगर्भीकारेण सर्वकर्मणामत्याज्यत्वमेव तावदाह[1]—

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

---

१ 'त्याज्यत्वं तावदाह' क. ।

यज्ञादिरूपं कर्म सर्वैः शास्त्राधिकृतैः सर्वदा 'न त्याज्यं' न तस्य त्याग उपपद्यते । तस्मादवश्यं कर्तव्यमेव तत् । कुतः । यज्ञादीनि कर्माणि 'मनीषिणां पावनानि' । मनीषिणः पुरुषाः प्रज्ञायुक्ता दैवसर्गभाजः शास्त्रार्थानुष्ठानाधिकृता उच्यन्ते । ते च द्वये संभवन्ति प्रवृत्तिधर्मात्मकशास्त्रार्थानुष्ठानाधिकृता रजोलेशानुगतसत्त्वप्रधानबुद्धयस्तथाविधश्रद्धाश्च एके यान्प्रति तृतीयेऽध्याये

'सहयज्ञाः प्रजाः सृष्ट्वा ......... ।' (३।१०)

इत्यादिना

'अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ।' (३।१६)

इत्यन्तेन ग्रन्थेन आगमोपपत्तिप्रतिपादकेन सर्वकर्मणामत्याज्यत्वं पावनत्वं च उक्तम्; अपरे तु मनीषिणो निवृत्तिधर्मात्मकशास्त्रार्थानुष्ठानाधिकृता गुणीभूतरजस्तमस्कत्वादुद्रिक्तसत्त्वात्मकबुद्धयस्तथाभूतश्रद्धाश्च यान्प्रति तत्रैव एतच्छास्त्रप्रतिपादितज्ञाननिष्ठतया ज्ञानादिकर्मणां यथास्वं स्वासु अवस्थासु

'यश्चात्मरतिरेव स्यात् ............... ।' (३।१७)

इत्यादिना

'तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥' (३।२४)

इत्यन्तेन ग्रन्थेन अत्याज्यत्वमुक्तमिति उभयेषां मनीषिणां यज्ञादिकर्माणि पावनानि उक्तानि ॥ ५ ॥

**एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

'एतानि' अत्याज्यत्वेन इह प्रतिपादितानि परैः सदोषत्वात् त्याज्यत्वेन प्रतिपन्नानि अपि सर्वाणि 'कर्तव्यानि' अवश्यानुष्ठेयानीति 'उत्तमं' प्रकृष्टं मदीयं च एतत् 'मतं निश्चितं' प्रदर्शित-

प्रकारेण पूर्वमेव निर्णीतम् । कथं कर्तव्यानीति तु विशेषमाह 'सङ्गं त्यक्त्वा फलानि' इति ।

'सङ्गात्संजायते कामः ............ ।' ( २।६४ )

इत्यत्र व्याख्यातस्वरूपः सङ्ग एकः कर्मसु दोषः । तथा तन्मूलरागद्वेषदोषयोगादिष्टानिष्टविषयप्राप्तिपरिहाररूपाणि फलानि द्वितीयो दोषः, नतु अनुष्ठानम् । अतः सङ्गं फलानि च त्यक्त्वा कर्माणि कर्तव्यान्येव । तेन कर्मसु सङ्गफलाभिसन्धित्यागस्त्याग उच्यते, नतु अननुष्ठानमेव त्यागः ॥ ६ ॥

तस्मादुक्तया उपपत्त्या—

**नियतस्य च संन्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**

चशब्दो हेतौ । यस्मात् 'नियतस्य' वर्णाश्रमविभागेन नित्याव्यभिचारिणः 'कर्मणो' यज्ञादेः 'संन्यासः' त्यागोऽननुष्ठानं 'नोपपद्यते' । यथाच नोपपद्यते, तथा

'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।' ( ३।५ )

इत्यादिना, तथा

'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।' (१८।११)

इत्यादिना च बहुशः प्रतिपादितमेव । तस्य एवंविधस्य सर्वथैव अत्याज्यस्य कर्मणो 'मोहात्' विपर्ययलक्षणात् वैचित्त्यात् 'त्यागः' परिहारः 'तामसः' तमोगुणसंभवः उच्यते । तमसो हि कार्यं मोहः । यदुक्तं–

'प्रमादमोहौ जायेते तमसोऽज्ञानमेवच ।' ( १४।१७ )

इति । एवमयं तामसस्त्यागो विपरीतफलपर्यवसायी यतोऽपवर्गबुद्ध्या प्रतिपन्नः संसारमेव फलति, अतो हेय एव असौ ॥७॥

अथ राजसं त्यागमाह—

दुःखमित्येव यः कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥

'यः' पुरुषः शास्त्रचोदितं कर्म स्नानाग्निहोत्रादि 'दुःखं' सुखप्रतिकूलमिदमित्येतावन्मात्रात् हेतोः शरीरकदर्थनात्रासात् त्यजति न अनुतिष्ठति, 'स राजसं' रजोगुणनिमित्तकं 'त्यागं' नियतकर्मपरिहारं 'कृत्वा' तस्य 'त्यागफलं' त्यागस्य अपवर्गभोगसुखलक्षणमभिहितं फलं 'नैव लभेत्' प्राप्नुयात् । रजोगुणयुक्तत्वात् तत्फलं दुःखमेव असौ लभते । ततो राजसोऽपि त्यागो हेय एव ॥ ८ ॥

अथ उपादेयं सात्त्विकं त्यागमाह—

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥९॥

'स सात्त्विको' ज्ञानफलसत्त्वगुणहेतुकः 'त्यागोऽभिमतः' । कोऽसौ । 'यन्नियतं' शास्त्रचोदितं 'कर्म क्रियते' अनुष्ठीयते, कर्मणः करणमेव त्यागो, न परिहार इत्यर्थः । कथं क्रियते येन क्रियैव त्यागः संपद्यत इत्याह 'कार्यं' परमगुरोः परमेश्वरस्य निरुपप्लवप्रमाणभूतशास्त्ररूपवचनचोदितत्वादवश्यकरणीयमित्येतेन हेतुना 'क्रियते' अत एव पूर्वं व्याख्यातं सङ्गं फलं च त्यक्त्वा । किमनेन उक्तं भवति । अनुपपन्नत्यागस्य अपि कर्मणो रजस्तमोऽभिभूतत्वादत्यागेऽपि त्यागप्रतिपत्तिः सङ्गफलाभिसन्ध्यनुच्छेदात् कर्मैव संसारकारणं संपद्यते । विशुद्धसत्त्वगुणोद्रेकात्तु यथोक्तज्ञाननैर्मल्ये सति सङ्गफलाभिसन्धिशून्यत्वेन नियतस्य कर्मणोऽनुष्ठानमेव संसारोच्छेदकारणं त्यागः संपद्यते,—इति सात्त्विक एव त्याग उपादेयः ॥ ९ ॥

तस्य एवंविधस्य सात्त्विकस्य त्यागिनः स्वरूपं प्रतिपादयितु-
माह—

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी च्छिन्नसंशयः ॥ १० ॥

योऽत्यन्तगुणीभूतरजस्तमस्कत्वेन[1] विशुद्धेन सत्त्वमात्रेण समाविष्टो व्याप्तान्तःकरणः सन्[2] 'त्यागी' यथोक्तेन सङ्गफलाभिसन्धिरहितनियतकर्मानुष्ठानरूपेणैव त्यागेन त्यागफलहेतुत्वात् त्यागत्वमापन्नेन युक्तोऽत एव 'मेधावी' प्रशस्यप्रज्ञः, ततश्च 'छिन्नसंशयः' यथोक्तस्य परब्रह्मस्वरूपस्य एकस्य तत्त्वस्य अस्तित्वे त्रुटितसन्देहः स सर्ववस्तुषु प्रथमानपरमात्मैकस्वरूपत्वात् 'अकुशलं' संसार्यभिमतस्य सुखस्य असाधनभूतं 'कर्म' अग्निहोत्रादि शरीरक्लेशावहं 'न द्वेष्टि' ज्ञानवैषद्ये सति द्वेषलक्षणदोषाभावात् न अप्रीत्या भावयति, नापि 'कुशले' कर्मत्यागादौ सुखसाधनभूते 'अनुषज्जते' सङ्गं बध्नाति । तस्य एवंविधस्य त्यागिनो नित्योदितानन्तनिजानन्दनिर्भरस्य आत्मभूतसर्वभावस्य न क्वचित् द्वेषो, नापि रागः शास्त्रचोदितत्वादवश्यकरणीयमित्येव सर्वं नियतं कर्म अनुतिष्ठन्नेव असौ सर्वत्यागीत्यर्थः ॥ १० ॥

एतदेव पूर्वोक्तमपि स्मारयन् द्रढयितुमाह—

नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

पूर्वमेव बहुशो व्याख्यातत्वात् गतार्थमेव एतत् ॥ ११ ॥

यथोक्तत्यागिविपरीतवृत्तीनामनुष्ठातॄणां फलमाह—

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचित् ॥ १२ ॥

---

१ 'तमस्केन क. पाठः । २ 'स त्यागी' ख. पाठः ।

ये यथाप्रतिपादितपारमार्थिकत्यागरहिताः, तेषां 'अत्यागिनां' 'प्रेत्य' परलोके 'त्रिविधं फलमनिष्टम्' इत्यादि। तत्र 'अनिष्टं' अनभिप्रेतं दुःखात्मकं यत् तामसचित्तैस्तामसश्रद्धैः कर्तृभिरनुष्ठितात् तामसात्कर्मण उपजातं सत् नरकतिर्यग्योन्यादौ लब्धोपपत्तिभिस्तैर्भुज्यते। 'इष्टं' अभिप्रेतं सुखात्मकं यत् सात्त्विकान्तःकरणैस्तथाविधश्रद्धैश्च कर्तृभिर्निर्वाहितात् कर्मण उद्भूतं सत् निरतिशयसुखाधिकरणे स्वर्गादावधिगतदिव्यशरीरैस्तैर्भुज्यते। 'मिश्रं' तु सुखदुःखात्मकं यत् रजःप्रधानचित्तैस्तादृक्श्रद्धैश्च कर्तृभिरनुष्ठितात्कर्मण उपजातं सत् कर्मभूमौ मनुष्ययोनिगतैस्तैरुपभुज्यते इत्येवं 'त्रिविधं कर्मणः फलं' ज्ञानशून्यसंसारिपुरुषविषयम्। 'संन्यासिनां' यथोक्ततात्त्विकत्यागवतां ज्ञानविज्ञाननिष्णातमतीनां कर्मयोगिनां 'न भवति' न उपपद्यते। ततस्ते त्यागिनः कुशलाकुशलं कर्म नीरागद्वेषतया अनुतिष्ठन्ति,—इति पूर्वेण संबन्धः ॥ १२ ॥

अथ अत्यागिनस्त्रिविधेन कर्मफलेन युज्यन्ते, नतु त्यागिनः,—इत्यत्र हेतुं क्रमेण प्रतिपादयितुमाह—

**पञ्चेमानि महाबाहो कारणानि निबोध मे।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

इह 'इमानि' वक्ष्यमाणानि 'कारणानि' निमित्तानि 'सर्वकर्मणां' सकलशरीरसंबन्धिनां मनोवाक्कायनिर्वर्त्यानामशेषक्रियाविशेषाणां 'कृतान्ते' कृतनिष्ठे 'सांख्ये' निश्चयशास्त्रे 'प्रोक्तानि' प्रतिपादितानि 'निबोध' निबुध्यस्व ॥ १३ ॥

---

१ 'यद्रजोलेशानुगतसत्त्वप्रधानचित्तैः स्वर्गादिफलभूमिषु तादृक्श्रद्धैर्यथाविधिविहितात्कर्मण उद्भूतं पुरुषैरुपभुज्यते। तथा मिश्रं' ख. पाठः।

कानि तानि,—इत्याह—

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवमेवात्र पञ्चमम् ॥ १४ ॥

'अधिष्ठानं' तत्तत्क्रियानुगुणमधिकरणं शरीरादि यदधिष्ठाय कर्तुस्तत्तत्कर्म कर्तुं शक्यम् । तथा 'कर्ता' तत्तद्देहादिनिबद्धाहं-प्रत्ययः पुरुषः । 'करणं' हस्तादि । 'चेष्टाः' तत्तत्क्रियानुगुण-शरीरेन्द्रियव्यापृतयः । अत्र चतुष्टये आनुकूल्यानानुकूल्याभ्यां सिद्ध्यसिद्धिकारणं 'दैवं पञ्चमं' दैवापरपर्यायं प्राक्तनं कर्मेत्यर्थः । अत्र हि अनुकूलेऽधिष्ठानादीनां साधनानां साफल्यम्, अननुकूले तु सन्निहितानामपि वैफल्यम् । अतश्च तत् प्राधान्यात् पृथक् पश्चादुक्तम् ॥ १४ ॥

एषां पञ्चानां सर्वकर्मसिद्धिहेतुत्वं निगमयति—

शरीरवाङ्मनोभिर्हि यत्कर्म प्रारभतेऽर्जुन ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥

यः कश्चित्कर्ता कायेन वचसा चेतसा वा 'यत्कर्म' कर्तुं प्रक्रमते, तत्र 'एते' पूर्वोक्ताः 'पञ्च हेतवः' कारणानि एतेषामन्यत-माभावे चिकीर्षितकर्मासिद्धेः । कीदृशं कर्म आरभते । 'न्याय्यं' शास्त्रप्रोक्तात् नियमरूपात् न्यायादनपेतं 'वा विपरीतं वा' अयथाशास्त्रत्वादन्याय्यम् ॥ १५ ॥

किंच—

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

'तत्र' पञ्चके 'एवं' उक्तेन क्रमेण समशीर्षिकया कारणभूते 'सति' विद्यमाने 'यः' कर्ता क्षेत्रज्ञविशेषः 'केवलं' एकमेव 'आत्मानं' मोहवशादनात्मभूतदेहादिनिविष्टाहंप्रत्ययं 'कर्तारं' कर्मसंपादकं 'पश्यति' बुद्ध्यते, 'स न पश्यति' विपरीतं तस्य

ज्ञानमित्यर्थः। कुतो न पश्यति। 'अकृतबुद्धित्वात्' कृता यथोक्तज्ञाननिष्ठत्वात् निष्पन्ना बुद्धिः प्रज्ञा यस्य, स तथोक्तः । न कृतबुद्धिरकृतबुद्धिः सम्यग्ज्ञानशून्यमतिरत एव भ्रष्टधीः । किमुक्तं भवति। एकः परमेश्वरः स्वशक्तिप्रसरभूतस्य सकलजगद्भावक्रीडनकचक्रस्य अर्क इव स्वप्रभापुञ्जस्य अवभासयिता पारमार्थिकः कर्ता,—इति सम्यग्ज्ञानाभावादकृतबुद्धिर्जात्याद्यभिमानावच्छिन्नं क्षेत्रज्ञरूपमात्रमात्मानं कर्तारं मन्यमानो यत् करोति, तस्य एतदधिष्ठानादिविभागेन त्रिविधं कर्मफलं, नतु यथोक्तस्य त्यागिनः परमात्ममयं सर्वं ज्ञानचक्षुषा पश्यत इति ॥ १६ ॥

अत एव तस्य तादृशीं वृत्तिं प्रतिपादयितुमाह—

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥

'यस्य' आत्ममयसमस्तवस्तुनो 'भावः' चित्तवृत्तिः 'नाहंकृतो' देहादावनित्येऽहंप्रत्ययग्रहणे न संपादितोऽत एव 'यस्य बुद्धिः' संवित् 'न लिप्यते' रागद्वेषादिभिर्मलैर्मायोपहतसमस्तजीवनिबद्धैर्न कलुषीक्रियते 'स' परमेश्वरभावसमाविष्टः कर्ता 'इमान्' योद्धुमवस्थितान् 'लोकान् हत्वा' व्यापाद्य अपि 'न निबध्यते' न तद्वधसाधनेन क्रियाफलेन युज्यते । पारमार्थिकस्य नित्यस्य ब्रह्मस्वरूपस्य आत्मनो नाशाभावात् शरीरादेश्च नित्यविनश्वरस्वभावत्वादत्र

'..................नायं हन्ति न हन्यते ।' (२।२०)

इत्यादिना प्रतिपादित एव हेतुः प्राक् । अतस्त्वं यथोक्तत्यागवान् कार्यं कर्म इदमाचरेत्यर्थः ॥ १७ ॥

अथ त्यागयत्यागिशब्दप्रतिपादितयोगिसंसारिपुरुषविषयतया ज्ञानकर्मकर्तॄणां गुणनिमित्तकं भेदं प्रतिपिपादयिषुः सर्वदेहि-

साधारणयोर्ज्ञानकर्मणोः फलसम्पत्तिहेतुं तावत्प्रतिपादयितुमाह—

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥

अत्र प्रथमेन कर्मशब्देन ज्ञानात्मिकायाः क्रियाया ज्ञप्तिलक्षणं फलमुच्यते कारणेन कार्योपचारात् । तेन तादृशे क्रियाफले विषये त्र्यधीनत्वात् त्रिप्रकारा 'चोदना' प्रवर्तना त्रीण्येतानि ज्ञप्तिलक्षणे ज्ञानात्मकक्रियाफले चोदयन्ति प्रवर्तयन्तीत्यर्थः । कानि त्रीणि । 'ज्ञानं' येन ज्ञायते तदिन्द्रियादि । 'ज्ञेयं' च यत् ज्ञायते सुखदुःखनीलपीतादि[1] । 'परिज्ञाता' योऽहमिदं सुखदुःखादि जानामीति अध्यवस्यति । त्रयाणामेषां सामग्री ज्ञप्तिलक्षणे फले चोदयतीत्यर्थः । एवमेव कर्मणि कर्मफले तत्तत्कार्यनिर्वृत्तिलक्षणे संग्रहो येन संगृह्यते स्वीक्रियते, सोऽपि त्रिविधः । त्रीण्येतानि संग्राहयन्ति । कानि । 'करणं' हस्तादि 'कर्म' घटादिकार्यविषया चेष्टा 'कर्ता' घटादिव्यापृतकुम्भकारादिः । एतत्त्रितयसामग्रीवशाद्घटादेः कार्यस्य स्वरूपनिर्वृत्तिलक्षणं फलं भवति १८

इति स्थिते कीदृंशि एतानि ज्ञानादीनि योगिविषयाणीति प्रक्रान्तं प्रतिपादयितुमाह—

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥

*प्रतिपादितस्वरूपं ज्ञानादित्रितयं च तत् 'गुणसंख्याने' गुणानां* स्वरूपभेदकथने प्रत्येकं 'त्रिधा' त्रिभिः प्रकारैः सत्त्वादिगुणविभागात् 'प्रोच्यते' कथ्यते तद्विद्भिः । 'तानि' ज्ञानादीनि मत्तोऽपि 'यथावत्' सम्यगुच्यमानानि सात्त्विकराजसतामसभेदेन प्रत्येकं त्रिप्रकाराणि अवधारय येन तानि प्रवृत्तानि प्रत्यभिज्ञास्यसि ॥ १९ ॥

---

१ 'पीतादि फलसिदम्' । ख.

तत्र ज्ञानं त्रिविधमाह । तत्र सात्त्विकं तावत्—

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥

'तत्सात्त्विकं' न्यग्भूतरजस्तमस्कं विशुद्धसत्त्वमात्रहेतुकं 'ज्ञानं' संवेदनं 'विद्धि' जानीहि । किं तत् । 'येन' साधनभूतेन देशकालाकारादिभेदेन 'विभक्तेषु' परस्परपृथग्भावेन व्यवस्थितेषु अपि 'सर्वेषु' अशेषेषु 'भूतेषु' चेतनाचेतनेषु सत्त्वेषु 'अविभक्तं' अभिन्नरूपं चिदात्मकं 'भावं' सत्तां 'ईक्षते' पश्यति बुध्यत इत्यर्थः । इह विशुद्धचिन्मात्रस्वभाव आत्मैव एकं तत्त्वं परमार्थसत्, न तद्व्यतिरिक्तं किञ्चन पदार्थान्तरं तत्त्वतः संभवति । केवलं तदीयनिरतिशयैश्वर्योद्भावितमायामलमुषितस्वप्रकाशे ज्ञानमये चक्षुषि तदेकमेव तत्त्वं नानात्वेन प्रतिपद्यन्ते क्षेत्रज्ञाः । तदेव यदा ज्ञानमयं चक्षुः परमेश्वरानुग्रहशक्तिशलाकापरिमृष्टमलत्वात् निर्मलीभवति, तदा सर्वमेव इदमेकत्वेन योगिनः पश्यन्तीत्यर्थः ॥ २० ॥

अथ राजसज्ञानमाह—

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तद्राजसमिति स्मृतम् ॥ २१ ॥

'तत् सर्वेषु भूतेषु' समस्तेषु मायीयेषु प्राणिषु वर्तमानं 'ज्ञानं राजसं' रजोगुणहेतुकं 'स्मृतं' तत्त्वविद्भिः । किं तत् । 'यत्पृथक्त्वेन' आत्मनो व्यतिरेकेण व्यवस्थितं 'नानाभावानपि' वेद्यान् नानारूपान् विचित्रान् 'पृथग्विधान्' परस्परतो व्यतिरिक्तस्वरूपान् जानाति । ज्ञानस्य वेद्यप्रथाहेतुत्वादुपचारेण वेदनक्रियाकर्तृत्वं वेदितव्यम् । एतच्च विषयसुखगर्वलक्षणलोभकारणभूतात् रजसः समुद्भूतमसम्यगूदर्शनहेतुत्वात् संसारिपुरुषनियमितं हेयमेव ॥ २१ ॥

अथ तामसमाह—

यत्त्वकृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

'तत्तामसं' तमोगुणहेतुकं ज्ञानं 'उदाहृतं' शास्त्रेषु उदीरितम् । किं तत् । तुशब्दः पूर्वस्मात् व्यतिरेके एव । 'यदकृत्स्नवित्' विषयीभूतं ज्ञेयमर्थं कृत्स्नं सकलं सर्वविशेषसंयुक्तं वेत्तीति कृत्स्नवित् सात्त्विकादि, तद्विपरीतमकृत्स्नवित् तामसम् । तथा 'एकस्मिन्' विषयसुखसाधनभूते कस्मिंश्चिदेव 'कार्ये' साध्ये वस्तुनि 'सक्तं' लीनं, यदेव किञ्चित् दृष्टसुखसाधनतामासादयति, तत्रैव सज्जतीत्यर्थः । तथा 'अहैतुकं' विषयेन्द्रियसंयोगादि यज्ज्ञानकारणभूतं, तदभावेऽपि अकस्मादुद्भूतं ज्ञानं 'तामसं' भूतग्रहाद्याविष्टानां प्रमत्तोन्मत्तादीनां ज्ञानमिव । तथा 'अतत्त्वार्थवत्' तत्त्वमात्मादिपरमार्थः, स एव अर्थो वस्तु तत्त्वार्थः स विद्यते यस्य, तत् तत्त्वार्थवत् सात्त्विकादि, तद्विपरीतं तु इदमतत्त्वार्थवत् शरीराद्यवस्तुनिष्ठमित्यर्थः । 'अल्पं' अव्यापकं तदेतदज्ञानादिकारणभूततमोगुणसमुद्भूतत्वात् सदसद्विपरीतप्रत्ययहेतुत्वे निकृष्टसंसारिविषयत्वात् सुतरां हेयम् ॥ २२ ॥

अथ कर्म त्रिविधमाह । तत्र सात्त्विकं तावत्—

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

'तत्कर्म' 'सात्त्विकं' पूर्ववत् विशुद्धसत्त्वगुणहेतुकमभिधीयते । किं तत् । 'अफलप्रेप्सुना' दृष्टादृष्टविषयसुख[1]लिप्सारहितेन कर्त्रा निर्वर्तितम् । कीदृशम् । 'नियतं' वर्णाश्रमविभागेन अवश्यकरणीयम् । तथा सङ्गेन उक्तलक्षणेन शून्यम् । अत एव सङ्गाभावात्

१ 'सुखदुःख' ख. ।

तन्मूलरागद्वेषाभावेन 'कृतं' संपादितम्। तदेतत् ज्ञानकारणभूतसत्त्वगुणोद्भूतत्वादपवर्गलक्षणोत्तमपुरुषार्थसाधनं योगिविषयमुपादेयम् ॥ २३ ॥

अथ राजसं कर्म आह—

यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः।
क्रियते क्लेशबहुलं तद्राजसमिति स्मृतम् ॥ २४ ॥

'तद्राजसं' रजोगुणहेतुकम्। किं तत्। यदैहिकामुत्रिकभोगलिप्सुना तथा 'साहङ्कारेण' अनात्मनि शरीरादावहंप्रत्ययवता कर्त्रा 'क्लेशबहुलं' चित्तशरीराद्यायासभूयिष्ठं 'क्रियते'। तदेतत् प्रवृत्तिहेतोर्दुःखबहुलात् रजसः समुद्भूतम्। तत् संसारिविषयत्वात् हेयम् ॥ २४ ॥

अथ तामसम्—

अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

'तत्तामसं' तमोगुणहेतुकं कर्म। किं तत्। 'यत् मोहात्' अज्ञानादेव 'आरभ्यते' कर्तुं प्रक्रम्यते। कथम्। इदं क्रियमाणं कमर्थमनुबध्नाति पुष्णाति, कं वा क्षपयति, अस्मिन् क्रियमाणे कस्य हिंसा उपघातः संपद्यते,—इत्यनुबन्धक्षयहिंसा 'अनवेक्ष्य' अविचार्यैव[1]। एतदपि मोहाज्ञानप्रमादकारणभूततमःसंभवत्वात्[2] निकृष्टतरं[3] संसारिविषयं सुतरां हेयमेव ॥ २५ ॥

अथ त्रिविधः कर्ता उच्यते। तत्र सात्त्विकस्तावत्—

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥

ईदृशः 'कर्ता' कर्मणामनुष्ठाता 'सात्त्विक उच्यते' सात्त्वि-

१ 'विचार्येति' क.। २ 'समुद्भूतत्वात्' ख.। ३ 'निकृष्टतमसंसा' ख.

कचित्तत्वात् कर्ता सात्विक इति व्यपदिष्टः। स कीदृशः। 'मुक्तसङ्गः' मुक्तः परिहृतः सङ्गः संसारतरुबीजभूतो व्याख्यातरूपो दोषो येन, यतः 'अनहंवादी' क्षेत्ररूपमनित्यमर्थमात्मत्वेन प्रतिपद्य अहं यजामीत्यादि यो वदति, सोऽहंवादी सर्वः संसारी जनः; तद्विपरीतोऽनहंवादी शरीरादिष्वनात्मभूतेषु अर्थेषु निरहङ्कारः। तथा धृत्या वक्ष्यमाणलक्षणया[1] अनुष्ठेयवस्तुदृढावष्टम्भशक्त्या, तथा उत्साहेन उद्योगेन समन्वितः। अत एव सिद्धौ फलनिष्पत्तौ, असिद्धौ तदनिष्पत्तौ च 'निर्विकारः' हर्षशोकलक्षणविकाररहितः। ईदृशं कर्तृत्वं ज्ञानहेतोः पूर्ववत् विशुद्धात् सत्त्वगुणादुत्पन्नं ब्रह्मप्राप्तिहेतुत्वादुपादेयम् ॥ २६ ॥

अथ राजसः—

राागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्ता राजसः परिकीर्त्यते ॥ २७ ॥

ईदृशः 'कर्ता राजसः' पूर्ववत् रजोगुणात्मकः कथ्यते। कीदृशः। 'रागी' विषयसुखेषु अभिलाषवान्। तथा 'कर्मफलप्रेप्सुः' क्रियमाणस्य कर्मणो यज्ञादेः फलमनित्यं स्वर्गभोगादिरूपं लिप्सुः। तथा 'लुब्धो' गर्धवान्। तथा 'हिंसात्मकः' प्राणिद्रोहपरायणः। तथा 'अशुचिः' बाह्याभ्यन्तरशौचरहितः। तथा 'हर्षशोकान्वितः' फलैकालम्बनचित्तत्वात् तत्तत्सिद्ध्यसिद्धिसंभवाभ्यां परितोषविषादाभ्यां युक्तः। एतादृशं कर्तृत्वं लोभादिदोषकारणभूतरजोगुणसमुद्भूतत्वात् संसारिविषयं हेयम् ॥ २७ ॥

अथ तामसः—

अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः।
विषादी दीर्घसूत्रश्च कर्ता तामस उच्यते ॥ २८ ॥

---

१ 'वक्ष्यमाणया' ख.। २ 'फलशोक' ख.

एवंविधः 'कर्ता' पूर्ववत् 'तामस उच्यते'। किंविधः। 'अयुक्तः' समाधिरहितो यतः 'प्राकृतः' प्रकृतिमेव आत्मत्वेन प्रतिपन्नः 'स्तब्धो' मिथ्याभिमानाभिनिवेशात् न कंचित्प्रणमति 'शठो' मायावी, तथा 'नैकृतिकः' निकृतिः परोपतापनं प्रयोजनं यस्य 'अलसो' दाक्ष्यरहितः, अत एव 'विषादी' विषादवान्[1] 'दीर्घसूत्रः' आशुकार्येऽपि वस्तुनि चिरकारी। एवंविधं कर्तृत्वं प्रमादमोहादिदोषकारणभूततमोगुणसमुद्भूतत्वादत्यन्तहेयमेवेति कर्तृकर्मणोः पृथक्त्रैविध्यप्रतिपादनं विस्पष्टतार्थं यतः प्राय एकतरत्रैव त्रैविध्यं भवत्युक्तम् ॥ २८ ॥

अथ बुद्धिधृत्योरेवमेव त्रैविध्यं वक्तुमुपक्रमते—

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥

बुद्धिर्बोध्यवस्तुसाधनं करणं, धृतिरवष्टम्भः कार्ये ज्ञेये वा अर्थे सिद्धिपर्यन्तं स्थैर्यं; तयोर्बुद्धिधृत्योः सत्त्वादिगुणापेक्षया 'त्रिविधं भेदं' साकल्येन विविक्ततया च अभिधीयमानं 'शृणु'॥ २९॥

तत्र उद्देशक्रमेण बुद्धेस्त्रैविध्ये प्रतिपाद्ये सात्त्विकं भेदं तावदाह—

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या बुद्धिर्वेद सा सात्त्विकी मता ॥३०॥

'सा सात्त्विकी' सत्त्वगुणसमुद्भूता 'बुद्धिर्मता'। का सा। यया 'प्रवृत्तिं च निवृत्तिं च वेद' जानाति। स्वर्गापवर्गफले शास्त्रचोदिते कर्मणी प्रवृत्तिनिवृत्तिशब्देन उच्येते। यदुक्तं

'प्रवृत्तिलक्षणो धर्मो गृहस्थेष्वभिधीयते।
निवृत्तिलक्षणस्त्वन्यो धर्मो मार्गैकदैशिकः ॥'

---

१ 'अवसादवान्' ख.

अन्यत्र अपि

'प्रवृत्तिं च निवृत्तिं च द्विविधं कर्म दैशिकम् ।
इह चामुत्र काम्यं च प्रवृत्तं कर्म कीर्त्यते ॥
निष्कामं ज्ञानपूर्वं च निवृत्तमुपक्रम्यते ।'

इति । तथा 'कार्याकार्ये' शास्त्रीयविधिनिषेधवशादनुष्ठेयपरिहार्ये वस्तुनी या जानाति, तथा 'भयाभये' भयं संसारदुःखजं साध्वसमभयमपवर्गसमुद्भवं सर्वत्रासविरहम्[1], तथा 'बन्धं' संसारं 'मोक्षं' अपवर्गं हेयतया उपादेयतया च स्वरूपतो जानाति, सा सात्त्विकी बुद्धिरिति । ननु ज्ञानं बुद्धिरिति अनर्थान्तरम् ।

'सर्वभूतेषु येनैकम्......................।' (१८।२०)

इत्यादिना सात्त्विकज्ञानलक्षणेनैव सात्त्विकबुद्धिलक्षणमुक्तं, तदधुना किमिति पुनरुच्यत इति । अत्र उच्यते—सत्यं ज्ञानबुद्ध्योर्नास्ति कश्चित् विशेषः, किन्तु पूर्वं ज्ञानज्ञेयज्ञातृलक्षणस्य त्रितयस्य एकप्रयोजनविषयत्वेन प्रतिपादनप्रसङ्गात् संक्षेपेण सात्त्विकज्ञानलक्षणमुक्तम् । अधुना तु धृतिसाहित्येन तस्यैव बुद्धिशब्दप्रतिपादितस्य विस्तरतो लक्षणमुक्तम् । नहि पूर्वं धृत्यादिवेदनं ज्ञानसंबन्धित्वेन प्रतिपादितम्, अधुना तु प्रतिपादितमिति न पौनरुक्त्यदोषश्चोदनीयः । यदिवा पूर्वमारूढयोगिसंबद्धस्य ज्ञानस्य लक्षणमुक्तम्, अधुना तु आरुरुक्षुसंबद्धस्य, एवमपि न पौनरुक्त्यम् ॥ ३० ॥

अथ राजसी—

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

'राजसी' रजोगुणप्रभवा 'बुद्धिर्यया' हेतुभूतया ज्ञाता

[1] 'सर्वत्राण' ख. ।

क्षेत्रज्ञः पुरुषो धर्माधर्मादीनुपादेयान् हेयांश्च पदार्थान् 'अयथावत्' निश्चयाभावादसम्यक् वेत्ति धर्माधर्मावदृष्टविषयौ सदाचारदुराचारौ, कार्याकार्ये तु दृष्टविषये इति न पौनरुक्त्यम् । अथवा धर्माधर्मशब्दौ लक्षणया फलविषयावुक्तौ, कार्याकार्यशब्दौ तु तन्निमित्तकर्मविवक्षया उक्तौ, एवमपि न पौनरुक्त्यम् । एषा अपि संशयात्मकरजोगुणप्रभवत्वात् संसारिविषया ॥ ३१ ॥

अथ तामसी—

अधर्मं धर्ममिति या बुद्ध्यते तमसान्विता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा तामसी मता ॥ ३२ ॥

'तामसी' तमोगुणहेतुका 'बुद्धिर्या' धर्माधर्मादीनदृष्टविषयान् 'सर्वार्थांश्च' दृष्टविषयान् 'तमसा' हेतुना आवृता सती विपर्ययेण जानाति, 'सा' एषा मिथ्याज्ञानहेतुतमोगुणत्वात् निकृष्टा संसारिविषयेति हेया ॥ ३२ ॥

अथ धृतिस्त्रिविधा । तत्र सात्त्विकी तावत्—

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा सात्त्विकी मता ॥ ३३ ॥

'सा सात्त्विकी' पूर्ववत् विशुद्धसत्त्वगुणात्मिका 'धृतिः' । का असौ । 'यया' योगी मनःप्रभृतीन् धारयति । कीदृश्या । परमात्मविषयेण 'योगेन' समाधिना सह 'अव्यभिचारिण्या' नित्यमव्यतिरिक्तया । योगी हि मनोऽन्तःकरणं, प्राणमाभ्यन्तरं मारुतं तत्तत्क्रियाभेदात् नानासंज्ञमिन्द्रियाणि चक्षुर्वागादीनि योगार्थमेव धारयति । तत्र आत्मसमाधिविषयोऽवष्टम्भः स्थैर्यमेव कारणमित्यर्थः । एषा तत्त्वज्ञानहेतुविशुद्धसत्त्वगुणसमुद्भूतत्वादपवर्गफलत्वे सति उपादेया ॥ ३३ ॥

अथ राजसी—

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥

रजोगुणजा 'धृतिर्यया' साधनभूतया संसारी पुरुषः 'प्रसङ्गेन' उक्तलक्षणेन 'फलाकांक्षी' स्वर्गादिसुखात्मककर्मफललिप्सुर्धर्मादीन् 'धारयते' उद्वहति, नतु अपवर्गम् । धर्मः शास्त्रचोदितसमाचारः, तत्फलं सुखं कामः, अर्थो धनम् । त्रिवर्गमात्रनिबद्धधृतयो हि संसारिणः । तदेषा धृतिर्हेयैव ॥ ३४ ॥

अथ तामसी—

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ॥ ३५ ॥

'सा तामसी' तमोगुणजा 'धृतिः' यया हेतुभूतया 'दुर्मेधाः' विपर्ययप्रत्ययरूपत्वात् दुष्टा मेधा प्रज्ञा यस्य, स तादृशः सन् पुरुषः स्वप्नादीन् दोषान् 'न विमुञ्चति' तन्मय एव नित्यमास्ते इत्यर्थः । 'स्वप्नो' निद्रा तमःकार्यं 'भयं' इष्टविषयविनाशशङ्कया त्रासः 'शोको' विनष्टानुशोचनं[1] 'विषादः' अनुत्साहः 'मदः' चित्तोद्रेकः । मूढः किल तानेव नित्यमुद्वहन्नास्ते । अत[2] एव निकृष्टा एषा धृतिस्त्याज्यैव ॥ ३५ ॥

अथ कर्मफलभूतस्य सुखस्य त्रैविध्यं प्रतिपादयितुमुपक्रमते—

सुखं त्विदानीं शृणु मे त्रिविधं भरतर्षभ ।

गतार्थमेतत् ॥

अथ त्रैविध्ये प्रतिपाद्ये सात्त्विकत्वं तावत् सुखस्य प्रतिपादयितुमाह—

अभ्यासाद्रमते यत्र दुःखान्तं च नियच्छति ॥ ३६ ॥

---

१ 'नष्टा' ख. । २ 'तत एषा निकृष्टा' ख. ।

यत्तदात्वे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं विद्या आत्मबुद्धिप्रसादजम् ॥ ३७ ॥

'तत्सात्त्विकं' विशुद्धसत्त्वहेतुकं 'सुखं' आनन्दं विद्धि जानीहि । कीदृशम् । 'आत्मबुद्धिप्रसादजं' आत्मा ब्रह्मस्वरूपं परं तत्त्वं, तदालम्बना बुद्धिः परा प्रज्ञा, तस्याः प्रसादो नैर्मल्यं यदपेक्षया विशुद्धमपि सत्त्वं मलिनत्वात्परिहार्यमेव; ततस्तथा-विधादात्मबुद्धिप्रसादात् जातमुद्भूतम् । किं तत् । 'यत्र' यस्मिन् सुखे 'अभ्यासात्' नित्यानुशीलनात् योगी 'रमते' रतिं भावयति, नतु उद्विजते । विषयभोगात्मकस्य हि सुखस्य आभासो विशेषा-काङ्क्षया तत्र उद्वेगं जनयति, समाधिजं तु सुखं रतिमेव आवहति । यत्र च सुखेऽनुभूयमाने सर्वदुःखानामन्तं समाप्तिमभावं 'निय-च्छति' नितरां प्राप्नोति । अन्यस्मिन् हि सुखेऽनुभूयमाने क्षणान्तरे तदेव दुःखं संपद्यते, कुतः सर्वदुःखानामन्तः । 'यत्' च सुखं 'तदात्वे' साध्यमानावस्थायां चित्तासमाधानलक्षणक्रोधरूपत्वात् विषतुल्यं, परिणामे तु सिद्धावस्थायां 'अमृतोपमं' निरुपमा-स्वादमित्यर्थः । बाह्यसुखस्य एतदेव विपरीतं वक्ष्यति । तदेतत् विशुद्धनिरतिशयनिरुत्तरास्वादरूपसमाधिप्रज्ञाप्रभवं योगिविषयं सुखमुपादेयमिति ॥ ३६–३७ ॥

अथ राजसं—

विषयेन्द्रियसंयोगाद्यत् तदात्वेऽमृतोपमम् ।
परिणामे विषमिव तद्राजसमिति स्मृतम् ॥ ३८ ॥

'तद्राजसं' रजोगुणसमुद्भवं सुखम् । किं तत् । 'यत्' इष्टेन विषयेण अनित्येन शब्दादिना इन्द्रियस्य श्रोत्रादेः संयोगात् संब-न्धात् 'तदात्वे' साध्यमानावस्थायां 'अमृतोपमं' क्षणमात्रमास्वाद-

---

१ विधात् बुद्धिप्रसादात्' ख.

विशेषहेतुत्वात् सुधारसतुल्यं 'परिणामे' तु सिद्धावस्थायां विषोपमं तत्कालमेव द्वेष्यत्वात् । यदिवा अनुभूयमानावस्था तदात्वं, तदा विषयेन्द्रियसंयोगजं सुखं सर्वं मधुरमेव; परिणामस्तु तद्विपाकावस्था, तस्मिन्सर्वमेव विषयसुखमसुखपरिणामं किञ्चिद्भवितुमर्हति । एतत् दुःखकारणं रजोगुणत्वात् दुःखैकफलं सुख हेयमेवेति ॥ ३८ ॥

अथ तामसं—

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

'तत्तामसं' तमोगुणनिमित्तकं सुखम् । किं तत् । 'यदग्रे च' अनुभूयमानावस्थायां 'अनुबन्धे च' परिणामवेलायां सुखबुद्ध्या गृहीतं 'मोहनं' वैचित्त्यकारि यतो निद्रादिप्रभवम् । तमसो हि निद्राप्रमादालस्यादि कार्यं, तत्र 'निद्रा' सर्वेन्द्रियव्यापारोपरमो मोहावस्था 'आलस्यं' अदाक्ष्यं 'प्रमादः' कार्येषु अनवहितत्वम् । एतानि हि अनुभूयमानानि अपि मोहात्मकानि परिणामदशाप्राप्तानि अपि मोहकान्येव । नहि एषां ज्ञानादिफलं भवति । अज्ञानहेतुकतमोगुणजत्वादेतदज्ञानफलं सुखमत्यन्तहेयमेव ॥ ३९ ॥

एवं ज्ञानादीनां सुखान्तानां केषांचिदेव भावानां प्राधान्यविवक्षया त्रैविध्यमुक्त्वा सर्वत्र सर्वप्रमातृविषयाणां सर्वभावानां सात्त्विकादिभेदेन त्रैविध्यं व्यवस्थितमिति संग्रहेण प्रतिपादयितुमाह—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥

व्यक्तार्थः श्लोकः । किन्तु 'दिवि' इत्यादि फलभूम्युपलक्षणार्थं 'पृथिव्याम्' इति कर्मभूम्युपलक्षणार्थं वेदितव्यम् ॥ ४० ॥

---

१ 'सुखं च सुखपरि' क. ।

इदानीं षोडशभिरध्यायैर्यथोक्तज्ञाननिष्ठतया कर्मसु अवश्यानुष्ठेयत्वेन अवगतेषु तेषामपवर्गफलत्वकारणभूतयोस्त्यागसंन्यासयोः प्रागुक्तयोः सम्यक्स्वरूपज्ञाने जातसन्देहमर्जुनं प्रति तयोस्तत्त्वप्रतिपादनप्रसङ्गेन त्यागिनामत्यागिनां च विविक्तस्वरूपाभिव्यञ्जकं ज्ञानादीनां गुणभेदकृतं त्रैविध्यमभिधाय, अध्यायप्रक्रान्तं प्रकृतमर्थमनुबध्नाति। एवं कर्मणां फलत्यागपूर्वकत्वेन अनुष्ठितानामपवर्गफलत्वमुक्तं, तानि कर्मशब्दमात्रेण सामान्यतः प्रोक्तानि, विशेषतः पुनः कानीत्याकाङ्क्षानिरासार्थं तत्स्वरूपप्रतिपादनं प्रस्तौति—

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

इह चतुर्णां वर्णानामुक्तवक्ष्यमाणार्थसमन्विततया द्विप्रकारस्वभावसमुत्थैः 'गुणैः' धर्मैः 'कर्माणि' शास्त्रचोदिताः क्रियाविशेषाः समनन्तरवक्ष्यमाणभेदेन 'प्रविभक्तानि' प्रतिवर्णं साधारणासाधारणविभागेन पृथक्कृतानि परमेश्वरेणैव एकेन कर्त्रा येन स्वेच्छामात्रोपकरणेन परमार्थतो विशुद्धस्वभावमात्राव्यतिरिक्तस्वरूपमपि नानाभावभेदाभासखचितं जगत्क्रीडनकनिर्माणमिदमारचयता वर्णविभागः परिकल्पितः। तथाच भगवतैव प्राक् प्रदर्शितं

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥' (४।१३)

तथा

'महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥' (१०।६)

इति। अत्र पूर्वश्लोके परमेश्वरेच्छामात्रहेतुकत्वं वर्णविभागस्य प्रति-

---

१ 'समन्वयान्वितप्रकार'

पादितम्, अपरश्लोके चत्वारो मनवश्चातुर्वर्ण्यप्रवर्तकाः प्रजापतयो ये उक्ताः, तेषामैश्वरसर्गविवक्षया[1] महाकल्पप्रारम्भे परमेश्वरेच्छामात्रेण तद्भावाभिन्नस्वरूपाणामेव चतुर्धा सर्गोऽवभासितो यतश्चतुर्वर्णरूपा प्रजेयमुदपादीति दशमे व्याख्यातप्रायम्; इह तु वर्णविभागोपपत्तिप्रदर्शनप्रस्तावेन उदितम्। तदयमत्र अपरविभागो विवक्षितो यदीश्वरेण स्वसर्गारम्भे चत्वारः पुरुषाः सपत्नीकाः प्रविभक्तकर्माणो ब्राह्मणादिव्यपदेशभाजः सृष्टाः। तेषामेकेन युग्मेन ब्राह्मणसर्ग उत्पादितः, अन्यैः क्षत्रियादिसर्गाः। एवं क्रमेण ब्राह्मणादिवर्णविभागे स्थिते योऽविच्छिन्नसन्तानतया ब्राह्मणेन ब्राह्मण्यां जातः, स ब्राह्मणः; एवं क्षत्रियादयः। तदित्थमेभिः प्रजापतिभिर्या सृष्टिः कृता, सा आनुलोम्येन प्रातिलोम्येन च संकीर्यमाणा आनन्त्यं भजते। तत्र ब्राह्मणेन क्षत्रियायां वैश्यायां शूद्रायां वा जाता अनुलोमजा उच्यन्ते। एवं क्षत्रियेण वैश्यायां शूद्रायां च उत्पन्नाः, वैश्येन शूद्रायामुत्पन्नाः सर्व एव अनुलोमजा धर्म्याः। ये तु विपर्ययेण क्षत्रियेण ब्राह्मण्यां, वैश्येन क्षत्रियाब्राह्मण्योः, शूद्रेण वैश्याक्षत्रियाब्राह्मणीषु उत्पादिताः; ते प्रतिलोमजा अधर्म्याः। एवमनुलोमप्रतिलोमजानामपि सांकर्ये सति आनन्त्यं प्रजायाः ॥४१॥

ये तु अविच्छिन्नसन्तानतया ब्राह्मणेन ब्राह्मण्यां, क्षत्रियेण क्षत्रियायां, वैश्येन वैश्यायां, शूद्रेण शूद्रायामसंकीर्णतया जातास्ते विशुद्धाश्चत्वारो वर्णा इति वर्णविभागे व्यवस्थिते वर्णानां स्वविभागजं कर्मप्रविभागं प्रदर्शयितुमाह—

**शमो दमस्तथा शौचं क्षान्तिरार्जवमेव च।**
**ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥ ४२ ॥**

---

१ 'ईश्वर' ख.।

शमादयो व्याख्यातस्वरूपा ब्रह्मणो ब्राह्मणवर्णस्य संबन्धि 'स्वभावजं' प्रकृतिसमुत्थं 'कर्म' शास्त्रचोदिता क्रियेति प्रायेण स्पष्टार्थः श्लोकः, किन्तु इदमत्र विचार्यम्—इह चेतनाचेतनविभागेन द्विप्रकारे भूतसर्गे सुरनरतिर्यग्भेदेन त्रिप्रकारश्चेतनसर्गो व्यवस्थितः। तत्र नराख्यसर्गमध्ये शास्त्रीयक्रियाधिकृताः कर्मभूमिजन्मानो ये पुरुषास्तेषां कर्मविभागेन गुणविभागेन च परमेश्वरेच्छावशादेव ब्राह्मणादिभेदेन चतुर्विधत्वं यत् नियमितं, तत्र कर्मविभाग एव प्रथमं वक्तव्यः। वर्णानां हि कर्माणि साधारणासाधारणरूपाणि नियमितानि च। तथा ब्राह्मणस्य षट् कर्माणि अध्ययनादीनि साधारणानि वर्णत्रयस्यापि तेषां विहितत्वात्। क्षत्रियवैश्ययोस्तावत्तानि प्रसिद्धान्येव। शूद्रस्यापि शास्त्रचोदितशौचस्नानवैश्वदेवश्राद्धादिक्रियाणामनुष्ठाने विहिताधिकारस्य तदनुष्ठानोपयोगीतिकर्तव्यताविज्ञानहेतुशास्त्रैकदेशाध्ययने दत्त एव अवकाशस्तद्विना विहितकर्मानुष्ठानानुपपत्तेः। दानं च तद्वत् सर्वसाधारणमेव। एवंच साधारणकर्मानुष्ठाने शूद्रस्य भगवता परमर्षिणा परमप्रमाणभूतेन स्ववचसैव कृतोऽवकाशः—यत् चतुर्वर्गोपदेशमयं सेतिहासं महाभारताख्यमुद्दिश्य उक्तवान्

'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः।'

इति। एवमेतानि साधारणानि अध्ययनादीनि त्रीणि कर्माणि ब्राह्मणस्य,अध्यापनयाजनप्रतिग्रहाख्यानि तु त्रीणि असाधारणानि। तान्येव कर्माणि तु वर्णात्मकस्वभावजानि पूर्वमेव दैवसर्गसंबन्धित्वेन निर्दिष्टानि। शमादीनि एवं साधारणानि अपि ब्रह्म[1]संबन्धित्वेनैव किमिति अनेन उक्तानि। दैवासुरसर्गभेदो हि

१ 'ब्रह्म' ख.।

चतुर्वर्णानां साधारणः, तत्स्वभावजाश्च गुणास्तथैव साधारणाः, एष एवच गुणविभागो विवक्षित इति । अत्र उच्यते—सर्वमेतत् यथोक्तमुपपन्नं, किन्तु प्रसिद्धत्वात् वर्णात्मकस्वभावजानि सात्त्विकानि शमादीनि प्राधान्यादुक्तानि प्रकरणेऽस्मिन् वर्णकर्मणामपवर्गसाधनत्वेन विवक्षितत्वादुत्तरेषां क्षत्रियादीनां वर्णात्मकस्वभावजान्येव प्रायेण कर्माणि निर्देक्ष्यति; दैवसर्गात्मकस्वभावजानां साधारणानां शमादीनां ब्राह्मणसंबन्धित्वेन प्रदर्शितप्रयोजनानामुपलक्षणमात्रत्वेन इह कतिपयानामेव निर्देशः कृतः, साकल्येन तु

'अमानित्वमदम्भित्वम्.................।' ( १३।८ )

इत्यादिना, तथा

'अभयं सत्त्वसंशुद्धिः.................।' ( १६।८ )

इत्यत्र पूर्वमेव प्रतिपादितानीति ॥ ४२ ॥

अथ अत्र क्षत्रियाणां वर्णात्मकस्वभावजानि कर्माणि आह—

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

'क्षात्रं' क्षत्रियवर्णस्य इदं 'स्वभावजं' परमेश्वरनियमिततादृक्प्रकृतिसमुत्थं 'कर्म' व्यापारः । किं तत् । 'शौर्यं' शूरभावः पराक्रमः 'तेजः' स्वभावत एव पराभिभवनसमर्थमोजः 'धृतिः' स्वभावकर्मणि दृढोऽवष्टम्भः 'दाक्ष्यं' दक्षता चातुर्यं तथा संग्रामे पराङ्मुखत्वाभावो निर्भयत्वमित्यर्थः 'दानं' अर्थिनां त्यागोऽप्रत्याख्यानहेतुः 'ईश्वरभावः' प्रभुत्वं पराधीनत्वासहिष्णुतेति ॥ ४३ ॥

---

१ 'वर्णसाधारणः' ख. ।

अथ एवंविधं वैश्यशूद्रयोः कर्म आह—

कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
पर्युत्थानात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

'कृषिः' व्रीह्यादिवापनहेतोर्हलादिविलेखनं 'गोरक्ष्यं' गा रक्षतीति गोरक्षः, तस्य भावो गोरक्ष्यं पाशुपाल्यं गोशब्देन पश्वन्तराणामपि परिग्रहात्, द्रव्येण द्रव्यान्तरं क्रीणाति क्रीणंश्च यो जीवति स वणिक्, तस्य भावो 'वाणिज्यं' एतद्धर्मात्मकस्वभावजं 'वैश्यकर्म'। 'पर्युत्थानं' वर्णत्रयस्य पूर्वस्य शुश्रूषा, तद्रूपं 'कर्म' पूर्ववत् 'शूद्रस्य' स्वभावसमुत्थं 'कर्म' इति ॥ ४४ ॥

चातुर्वर्ण्यस्य कर्मप्रविभागं प्रतिपाद्य स्वकर्मानुष्ठानस्य प्रकरणविवक्षितफलप्रतिपादनार्थमाह—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥

यथाप्रतिपादितविभागेन 'स्वे स्वे' निजे निजे शास्त्रचोदिते 'कर्मण्यभिरतः' आभिमुख्येन सक्तो 'नरः' पुरुषश्चातुर्वर्णिकः परमात्मसमापत्तिरूपामपवर्गलक्षणां 'सिद्धिं' सम्यक्फलनिष्पत्तिं 'लभते' अधिगच्छति । न स्वभावकर्मानुष्ठानमात्रेणैव संसिद्धिमधिगच्छति, किन्तु 'यथा' येन प्रकारेण विशिष्टेन 'स्वकर्मनिरतः' संसिद्धिमेतां 'लभते' 'तत्' अभिधीयमानं वस्तु अवधारय ॥ ४५ ॥

यतः प्रवृत्तिर्भूतानां येन विश्वमिदं ततम् ।
स्वकर्मणा तमेवार्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

'यतो' यस्मात् प्रतिपादिताद्भुतस्वभावादेकस्मात् परमकारणात् 'भूतानां' चराचराणां 'प्रवृत्तिः' यथास्वं प्रविभक्तो व्यापारः, 'येन' च तथाप्रविभक्तव्यापारं 'विश्वं' समस्तं जगत् 'इदं ततं'

विस्तारितमिच्छामात्रेण इत्थवमभासितं; 'तमेव' परमेश्वरं परमात्मानं तदिच्छानियमितेनैव 'स्वकर्मणा' स्वेन प्रतिवर्णं निजेन कर्मणा 'आर्च्य' आ समन्तादर्चयित्वा परितोष्य 'मानवः' कर्मभूमिजन्मा क्रियासु अधिकृतश्चातुर्वर्णिको मनुष्यः 'सिद्धिं' साध्यलक्षणां फलनिष्पत्तिं लभते। किमुक्तं भवति। यथोक्तपरमात्मस्वरूपानुस्मरणनित्यनिर्विघ्नावावहितबुद्धितया चतुर्णामपि वर्णानाममानित्वाभयत्वादिगुणाभिव्यञ्जितदैवसर्गजन्मनामसंकरेण स्वं स्वं कर्म अनुतिष्ठतां परसिद्धिप्राप्तिरिति ॥ ४६ ॥

अत्र उपपत्तिं पूर्वोक्तां स्मारयितुमाह—

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ४७ ॥

यो यस्य वर्णस्य शास्त्रचोदितः स्व आत्मीयो धर्मः स्वाध्यायाद्याचारः, स 'विगुणोऽपि' मुख्यकल्पानुष्ठानासामर्थ्यादिना अनुकल्पादिना अनुष्ठितः सन् विगतस्वगुणोऽसंपूर्णस्वाङ्गोऽपि 'श्रेयान्' प्रशस्यतरः। कस्य सकाशात्। 'परधर्मात्' वर्णान्तराचारात्। कीदृशात्। 'स्वनुष्ठितात्' सुष्ठु सर्वाङ्गसंपूर्णतया अनुष्ठितादाचरितात्। कुत एवम्। यतः 'स्वधर्मे' आत्मीयाचारे युद्धादावनुष्ठीयमानेऽवश्यं 'निधनं' विनाशोऽपि प्रशस्यम्। कस्य सकाशात्। 'परधर्मोदयात्' क्षत्रियादेरध्ययनाध्यापनात्मकब्राह्मणादिवर्णान्तराचारानुष्ठानात् यः उदयः सुखादिलक्षणप्राप्तिः, तस्मात् तादृशात्। किमनेन उक्तं भवति। इह द्वये शास्त्रकर्मानुष्ठानेऽधिकृता एके रजःसंकीर्णसत्त्वप्रधानचित्ताः स्वर्गादिफलप्रवृत्तिविषयधर्मानुष्ठायिनः; अपरे तु विशुद्धसत्त्वप्रधाना यथोक्तापवर्गफलनिवृत्तिविषयधर्मानुष्ठायिनः। तेषामुभयेषामपि दैवसर्गभाजां स्वधर्मानुष्ठानादेव

१ 'मुख्यकर्मानुष्ठानसामर्थ्यादिनानुकल्पादिनानुष्ठितः' क.।

उभयरूपतया सिद्धिरुपपन्ना, नतु परधर्मानुष्ठानात्। यतः परेषां स्वधर्मस्थानां स्वर्गादिफलप्राप्तिलक्षणा सिद्धिः श्रूयते, परधर्मस्थानां तु प्रत्यवायः श्रूयते। उत्तरेषां स्वधर्मनिष्ठत्वे सम्यग्ज्ञाननैर्मल्यसंपत्तिः, परधर्मनिष्ठत्वे तु ज्ञानकालुष्यमेव संपद्यते। यतः शास्त्रचोदितस्य प्रबन्धप्रवृत्तस्य स्वस्य कर्मणस्त्यागः परकर्मणश्च उपादानं द्वेषं रागं च विना न संभवति। तत्सन्निधौ च कीदृशं सम्यग्ज्ञाननैर्मल्यम्। इत्थं दैवसर्गयोगित्वादपवर्गार्थिभिरपि सर्ववर्णैर्यथास्वमसंकरेण अनुष्ठातव्यं स्वकर्म कथञ्चन न त्याज्यम्। नहि कर्मत्यागमात्रसाध्या अपवर्गप्राप्तिः। सा हि ज्ञानादेव सिद्ध्यति। ज्ञानं च दैवसर्गाद्यव्यभिचारितया उक्तम्। तच्च

'अमानित्वमदम्भित्वम् ............' (१३।८)

इत्यादिना त्रयोदशे साकल्येन प्रतिपाद्य, षोडशारम्भे

'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।' (१६।१)

इत्यादौ दैवगुणसामग्रीकथने प्रथममेव अनूदितम्। तच्च सर्ववर्णसाधारणं दैवसर्गादिभेदस्य तथारूपत्वात्, वर्णानां कर्मविभागस्य सर्गयोश्च गुणविभागस्य प्रबन्धेन पृथङ्निर्देशात्। यदिहि द्विजातय एव वर्णा दैवसर्गः, शूद्रवर्णश्च आसुर इति स्यात्, तत् वर्णमुखेन सर्गभेदमुखेन वा कर्मविभागादि अभिधीयेत। नच एतदुपपद्यते सर्गभेदस्य सर्ववर्णसाधारण्ये सति गुणानां व्यभिचारदर्शनात्। तथाच ब्राह्मणादयोऽपि दम्भदर्पाद्यासुरसर्गगुणयोगिनो दृश्यन्ते, शूद्रा अपि अदम्भित्वादिदैवसर्गयोगिनो दृश्यन्ते। तस्मात् दैवसर्गभाजां सर्ववर्णानां यथोक्तापवर्गफलसाधनभूतं ज्ञानं साधारणमेव, कर्म तु प्रविभक्तम्॥ ४७॥

तच्च ज्ञाननिष्ठतया अनुष्ठीयमानमपवर्गहेतुः संपद्यते इति न तस्य कस्यांचिदवस्थायां त्याग उपपद्यत इति प्रतिपादयितुमाह—

स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ॥ ४८ ॥

वर्णात्मकस्वभावप्रतिबद्धं स्वाध्याययजनदानादि 'कर्म' कुर्वाणो ज्ञाननिष्ठतया अनुतिष्ठन् 'किल्बिषं' संसारबन्धनलक्षणं पापं 'न' लभते, त्यजंस्तु सर्वकर्म दुर्वाररागद्वेषात् तत्किल्बिषं प्राप्नोत्येवेति असकृत्प्रतिपादितम् । अतः पूर्वोक्तोपपत्त्या परमेश्वरेच्छावशात् सहैव जातं वर्णात्मकस्वभावजातं विगुणमपि न कर्म त्याज्यमेवेति ॥ ४८ ॥

अत्र हेतुमाह—

सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।

यस्मात् 'सर्वारम्भाः' समस्तकर्माणि 'धूमेनाग्निरिव' अव्यभिचारिणा'दोषेण' मलेन 'आवृताः' ततश्च प्रबन्धप्रवृत्तशास्त्रचोदितकर्मत्यागलक्षणोऽपि आरम्भो'दोषेण' अज्ञानरूपेण आवृत एव । अज्ञानविविक्तं तु तत् यथोक्तफलसाधनं स्यात्, यावता तस्य त्याग एव अज्ञानम् ॥

यथातु अत्यजन् एव कर्म ज्ञानफलभाक् भवति, तथा प्रतिपादयितुमाह—

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ॥ ४९ ॥
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ।

'सर्वत्र' सर्वस्मिन्विहिते वर्णस्वभावजे कर्मण्यनुष्ठीयमाने एव 'असक्तबुद्धिः' पूर्वव्याख्यातसङ्गदोषरहितमतिः, तथा निषिद्धात्कर्मणो 'जितात्मा' निगृहीतान्तःकरणः, तथा 'विगतस्पृहः' सर्वत्र सतत[1]सुसंपूर्णस्वात्ममयत्वदर्शित्वादनित्यात्[2] स्वर्गसुखादेर्विगता व्यावृत्ता स्पृहा अभिलाषो यस्य स तादृशः 'परमां' प्रकृष्टां

१ 'सतता' ख. । २ 'नित्यत्वात्' ख. ।

दोषरहितां 'नैष्कर्म्यसिद्धिं' समधिगच्छति सम्यक् लभते सर्वकर्मत्यागित्वफलं परमात्मसमापत्तिलक्षणं प्राप्नोति। केन। 'संन्यासेन' व्याख्यातस्वरूपेण फलाभिसन्धित्यागात्मना, नतु कर्मत्यागात्मना ॥

इत्थं येन ज्ञानेन संस्कृतं क्रियमाणमेव व्यर्थं भवति, तस्य क्रमेण परं प्रकर्षं प्रतिपादयितुमुपक्रमते—

सिद्धिं प्राप्तो यथा ब्रह्म तदाप्नोति निबोध मे ॥ ५०॥
समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा।

उपायभूतस्य 'ज्ञानस्य परा' निरुत्तरा 'निष्ठा' प्रान्तभूमिर्यतः परं ज्ञेयं न संभवतीत्यर्थः, तदुभयमपि कथ्यमानमवधत्स्व ॥

एवंविधो ब्रह्म प्राप्नोतीति पूर्वं तावत्प्रकारमाह—

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ॥ ५१ ॥
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च।
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ॥ ५२ ॥
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः।
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥ ५३ ॥
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते।

एवंविधो भवन् योगी 'ब्रह्मभूयाय' ब्रह्मभावाय परमात्मसमापत्तये 'कल्पते' समर्थो भवतीति। कीदृशः। प्रथमं तावत् दैवसर्गयोगित्वात् सहजया 'विशुद्धया' प्रलीनरजस्तमस्कत्वात् विशुद्धसत्त्वैकमय्या निर्मलया 'बुद्ध्या' प्रज्ञया 'युक्तः' सा हि परमसिद्धिसाधनभूतधर्मग्रामाग्रणीः सहजो गुणो योगिनः, अत एव तस्मिन्सति 'धृत्या' पूर्वोक्तलक्षणया सात्त्विक्या दृढावष्टम्भलक्षणया उत्साहशक्त्या 'आत्मानं' अन्तःकरणं 'नि-

यस्य' वशे व्यवस्थाप्य, तद्वशात् 'शब्दादीन्' इष्टान् 'विषयान्' शास्त्रनिषिद्धान् 'त्यक्त्वा' सर्वात्मना परिहृत्य शास्त्रविहितेषु च विषयेषु अत्याज्येषु सङ्गमूलौ 'रागद्वेषौ' तदुपादानज्ञानहेतू महाक्लेशौ 'व्युदस्य' फलाभिसन्धानाभावात् विक्षिप्य तिरस्कृत्य एवं पूर्वं मुख्यं परिकरबन्धं कृत्वा 'विविक्तसेवी' समाधिव्युत्थानहेतुचेतनाचेतनभावरहितो देशो विविक्तः, तं सेवितुं शीलं यस्य स तथाविधः; तथा 'लघ्वाशी' लघुप्रमाणमन्नं वृत्तिसमवस्थाकारणभूतमात्रं कालाव्यवहितत्वादिगुणपरिशुद्धमल्पमशितुं[1] शीलं यस्य सः, तथा यतानि गृहीतानि अन्यविषयेभ्यः प्रत्याहृतानि वाक्कायमानसानि वचनशरीरान्तःकरणानि येन स तथाविधः, इत्थंभूतश्च 'नित्यं' सततं 'ध्यानयोगपरः' ध्यानेन परतत्त्वात्मकप्रियवस्तुचिन्तनेन यो योगः संबन्धस्तन्निष्ठः, एवंविधगुणसामग्र्या 'वैराग्यं' दृष्टानुश्रविकविषयवितृष्णत्वं सत्त्वगुणविषयं वितृष्णत्वं च 'समुपाश्रितः' सम्यगाश्रितः, तथा सति एतान् दोषान् 'विमुच्य' । कम् । 'अहङ्कारं' तावदनात्मनि शरीरादावात्मप्रत्ययं सर्वदोषाधिराजं तथा 'बलं' शक्याशक्यविवेकपरिहारेण कार्येषु हठं तथा 'दर्पं' स्वल्पस्य अपि सिद्धिलेशस्य उपलब्धेश्चित्तोद्रेकं तथा 'कामं' रागनिमित्तकमिष्टे-[2]विषयेषु संकल्पं तथा 'क्रोधं' द्वेषनिमित्तकं चित्तेन्द्रियक्षोभं तथा 'परिग्रहं' देहदारदारकद्रविणादिषु सर्वस्वबुद्ध्या स्वीकारम् । अत एव परिग्रहत्यागात् 'निर्ममः' ममकारलक्षणात् बन्धात् निष्क्रान्तः, ततश्च नित्यनिर्विकारपरमोपादेयस्वरूपमात्रपरायणत्वात् 'शान्तो' विगतसकलविकल्पक्षोभः इत्थंभूतो 'ब्रह्मभूयाय कल्पते' न अनेवंविधः ॥

---

१ 'कालरहितत्वादिगुणं' ख. । २ 'इष्टेषु विषयेषु' ख. ।

एवमनेन क्रमेण—

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न हृष्यति ॥ ५४ ॥**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।**

'ब्रह्मभूतो' ब्रह्मैकपरायणत्वात् तद्भावमापन्नो निर्विशेषतयैव 'प्रसन्नात्मा' विगतद्वैतप्रत्ययसंकल्पत्वात् प्रसन्नः स्वाभाविकविशुद्धियुक्त आत्मा स्वभावो यस्य स तथाविधः सन् 'न शोचति' नित्याविनश्वरस्वात्ममयविश्वत्वात् कस्यचिदपि भावस्य स्वत्वेन अपरिग्रहात् तदभावे न परिदीव्यते, नापि अनेनैव न्यायेन कस्मिंश्चित् प्राप्ते 'हृष्यति' हर्षमनुभवति। एते हि सर्वे भावा मायोपहतदृशां भावाभावभ्रान्तिमुद्भावयन्तो हर्षशोकात्मकविकारहेतुतामापद्यन्ते, नतु सर्वसाम्यदर्शिनो योगिन इत्यर्थः। तथा ज्ञानस्य परां निष्ठां निरतिशयां चतुर्थीं काष्ठां ज्ञानलक्षणां 'मद्भक्तिं' मत्स्वरूपोपासां 'लभते' प्राप्नोति। किमुक्तं भवति। परमात्माद्वैतप्रतिपत्तिलक्षणा या ज्ञानस्य परा निष्ठा, सैव परा मद्भक्तिरिति। तथाच एनां स्तुवन्ति भक्तिमन्तः—

'मुक्तौ बहुविधा वादा विदुषां स तु तत्त्ववित्।
यस्त्वद्भक्तेः परा काष्ठा मुक्तिरित्यन्तनिश्चयः ॥'

इति ॥

तथाच—

**भक्त्या मामभिजानाति योऽहं यश्चास्मि तत्त्वतः ॥ ५५ ॥**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।**

एवंविधया निरुत्तरया ज्ञानरूपया 'भक्त्या मां' परमात्मानमेकं तत्त्वं 'अभिजानाति' आत्मत्वेन आभिमुख्येन वेत्ति। कस्मात् जानाति। 'तत्त्वतः' परमार्थतोऽद्वयचित्प्रकाशात्मको 'योऽहं' सत्स्वरूपः 'यश्चास्मि' [1]यो भवामि, तां परां सत्तां भजन् तादृ-

---

१ 'यथा भवामि' ख.।

क्त्वभावप्रत्यवमर्शरूपया स्वशक्त्या नित्यमवियुक्तस्तिष्ठामि। अतत्त्वविदो हि न एवंविधमात्मत्वेन प्रत्यभिजानते, किन्तु ते व्यतिरिक्तं परसंवेद्यं च मायावशविपर्यस्तज्ञानत्वात् जानन्ति। यथोक्तभक्तियुक्तस्तु एवंविधं 'मां' सत्येन रूपेण ज्ञानचक्षुषा प्रत्यभिज्ञाय ततः परं मय्येव विशति अहमेव संपद्यते एवंविधे हि मयि उपास्योपासकोपासाविकल्पहानात् ब्रह्मैव परं भूत्वा सिद्धार्थो भवतीत्यर्थः॥

एषा च परा सिद्धिकाष्ठा क्रमप्राप्या। ततश्च एवंविधज्ञाननिष्ठोऽपि यो नियतशरीरसंबन्धं तावदनतिक्रान्तो[1] योगी भवति, तस्य प्रवृत्तिं प्रतिपादयितुमाह—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः॥ ५६॥
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्।

सर्वाणि यज्ञदानादीनि 'सदा' नित्यं कुर्वन्ननुतिष्ठन्नपि 'मद्व्यपाश्रयः' अहं सर्वकर्तृत्वेन प्रतिपन्न आश्रयोऽवलम्बनं यस्य, स तादृशः सन् 'मत्प्रसादात्' मम परमात्मनः स्वाभाविकात् प्रसादादानुकूल्यात् प्रत्यभिज्ञेयतामापन्नात् सतो हेतोः 'शाश्वतं' नित्यम्, अत एव 'अव्ययं' अक्षयं 'पदं' परब्रह्मस्वरूपस्थानं 'अवाप्नोति' अधिगच्छति यत् प्राप्यैव वैश्वरूप्येण आत्मानमधिगच्छन् नियतदेहसंबन्धलक्षणबन्धात्यन्तविनाशरूपां परां सिद्धिं प्राप्नोतीत्यर्थः॥

एवं यथोक्तमुपदेशसर्वस्वं सम्यगवधार्य त्वमपि एवं समाचरेति अर्जुनाय उपदेष्टुमाह—

चेतसा सर्वकर्माणि मयि संन्यस्य भारत॥ ५७॥
बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव।

'सततं' नित्यमेव सर्वासु अवस्थासु 'मच्चित्तो' मयि एकस्मिन्

---

१ 'तावदतिक्रान्तो' ख.।

तत्त्वे परब्रह्मणि चित्तमन्तःकरणं यस्य, स तथाविधो 'भव' परमार्थतो मद्व्यतिरिक्तं पदार्थान्तरं न संभवत्येव ततो व्यवहारभूमौ यदपि इदन्तया प्रतिपद्यसे[1], एतत् पूर्वप्रतिपादितोपपत्त्या परप्रकाशचित्स्वरूपतया भावयेत्यर्थः। किं कृत्वा मच्चित्तो भव। 'सर्वाणि' स्वकर्माणि क्रियमाणानि एव 'चेतसा' मनसैव तत्फलनिःस्पृहेण 'मयि' यथोक्तस्वरूपे परमात्मनि 'संन्यस्य' तत्कृताभिमानत्यागेन निक्षिप्य। कथंच एतत् संपद्यते इत्याह 'बुद्धियोगं समाश्रित्य' बुद्धिर्यथाप्रतिपादितं ज्ञानं, तत्र योगः सततमव्युत्थानः समाधिः; तं समाश्रित्य आलम्ब्य। तन्निष्ठो भूत्वा मच्चित्तो भवेति वाक्यार्थः॥

ततश्च—

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ॥ ५८ ॥
अथ चेत् त्वमहङ्कारं न मोक्ष्यसि विनङ्क्ष्यसि।

'मत्प्रसादात्' मदनुग्रहात् मूलकारणभूतात् 'मच्चित्तो' मदेकालम्बनमानसः 'सर्वदुर्गाणि' सर्वकृच्छ्राणि हर्षशोकमोहमूलानि बन्धकारणानि 'तरिष्यसि' लङ्घयिष्यसि। 'अथ' एवमपि उपदिष्टः 'त्वं' यदि 'अहंकारं' जात्याद्यभिमानावच्छिन्नशरीराद्यात्मप्रत्ययं 'न मोक्ष्यसि' तत् 'विनङ्क्षयसि' पारमार्थिकस्वरूपाप्रतिपत्तेर्विनाशमभावमेव प्राप्स्यसि॥

नच[2] एतत् स्वाधीनं तव,–इत्याह—

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ॥ ५९ ॥
मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यते।

एवंविधमवस्तुविषयं 'अहंकारं' कर्तृत्वाभिमानं 'आश्रित्य' धर्म्यमवश्यकरणीयं युद्धं न करिष्यामि 'इति यत् मन्यसे'

१ 'प्रतिपाद्यमेदतत्तत्पूर्वं' क.। २ 'न चेत् स्वाधीनं' ख.।

बुध्यसे, एष एवंविधः 'ते व्यवसायो' बुद्धिर्निश्चयो 'मिथ्या' निष्फल एव । यतः 'प्रकृतिः' स्वभावः परमेश्वरेच्छानियमित-युद्धादिकर्तृकः 'त्वां नियोक्ष्यते' वर्णस्वभावे[1]कर्मणि प्रवर्त-यिष्यते ॥

एतदेव स्फुटयितुमाह—

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ॥ ६० ॥
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि त[2]त् ।

व्याख्यातमेव एतत् ॥

किं बहुना उक्तेन, इदमुपदेशसर्वस्वं सिद्धान्ततया प्रतिपद्य-स्वे[3]त्याह

ईश्वरः सर्वभूतानां हृद्येष वसतेऽर्जुन ॥ ६१ ॥
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।
तमेव शरणं गच्छ सर्वभावेन भारत ॥ ६२ ॥
मत्प्रसादात्परां सिद्धिं स्थानं प्राप्स्यसि शाश्वतम् ।

'एष' प्रबन्धतः पुनःपुनःप्रतिपादित 'ईश्वरः' परमात्मा 'सर्वभूतानां' समस्तप्राणिनां 'हृदि' हृदये सर्वसंविदधिकरण-भूते देशे 'वसति' नित्यं प्रतिष्ठति । किं कुर्वन् । यत् किञ्चिदेषां सर्वभूतानां ज्ञानात्मकं क्रियात्मकं वा परिस्पन्दितं, तत् सर्वं स एव एकः परमार्थतः कुर्वन्नपि मायाशक्त्यवभासितपरस्परवि-भिन्ननाम[4]रूपाणि तानि 'सर्वभूतानि' प्रत्येकमहंकरोमीति मिथ्या-भिमाननिवेशनेन 'भ्रामयन्' व्यामोहयन् । कथमिव । 'यन्त्रा-रूढानि' यन्त्रं सूत्रसंचारादियुक्तिसंपाद्याचेतनवस्तुचेतनक्रियाभि-व्यञ्जकं काष्ठादिसन्निवेशविशेषमिव आरूढानि । यथा केनापि युक्तिमता विशिष्टसंनिवेशविरचिते यन्त्रेऽभिरूढेषु अचेतनेष्वपि

१ 'स्वभावे' ख. । २ 'सन्' ख. पाठः । ३ 'इत्यर्थः' ख. ।
४ 'विभिन्नरूपनानारूपाणि' ख. ।

भावेषु चेतनक्रियावेशः क्रियते, तथा परमेश्वरेण शरीरयन्त्रमारोप्य अकर्तृभूतान्यपि भूतानि कर्त्रभिमानावेशभाञ्जि क्रियन्ते इत्यर्थः । केचित् 'यन्त्रारूढेव' इति छान्दसनपुंसकबहुवचनविवक्षया पाठं पठन्ति । ते च शरीरं रूप्यत्वेन व्याचक्षते । त[1]त्र वस्तुनि न कश्चित् विशेषः । यत एवं तत्त्वत एव सर्वकर्ता परमेश्वरः, त[2]तः सर्वथा निरस्तमिथ्याभिमानः 'तमेव' एकं 'शरणं गच्छ' आत्मत्वेन प्रतिपद्यस्व । मिथ्याभिमानजेभ्यो हर्षशोकादिबन्धनेभ्यो विमुक्तो ममैव एकस्य ईश्वरस्य प्रसादादनुग्रहाद[3]भिव्यक्तात् वा स्वाभाविकात् नैर्मल्यात् 'परां सिद्धिं' निरुत्तरां ज्ञाननिष्ठां तत्फलं च परं 'स्थानं' निरुत्तरं धाम ब्रह्मरूपं 'प्राप्स्यसि' अधिगमिष्यसीति ॥

निरवशेषमनुत्तरज्ञानसर्वस्वमुपसंहरन्नाह—

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ॥ ६३ ॥
विमृश्यैतदशेषेण य[4]थेच्छसि तथा कुरु ।

स्पष्टार्थः श्लोकः । केवलं न अर्जुनं प्रति भगवत एषा संभावना । न अतः परं रहस्यं वक्तव्यमस्ति,—इत्येतावत्तात्पर्यमेतत् । अर्जुनः साक्षात्परस्वरूपदर्शित्वेन अनुगृहीतः कथमेवंविधोक्तिविषयः स्यात् । तथा सर्वोपदिष्टानामुपदिष्टपरमरहस्यज्ञानविषये श्रद्धाविशेषोपोद्बलनार्थं भगवता एतदादिष्टम् ॥

तथाच अ[5]नुगृहीतान् प्रति प्रसादेषु अतृप्यन् परमेश्वरः पुनःपुनःप्रतिपादितमर्थमुपसंहारसमये सिद्धान्ततया हृदि निवेशयन् सविशेषं प्रशंसापूर्वं पुनरपि आह—

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥ ६४ ॥
इष्टोऽसि मे दृढमतिस्ततो वक्ष्यामि ते हितम् ।

---

१ 'तदवस्तुनि' क. । २ 'तदा' क. । ३ 'अभियुक्ताद्वा' ख. ।
४ 'यदिच्छसि क. । ५ अनुग्राह्यान्' क. ।

इदं 'मे परमं' निरुत्तरोपादेयार्थप्रतिपादकत्वात् प्रकृष्टं 'वचो' वचनम्, अत एव 'सर्वगुह्यतमं' सर्वेषां गुह्यानां रहस्यभूतानामर्थानामुत्तरोत्तरातिशयसंभवादिदं निरतिशयार्थप्रतिपादकं गुह्यतमं सर्वगुह्यानां निष्ठारूपं श्रुत्वा अवधारय । यतस्त्वं 'इष्टो मे' प्रियो 'दृढमतिश्च' स्थिरबुद्धिः, 'ततो' हेतोः 'ते हितं' अनुत्तरमनुकूलं वस्तु 'वक्ष्यामि' कथयिष्यामि । प्रियाय अर्थिने स्थिरचित्ताय शिष्याय रहस्यं परमपि वक्तव्यमिति अनेन उपदिष्टम् ॥

तं वक्तुं प्रतिज्ञातमर्थमाह—

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ ६५ ॥**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।**

'मामेवैष्यसि' इत्येतदन्तं नवमे वितत्य व्याख्यातम्, किन्तु एतावन्मात्रं ज्ञानसर्वस्वमिति प्रतिपादयितुं भगवान् प्रतिज्ञां बध्नाति । यतः स्वभावत एव 'प्रियोऽसि मे' ततः 'सत्यं' अमृषा तव 'प्रतिजाने' प्रतिज्ञां करोमि यथा अनेन भक्तिलक्षणेन परेण समाधिना 'मां' यथोक्तस्वरूपं 'एष्यसि' प्राप्स्यसि मदेकभावमाप्स्यसीति ॥

किंच—

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥ ६६ ॥**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।**

इतिप्रतिपादितज्ञानसहभावोपदिष्टस्वकर्मानुष्ठानरूपान् वा सर्वानशेषान् धर्मानाचारान् 'परित्यज्य' परिहृत्य 'मां' एव असकृत्प्रतिपादितस्वरूपं 'एकं' अद्वितीयं परमात्मलक्षणं परं तत्त्वं 'शरणं' आश्रयं परां गतिं 'व्रज' गच्छ मत्समापन्नो भवेत्यर्थः । यदिवा अनुष्ठेयत्वेन उपदिष्टानां सर्वधर्माणां सङ्गादिदोषरहि-

तत्त्वे सति फलानभिसन्धानमेव परित्यागः, तच्च यथोक्तस्वभावपरमात्मसमापत्तिमात्रैकफलालम्बनमनस्तया भवति,—इति सर्वधर्मान् कुर्वन्नपि मदेकशरणमानसो भवेत्युक्तम् । तथाच अनन्यशरणतया 'अहम्' आश्रितः सन् 'त्वां सर्वपापेभ्यः' संप्रति पापबुद्ध्या गृहीतेभ्यो ज्ञातिगुरुवधादिभ्यो निःशेषेभ्यः पापेभ्यो 'मोक्षयिष्यामि' व्यतिरेचयिष्यामि । अतो यथोक्तज्ञानशिथिलमतित्वात् मा शोकं कार्षीः । इदमत्र तात्पर्यम्—एकस्मिन् परमार्थे सति मत्स्वरूपे परस्मिन् तत्त्वे यदा

'पश्यन् शृण्वन् स्पृशञ्जिघ्रन्………………।' (५।८)

इत्यादिना प्रतिपादितक्रमेण निविडावधानलीनचित्तत्वात् मदेकभावमापन्नो भविष्यसि, तदा सर्वासु क्रियासु ज्ञानेषु वचनेषु च पुण्यपापविकल्पोपप्लवः स्वयं विगलिष्यतीति ॥

निःशेषं परं रहस्यमुपदिश्य, अत्र अनुपदेश्यपुरुषपरिहारद्वारेण संग्रहत उपदेश्यलक्षणं प्रतिपादयितुमाह—

**इदं ते नातपस्काय नाभक्ताय कदाचन ॥ ६७ ॥**
**नचाशुश्रूषवे वाच्यं नच मां योऽभ्यसूयति ।**

यदि च एतत् यथोपदिष्टं सर्वमवधारितं भवता सुगृहीतं च कृतं, यदि नित्यानुशीलनात् परं प्रति अवश्यप्रवचनयोग्यतां प्रतिपत्स्यसे; तत् 'इदं' वस्तु 'ते' तव 'अतपस्काय' त्रिप्रकारतया व्याख्यातेन तपसा रहिताय न वक्तव्यम्, तपस्विनेऽपि 'अभक्ताय' प्रतिपादितचतुरवस्थभक्तिलक्षणयोगशून्याय तथा 'अशुश्रूषवे' श्रवणेच्छारहिताय न वक्तव्यम्, शुश्रूषवेऽपि मदभ्यसूयापराय न वक्तव्यम् । सन्ति हि तेन तेन तुच्छेन हेतुना शुश्रूषवो ये यथोक्तस्वरूपाय मह्यं पुनः पुनः परमेश्वराय मदनुग्र-

ह्यभावात् श्रद्धालक्षणप्रकृष्टगुणविनाकृताः सन्तोऽभ्यसूयन्ति, नास्ति एव एवंलक्षणः कश्चिदेकः परमेश्वर इति तत्सद्भाववादिभिः सह विवदमाना गर्हामेव आरभन्ते । तदिदमत्र संक्षेपत उपदेश्यलक्षणमुक्तम्—यो यथाप्रतिपादितस्वरूपाभ्यां परमेश्वरानुग्रहैकनिमित्ताभ्यां दैवसर्गाव्यभिचारिणीभ्यां भक्तिश्रद्धाभ्यां युक्तः, स एव चतुर्ष्वपि वर्णेषु एतज्ज्ञानविषयः। यतो भगवता वर्णानां कर्माण्येव प्रविभक्तत्वेन प्रतिपादितानि, ज्ञानं तु साधारण्येन । यतस्तेषां स्वकर्मप्रविभागं प्रतिपाद्य

'यतः प्रवृत्तिर्भूतानाम्..................।' ( १८।४६ )

इत्यादिना स्वकर्मानुष्ठाननिरतानां सर्ववर्णानां परसिद्धिप्राप्तिः साधारणत्वेन निर्दिष्टा । नच स्वकर्मणां यथोक्तज्ञानशून्यानां परसिद्धिप्राप्तिहेतुत्वमस्ति,—इति ज्ञानस्य सर्ववर्णसाधारण्यं स्फुटमेव भगवता आदिष्टम् ॥

एवंविधश्च उपदेश्यः पुरुषो यथावदधीतावगतानुष्ठितार्थगीताशास्त्ररूपं

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥ ६८ ॥**
**भक्तिं मयि परां कृत्वा स मामेष्यत्यसंशयम् ।**

'यः' कश्चित् 'इदं' यथोक्तं 'परमं गुह्यं' सर्वज्ञानोपनिषद्भूतं 'मद्भक्तेषु' आर्ताद्यवस्थावर्तिषु 'अभिधास्यति' उपदेक्ष्यति, 'सः' अन्ते 'मामेष्यति' ब्रह्मैव परमं संपत्स्यते इत्यर्थः । किं कृत्वा अभिधास्यति । 'मयि' परमेश्वरे 'परां' यथोक्तज्ञाननिष्ठात्मिकां 'भक्तिं' सपर्यां 'कृत्वा' निष्पाद्य । किमुक्तं भवति । स्वयं परभक्तदशाधिरोहपर्यन्तं ज्ञानमिदमात्मीकृत्य यः परस्मै भक्ताय प्रयच्छति, स मां मुख्यं फलमाप्नोति,—इति ॥

एवंविधात् ज्ञानिनः—

**नच तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥ ६९ ॥**
**भविता नच मे तस्मादन्यः प्रियतरो भुवि ।**

'तस्मात्' परमगुह्यज्ञानोपदेशेन मदनुगृहीतभक्तजननिरुपमोपकारकारिणः पुरुषोत्तमात् 'सर्वमनुष्येषु' मध्ये 'न कश्चित्' अन्यः 'प्रियकृत्तमः' इष्टवस्तुसंपादने सातिशयो 'भविता' भविष्यति । एतदेव हि मम प्रियं यत् भक्तजनानुग्रहः । तमेव यः पुष्णाति, तेन मे सातिशयं प्रियं कृतं स्यात् । किंच 'नच तस्मात्' तथाविधात् 'अन्यः कश्चित् मे प्रियतरः' इष्टतरो भविता, तस्यैव अहं प्रियकारीत्यर्थः ॥

एवं निष्पन्नस्य योगिनो ज्ञानस्य उपदेशफलमुक्त्वा, श्रद्दधानस्य आरुरुक्षोः पाठफलं प्रदर्शयितुमाह—

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ॥ ७० ॥**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ।**

'यश्च' दैवसर्गभाक् कश्चित् भक्तिश्रद्धासंस्कृतचित्तोऽपि प्रथमकल्पितत्वात् संप्रति अनुष्ठानप्रावीण्यं समापन्नः सन् 'अध्येष्यते' वस्तुभावनापरतया 'इममावयोः' तव च मम च 'संवादं' सङ्कथनं 'धर्म्यं' ज्ञानलक्षणात् परस्मात् धर्मादनपेतं पठिष्यति, 'तेनाहं' यथोक्तज्ञानात्मकेन प्रकृष्टेन यागेन 'इष्टः' संतर्पितः 'स्यामिति मे मतिः' निश्चिता प्रतिपत्तिः ॥

इदानीमध्ययनासमर्थस्य अपि श्रद्दधानस्य श्रवणफलमाह—

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥ ७१ ॥**
**सोऽपि मुक्तः शुभांल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ।**

'योऽपि' श्रवणमात्रं श्रद्धाभक्त्यादिगुणयुक्तोऽस्य शास्त्रस्य कुर्यात्, 'सः' यज्ञदानादिपुण्यकर्मकृतां संबन्धिनो 'लोकान्'

भोगभुवनानि 'प्राप्नुयात्' इति अस्य आत्मज्ञानार्थस्य शास्त्रोपदेशाध्ययनश्रवणभेदेन परसूक्ष्मस्थूलविभागेन श्रद्धादिगुणविशिष्टमनुष्यमात्रसामान्येन त्रिविधं फलमादिशता भगवता सर्वेषां यथोक्तगुणविशिष्टानां ज्ञानाधिकारवतामुपदेशादिषु अधिकारोऽनुज्ञातः ॥

एवं परब्रह्मसमावेशलक्षणपरमसमाधिनिष्ठमात्मानं कृत्वा भगवता यदुकुलावतीर्णेन परमेश्वरेण इयता ग्रन्थसंदर्भेण परमरहस्यभूतं ज्ञानं यत् प्रतिपादितं, तस्य सम्यग्बोधाबोधजिज्ञासया अर्जुनमाह—

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ॥ ७२ ॥
कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय ।

अपि नाम 'एतत्' यथोक्तं 'एकाग्रेण' अनन्यविषयेण मनसा 'त्वया श्रुतम्' श्रुतिमात्रेण परिगृहीतं, ततश्च वस्तुभावनावशात् संजातनिश्चयस्य 'कच्चित्' तथा 'अज्ञानसंमोहः' अज्ञानात् तत्त्वाप्रतिपत्तेर्यः संमोहः सहजावश्यानुष्ठेयकर्मविचिकित्सालक्षणं वैचित्त्यं, स 'विनष्टः' प्रध्वंसमापन्नो न वा,—इति उच्यतामिति शेषः ॥

अत्र प्रत्युत्तरमर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ॥ ७३ ॥
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ।

हे भगवन् 'अच्युत' परब्रह्मस्वरूपस्वात्मैकनिष्ठ इतिविज्ञातैश्वर्यं भगवन्तमुचितेन अभिधानेन आमन्त्र्य आह 'त्वत्प्रसादात्' परस्वरूपप्रदर्शनलक्षणात् 'मम मोहो' विनष्टः अनात्मनि आत्मप्रत्ययादिरूपमज्ञानं प्रध्वस्तम् । यतः 'स्मृतिर्लब्धा' सत्यात्मानुस्मरणं प्राप्तम् । अतश्च 'गतसंदेहः' निवृत्तसंशयः 'स्थितोऽस्मि'

यद्वशात् धर्ममपि अधर्मत्वेन युद्धं प्रतिपद्यमानो निवृत्तोत्साह आसं, स संशयो विगलितः । ततः 'तव वचनं' यथोक्तज्ञाननिष्ठया स्वकर्मानुष्ठानोपदेशात्मकं परब्रह्मसमापत्तिफलं वाक्यं 'करिष्ये' क्रियया संपादयिष्यामीति ॥

धृतराष्ट्रपरिपृष्टसैन्यसंनिवेशकथनप्रसङ्गे कृष्णार्जुनसंवादद्वारेण परमरहस्यज्ञापनार्थं प्रकरणमिदं येनैव प्रक्रान्तं, तत् परिसमाप्तं सदुपसंहर्तुं स एव संजयः उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥ ७४ ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ।

श्लोकः स्पष्टार्थः ॥ ७५ ॥

इत्थमाश्चर्यभूतपरमरहस्यश्रवणे कुतस्तव अधिकार इत्याह—

**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यतरं महत् ॥ ७५ ॥**
**योगं योगीश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ।**

'एतत्' अत्यन्तरहस्यं भगवतो यदुकुलावतीर्णात् कृष्णाभिधानात् परमेश्वरात् प्रयत्नाहितयोगानां योगिनामीशितुः सहजसिद्धनिरतिशयसमाधेः 'स्वयम्' आत्मनैव 'साक्षात्' अव्यवधानेन 'योगं' यथाप्रतिपादितज्ञाननिष्ठतया स्वकर्मानुष्ठानलक्षणं निरतिशयं समाधिमर्जुनाय उपदिशतोऽहमश्रृणवम् । कुतो हेतोः । 'व्यासप्रसादात्' भगवत्कृष्णद्वैपायनानुग्रहात् । तेन हि तस्मै तादृङ्महायोगश्रवणपरमेश्वररूपदर्शनादियोग्यताधानाय दिव्यं ज्ञानमयं चक्षुर्वितीर्णम् । अत्र एतदित्यादिपदानां सामान्योपक्रमविवक्षया नपुंसकत्वम् । वाक्यस्य विशेषाभिधानपर्यवसितत्वात् योगशब्दः पुंसि अवबोद्धव्यः । 'योगं' कर्मयोगाख्यं समाधिं 'कथयतो' भगवत 'एतत्' प्रकरणं 'गुह्यतरम्' अहं 'श्रुतवान्' इति व्याख्येयम् ॥

अत एव आह—

राजन्संस्मृत्य संस्मृत्य संवादमिमम[1]द्भुतम् ॥ ७६ ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ।
तच्च संस्मृत्य परमं रूपमत्यद्भुतं हरेः ॥ ७७ ॥
विस्मयो मे महाराज प्रहृष्ये च पुनः पुनः ।

निगदव्याख्यातौ श्लोकौ ॥

अथ येन अभिप्रायेण कुरुपाण्डवसैन्ययोर्जयपराजयजिज्ञासारूपेण धृतराष्ट्रः पृष्टवान्, तत्र निश्चयमाह—

यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥ ७८ ॥
तत्र श्रीर्विजयो भूति[2]र्ध्रुवा इति मतिर्मम ॥ ७९ ॥

'यत्र' पक्षे वैश्वरूप्यदर्शनादिना प्रकटितानन्यसाधारणयोगैश्वर्यमहिमा भगवान् हरिस्तिष्ठति, 'यत्र' च अप्रतिमनिजपराक्रमपरितोषितपशुपतिः 'पार्थः' पृथासूनुः कार्मुकभृत् तिष्ठति; 'तत्र' पक्षे 'श्रीः' लक्ष्मीः 'विजयः' सकलविपक्षक्षपणात् सर्वातिशायित्वं 'भूतिः' भावः सत्ता च, ते स्थिराः इति प्रत्यक्षदृष्टकृष्णार्जुनप्रभावातिशयस्य मे मम बुद्धिरिति ओम् ॥

## कविवंशवर्णनम्

शब्दार्थाभिनवप्रकर्षसरसा सैषा कवीन्द्रस्य वाग्
विस्रब्धैः [3]परिचर्य्यतां सहृदयैस्त्यक्त्वा त्वरामादरात् ।
दिव्यामोदरसार्द्रभूरिकुसुमस्फीता नवोद्यानभू-
र्भृङ्गानेव यतस्ततो नयति वा नैषा पुनस्तादृशान् ॥ १ ॥
दधति बहवः श्लाघ्ये कर्मण्यवाच्यमहो नवं
क्वचिदपि पुनस्तन्निर्वाहः कथां प्रतिपद्यते ।
वियति नियतं तेजोभाजः स्फुरन्ति सहस्रश-
स्तिमिरविचलं धातुः सर्गं विधातुमलं रविः ॥ २ ॥

---

१ 'दमद्भुतम्' ख. । २ 'नीतिर्मतिः' ख. । ३ 'परिचर्य्यतां' ख. पाठः ।

भावे क्वापि विजृम्भते निजगुणौचित्येन जित्वा जगद्-
दुर्वारं सुमनो विशेषविदुषां वीतव्यपेक्षान्तरम्।
प्रत्यूषे विविधौषधीरसगुणास्वादैकहेवाकिनो
धावन्त्येव हि पङ्कजे मधुलिहो लुप्तान्यपुष्पस्पृहाः॥ ३॥
आमोदो मलयद्रुमस्य पवनैर्विस्तार्यते दक्षिणै-
राघ्रायाप्यलयो यमन्यविषये माद्यन्ति मन्दादराः।
स्फीतोऽपि स्वगुणः स्वयं गुणवता वक्तुं कथं शक्यते
तेनावर्जयितुं जयन्तु सुजनाः केचित्कृताभ्युद्गमाः॥ ४॥
यो नारायण इत्यभूच्छ्रुतनिधिः श्रीकान्यकुब्जे द्विज-
स्तद्वंशे स्वगुणप्रकर्षखचितो मुक्ताकणाख्योऽभवत्।
तस्यैषा सदृशानुजेन रचिता रामेण विद्वज्जन-
श्लाघ्यत्वात्सफलश्रमेण भगवद्गीतापदार्थप्रथा॥ ५॥
ये सत्स्वेऽपीन्दुतारानिकरमणिशिखादीपकादिप्रकाशे
सन्तोऽप्यत्यन्तसौक्ष्म्यात्क्वचन विनिभृता यान्ति नाशं निशायाम्।
तथ्यक्कारप्रगल्भस्वगुणविलसितेनाशु विद्योतयत्तान्
सर्वान्सम्यक्पदार्थाञ्जयति दिनपतेर्ज्योतिरत्यूर्जितं तत्॥ ६॥

इति श्रीमद्राजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणेऽष्टादशोऽध्यायः॥ १८॥

---

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १५ | परपुरुषार्थत्वात् | पुरुषार्थत्वात् |
| ,, | १९ | क्रमागत | क्रममागत |
| ४ | १७ | तथाच | तथा |
| ,, | २१ | पतेन | तेन |
| ,, | २५ | उक्तलक्षणात् | उक्ततत्त्वलक्षणात् |
| ७ | १७ | सितस्वरूपत्वात् | सितरूपत्वात् |
| ८ | १३ | भूमिषु | योनिषु |
| ९ | ४ | ज्ञानानर्हत्वा | ज्ञानशून्यत्वा |
| ,, | १३ | निर्दिष्टत्व | निष्ठत्व |
| ११ | १ | संयतस्तत्परेन्द्रियः | तत्परः संयतेन्द्रियः |
| १३ | १ | नादयत् | नादयन् |
| १६ | ३ | नादयत् | नादयन् |
| १९ | ३ | भैक्ष्यमपीह | भैक्षमपीह |
| २२ | ३ | बहुव्रीह्हि | बहुव्रीहि |
| २६ | ३ | एवतावता | एतावता |
| २७ | २१ | मव्यस्यास्य | मव्ययस्यास्य |
| ३० | २३ | मव्यम् | मव्ययम् |
| ३४ | ५ | काष्टयो | काष्ठयोस्तानि |
| ,, | २० | माश्चर्यद्वदति | माश्चर्यवद्वदति |
| ३६ | २ | गमापायिधर्म | गमापायधर्म |
| ,, | २० | मरणदति | मरणादति |
| ४२ | १७ | वर्ज्यमान | वर्ज्यमान |
| ४३ | १७ | निर्योमक्षेमः | निर्योगक्षेमः |
| ४४ | २१ | संगो | सङ्गो |
| ४५ | ११ | प्रसंगो | प्रसङ्गो |
| ५० | २६ | ५० | २।५० |
| ५४ | १ | प्रसुप्तस्तनुर्वा | प्रसुप्ततनुर्वा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ५५ | १७ | संगस्त्वेषूप | सङ्गस्त्वेषूप |
| ,, | १८ | संगात् | सङ्गात् |
| ५६ | ७ | विंभ्राम्यति | विंभ्रश्यति |
| ५७ | ८ | स्यत | तस्य |
| ,, | २३ | अप्रसृतान्येव | प्रसृतान्येव |
| ६६ | २३ | संगरहितो | सङ्गरहितो |
| ६७ | २४ | संगः | सङ्गः |
| ६८ | १७ | संगः | सङ्गः |
| ,, | १८ | संगो | सङ्गो |
| ६९ | १३ | भुंक्ते | भुङ्क्ते |
| ,, | २० | लम्बयते | लम्भयते |
| ७० | २५ | ब्रीहीन् | व्रीहीन् |
| ७२ | २२ | जंगमेषु | जङ्गमेषु |
| ७३ | ८ | संगः | सङ्गः |
| ,, | ८ | यंत्रितं | यन्त्रितं |
| ,, | २० | दंडकः | दण्डकः |
| ,, | २३ | मुक्तसंगः | मुक्तसङ्गः |
| ७६ | ७ | निबन्दना | निबन्धना |
| ७७ | ३ | पंडितः | पण्डितः |
| ,, | ५ | विषयेन | विषयेण |
| ,, | ५ | संगेन | सङ्गेन |
| ,, | १३ | संगिनाम् | सङ्गिनाम् |
| ,, | १९ | संगिनाम् | सङ्गिनाम् |
| ,, | २० | संगात् | सङ्गात् |
| ,, | २२ | संगाः | सङ्गाः |
| ७८ | ७ | शंकमानः | शङ्कमानाः |
| ,, | १८ | पंच | पञ्च |
| ,, | २४ | संगो | सङ्गो |
| ७९ | १२ | प्रपंच | प्रपञ्च |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८२ | ४ | ये मे मत | ये मन्मत |
| ८७ | ३ | प्रश्नोत्तर | प्रश्नस्योत्तर |
| ८८ | १७ | कलंकेन | कलङ्केन |
| ९१ | ९ | लम्बयित्वा | लम्भयित्वा |
| ९४ | १२ | जंगमानां | जङ्गमानां |
| ,, | १८ | वर्तमानांश्च | वर्तमानांश्च |
| ९५ | १३ | कलंक | कलङ्क |
| ,, | २२ | व्यक्ते जन्म | व्यक्तजन्म |
| ९६ | २५ | पंथानम् | पन्थानम् |
| ९८ | ३ | शंकां | शङ्कां |
| ,, | २३ | कलंकेन | कलङ्केन |
| ९९ | २ | कलंकत्वात् | कलङ्कत्वात् |
| १०० | १५ | कलांगमपि | कलाङ्गमपि |
| १०१ | ७ | संगं | सङ्गं |
| ,, | १० | कांक्षो | काङ्क्षो |
| ,, | १२ | संगं | सङ्गं |
| ,, | १३ | संगमा | सङ्गमा |
| १०२ | ८ | संगस्य | सङ्गस्य |
| ,, | ११ | ,, | ,, |
| ,, | २३ | संगादि | सङ्गादि |
| १०३ | २४ | कलंकया | कलङ्कया |
| १०४ | २ | संगस्य | सङ्गस्य |
| १०५ | ७ | परिहारेण | प्रत्याहारेण |
| ,, | २० | ज्ञानस्य | यज्ञस्य |
| १०६ | १८ | नियमाद्यंग | नियमाद्यङ्ग |
| १०७ | १७ | वेदांग | वेदाङ्ग |
| ,, | १८ | दंड | दण्ड |
| १०९ | ९ | योगांग | योगाङ्ग |
| ११२ | १४ | कांक्षोत्पादनं | काङ्क्षोत्पादनं |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११४ | ६ | अल्पीयत्मैव | अल्पीयसैव |
| ,, | २२ | संच्छिन्न | संछिन्न |
| ११५ | २ | संच्छिन्न | संछिन्नो |
| १२० | १७ | उपद्यते | उपपद्यते |
| १३९ | २ | प्रमातृपरेण | प्रमादपरेण |
| १४१ | २५ | र्वकाल | सर्वकाल |
| १४४ | १९ | स्वप्नबोधौ | स्वप्नावबोधौ |
| १५७ | २२ | सम्यङ् | सम्यक् |
| १६० | २४ | तादंशि | तादृंशि |
| १६८ | १० | चिकित्सा | विचिकित्सा |
| १७० | ६ | विदधाम्यहम् | विददाम्यहम् |
| १८५ | १५ | लब्धोपपत्तयो | लब्धोत्पत्तयो |
| १८८ | १९ | सदा | सना |
| १९६ | ९ | मभ्या | मभ्यां |
| २१३ | २४ | मुपभुङ्क्ते | मुपभुङ्क्ते |
| २२९ | १५ | पिवतः | पिबतः |
| ,, | १८ | कथमिष्यामि | कथयिष्यामि |
| २५५ | ३ | प्रस्तनेतान् | प्रस्तानेतान् |
| २६२ | १४ | वैदैर्न | वेदैर्न |
| २६५ | १० | सादितव्यमिति | सितव्यमिति |
| २६६ | २३ | सम्यकू | सम्यक् |
| २६९ | १४ | उपदेश्य | उपदिश्य |
| २७४ | ४ | सदातिनिरभि | सदानिरभि |
| २७५ | ७ | विनाशिकत्व | विनाशित्व |
| २७७ | १६ | व्यवसायिता | व्यवसाता |
| २८१ | २१ | गुणायिशुनित | गुणपिशुनित |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २९० | २६ | प्रकाशैरूप | प्रकाशैकरूप |
| ३१६ | १ | ज्योतिरूपः | ज्योतीरूपः |
| ३५५ | १ | काय | कार्य |
| ३७४ | १० | सज्जती | मज्जती |
| ३८० | १९ | पायितुं | पादयितुं |

# गीताया मूलश्लोकेषु पाठान्तराणि ।

| अध्याये | श्लोके | रामकण्ठपाठः | शङ्करपाठः |
|---|---|---|---|
| १ | १ | सर्वक्षत्रसमागमे | समवेता युयुत्सवः |
| ,, | ८ | कृपः शल्यो जयद्रथः | कृपश्च समितिञ्जयः । |
| ,, | ९ | सौमदत्तिश्च वीर्यवान् | सौमदत्तिस्तथैवच |
| ,, | १० | नानायुद्धविशारदाः | सर्वे युद्धविशारदाः |
| ,, | ,, | भीमाभिरक्षितम् | भीष्माभिरक्षितम् |
| ,, | ११ | भीष्माभिरक्षितम् | भीमाभिरक्षितम् |
| ,, | १८ | पाञ्चालश्च महेष्वासो द्रौपदेयाश्च पञ्च ये | द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते । |
| ,, | २८ | सीदमानोऽब्रवीदिदम् | विषीदन्निदमब्रवीत् |
| ,, | २९ | दृष्ट्वेमान्स्वजनान्कृष्ण युयुत्सून्समवस्थितान् । | दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समवस्थितम् । |
| ,, | ३२ | श्रेयोऽनुपश्यामि | श्रेयो नु पश्यामि |
| ,, | ३६ | हेतोः किमु महीकृते | हेतोः किं नु महीकृते |
| ,, | ३७ | स्वबान्धवान् | सबान्धवान् |
| २ | १ | सीदमानमिदं | विषीदन्तमिदं |
| ,, | ३ | मा क्लैब्यं गच्छ कौन्तेय | क्लैब्यं मा स्म गमः पार्थ |
| ,, | ५ | श्रेयश्चर्तुं | श्रेयो भोक्तुं |
| ,, | ,, | नत्वर्थकामस्तु गुरूनिहत्य | हत्वार्थकामांस्तु गुरूनिहैव |
| ,, | ६ | नैतद्विद्मः | न चैतद्विद्मः |
| ,, | ,, | ते नः स्थिताः | तेऽवस्थिताः |
| ,, | ८ | न तं प्रपश्यामि | न हि प्रपश्यामि |
| ,, | ,, | यः शोकं | यच्छोकं |
| ,, | ९ | परन्तप । न योत्स्यामीति | परन्तपः । न योत्स्य इति |
| ,, | १० | सीदमानमिदं | विषीदन्तमिदं |
| ,, | १२ | प्राज्ञवन्नाभिभाषसे | प्रज्ञावादांश्च भाषसे |
| ,, | १३ | वयमितः परम् | वयमतः परम् |

| अध्याये | श्लोके | रामकण्ठपाठः | शङ्करपाठः |
|---|---|---|---|
| २ | १९ | विनाशिनोऽप्रमेयस्य | अनाशिनोऽप्रमेयस्य |
| ,, | २२ | हन्यते हन्ति वा कथम् | कं घातयति हन्ति कम् |
| ,, | २७ | अथवैनं | अथ चैनं |
| ,, | ३० | तथैनमन्यः | तथैव चान्यः |
| ,, | ३३ | सुकृतात्क्षत्रियाः | सुखिनः क्षत्रियाः |
| ,, | ३४ | तथा स्वधर्मं | ततः स्वधर्मं |
| ,, | ४१ | नेहातिक्रमनाशोऽस्ति | नेहाभिक्रमनाशोऽस्ति |
| ,, | ४२ | एकैव | एकेह |
| ,, | ४४ | जन्मकर्मफलेप्सवः | जन्मकर्मफलप्रदाम् |
| ,, | ,, | बहुला भोगैश्वर्यगतीः | बहुलां भोगैश्वर्यगतिं |
| ,, | ४८ | कर्मण्यस्त्वधिकारस्ते | कर्मण्येवाधिकारस्ते |
| ,, | ५४ | यदास्य | यदा ते |
| ,, | ,, | बुद्ध्या व्यतितरिष्यसि | बुद्धिर्व्यतितरिष्यति |
| ,, | ५५ | निश्चिता | निश्चला |
| ,, | ५६ | व्रजेच्च किम् | व्रजेत किम् |
| ,, | ६० | सर्वतः | सर्वशः |
| ,, | ,, | स्थितप्रज्ञस्तदोच्यते | तस्य प्रज्ञा प्रतिष्ठिता |
| ,, | ६२ | यत्तस्यापि हि | यततो ह्यपि |
| ,, | ६३ | तानि संयम्य मनसा तत्परः | तानि सर्वाणि संयम्य मत्परः |
| ,, | ६६ | विमुक्तै | वियुक्तै |
| ,, | ७१ | सा रात्रिः | सा निशा |
| ३ | २ | व्यामिश्रेणैव | व्यामिश्रेणेव |
| ,, | २२ | प्रवर्तेऽथच कर्मणि | वर्त एव च कर्मणि |
| ,, | २३ | मम वर्त्मानुवर्तेरन् | मम वर्त्मानुवर्तन्ते |
| ,, | २७ | भागशः | सर्वशः |
| ,, | २८ | गुणा गुणार्थे | गुणा गुणेषु |
| ,, | ३१ | अनुवर्तन्ति | अनुतिष्ठन्ति |
| ,, | ,, | मुच्यन्ते सर्वकिल्बिषैः | मुच्यन्ते तेऽपि कर्मभिः |

| अध्याये | श्लोके | रामकण्ठपाठः | शङ्करपाठः |
|---|---|---|---|
| ३ | ३२ | नानुवर्तन्ति | नानुतिष्ठन्ति |
| ,, | ३५ | परधर्मोदयादपि | परधर्मो भयावहः |
| ,, | ३६ | अनिच्छमानोऽपि बलादाक्रम्येव नियोजितः । | अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः । |
| ,, | ४३ | तथानेनायमावृतः | तथा तेनेदमावृतम् |
| ,, | ४६ | प्रजहीह्येनं | प्रजहिह्येनं |
| ,, | ,, | नाशिनम् | नाशनम् |
| ४ | १ | एवं विवस्वते | इमं विवस्वते |
| ,, | २ | परम्पराख्यातं | परम्पराप्राप्तं |
| ,, | ,, | कालेनैव | कालेनेह |
| ,, | ७ | तदात्मांशं | तदात्मानं |
| ,, | १० | मद्व्यपाश्रयाः | मामुपाश्रिताः |
| ,, | १३ | गुणकर्मविभागतः | गुणकर्मविभागशः |
| ,, | १४ | न मे कामः फलेष्वपि | न मे कर्मफले स्पृहा |
| ,, | १८ | स चोक्तः | स युक्तः |
| ,, | २३ | यज्ञायारभतः | यज्ञायाचरतः |
| ,, | २५ | योगिनः समुपासते | योगिनः पर्युपासते |
| ५ | १ | यः श्रेयानेतयोरेकस्तं मे | यच्छ्रेय एतयोरेकस्तन्मे |
| ,, | ,, | विनिश्चितम् | सुनिश्चितम् |
| ,, | ३ | विमुच्यते | प्रमुच्यते |
| ,, | ५ | तद्योगैरनुगम्यते | तद्योगैरपि गम्यते |
| ,, | ११ | सङ्गं त्यक्त्वात्मसिद्धये | सङ्गं त्यक्त्वात्मशुद्धये |
| ,, | १७ | निर्धौतकल्मषाः | निर्धूतकल्मषाः |
| ,, | २० | यः सुखम् | यत्सुखम् |
| ,, | २२ | विमोचनात् | विमोक्षणात् |
| ,, | ,, | स योगी स सुखी मतः | स युक्तः स सुखी नरः |
| ,, | २३ | अन्तःसुखोऽन्तरा | योऽन्तःसुखोन्तरा |
| ,, | ,, | स पार्थ परमं योगं | स योगी ब्रह्मनिर्वाणं |
| ,, | २५ | विमुक्तानां | वियुक्तानां |
| ६ | ६ | अजितात्मनस्तु | अनात्मनस्तु |

| अध्याये | श्लोके | रामकण्ठपाठः | शङ्करपाठः |
|---|---|---|---|
| ६ | ७ | परात्मसु समा मतिः | परमात्मा समाहितः |
| ,, | ,, | मानावमानयोः | मानापमानयोः |
| ,, | १४ | अचलः स्थिरः | अचलं स्थिरः |
| ,, | ,, | संपश्यन् नासिकाग्रं | संप्रेक्ष्य नासिकाग्रं |
| ,, | १६ | मद्भक्तोऽनन्यमानसः | योगी नियतमानसः |
| ,, | २० | योगमात्मनि | योगमात्मनः |
| ,, | २२ | स्थितश्च्यवति तत्त्वतः | स्थितश्चलति तत्त्वतः |
| ,, | २९ | योगी नियतमानसः | योगी विगतकल्मषः |
| ,, | ,, | सुखेन ब्रह्मसंयोगमत्यन्त | सुखेन ब्रह्मसंस्पर्शमत्यन्त |
| ,, | ३४ | पराम् | स्थिराम् |
| ,, | ३८ | अयतः सिद्धयो | अयतिः श्रद्धयो |
| ,, | ४० | विभ्रंशाच्छिन्नाभ्र | विभ्रष्टश्छिन्नाभ्र |
| ,, | ,, | विनाशं वाधिगच्छति | विमूढो ब्रह्मणः पथि |
| ,, | ४३ | पुण्यकृतां लोकान् | पुण्यकृताँल्लोकान् |
| ,, | ४४ | जायते श्रीमतां कुले | कुले भवति धीमताम् |
| ,, | ४६ | ऽपि सन् | अपि सः |
| ७ | १ | मदाश्रितः | मदाश्रयः |
| ७ | २ | न पुनः किञ्चित् | नेह भूयोऽन्यत् |
| ७ | ८ | प्रकाशः | प्रभास्मि |
| ,, | ९ | पुण्यः पृथिव्यां गन्धोऽस्मि | पुण्यो गन्धः पृथिव्यां च |
| ,, | १४ | मायामतितरन्ति | मायामेतां तरन्ति |
| ,, | १६ | जनाः सुकृतिनः सदा | जनाः सुकृतिनोऽर्जुन |
| ,, | १८ | मे मतः | मे मतम् |
| ,, | २६ | भविष्यन्ति च | भविष्याणि च |
| ,, | २८ | येषां त्वन्तं गतं | येषां त्वन्तगतं |
| ,, | ३० | साधियज्ञं तथा | साधियज्ञं च ये |
| ८ | ५ | कालेऽपि | काले च |
| ,, | ७ | स्वसंशयम् | स्वसंशयः |
| ,, | ८ | नन्यगामिना | नान्यगामिना |

| अध्याये | श्लोके | रामकण्ठपाठः | शङ्करपाठः |
|---|---|---|---|
| ८ | ११ | संग्रहेणाभिधास्ये | संग्रहेण प्रवक्ष्ये |
| ,, | १७ | अहर्यें ब्रह्मणो | अहर्यद्ब्रह्मणो |
| ,, | २० | व्यक्ताव्यक्तः सनातनः | व्यक्तोऽव्यक्तात्सनातनः |
| ,, | २२ | यत्र सर्वं प्रतिष्ठितम् | येन सर्वमिदं ततम् |
| ,, | २५ | धूमः कृष्णस्तथा रात्रिः | धूमो रात्रिस्तथा कृष्णः |
| ,, | २६ | अनयोर्यात्यनावृत्तिमेकयावर्ततेऽन्यया । | एकया यात्यनावृत्तिमन्ययावर्तते पुनः । |
| ९ | ८ | मामकीम् | मामिकाम् |
| ,, | १२ | तनुमास्थितम् | तनुमाश्रितम् |
| ,, | ,, | ममाव्ययमनुत्तमम् | मम भूतमहेश्वरम् |
| ,, | १५ | कीर्तयन्तश्च | कीर्तयन्तो |
| ,, | ३२ | प्रतिजानेऽहं न मद्भक्तः | प्रतिजानीहि न मे भक्तः |
| १० | ८ | अयं सर्वस्य | अहं सर्वस्य |
| ,, | ,, | इतः सर्वं | मत्तः सर्वं |
| ,, | १३ | ब्रवीषि माम् | ब्रवीषि मे |
| ,, | १४ | देवा महर्षयः | देवा न दानवाः |
| ,, | १६ | विभूतीरात्मनः शुभाः | दिव्या ह्यात्मविभूतयः |
| ,, | १७ | विद्यां महायोगिंस्त्वामहं | विद्यामहं योगिंस्त्वां सदा |
| ,, | १९ | विभूतीरात्मनः शुभाः | दिव्या ह्यात्मविभूतयः |
| ,, | २२ | सामवेदोऽहं | सामवेदोऽस्मि |
| ,, | २४ | सेनान्यामप्यहं | सेनानीनामहं |
| ,, | ४१ | तत्तदेवावगच्छेस्त्वं | तत्तदेवावगच्छ त्वं |
| ,, | ४२ | बहुनोक्तेन | बहुनैतेन |
| ११ | ३ | परमेश्वरम् | परमेश्वर |
| ,, | ६ | पाण्डव | भारत |
| ,, | ११ | दिव्यमालाम्बर | दिव्यमाल्याम्बर |
| ,, | १५ | दीप्तान् | दिव्यान् |
| ,, | १८ | सात्त्वतधर्म | शाश्वतधर्म |
| ,, | २० | तवेदृक् | तवेदं |

| अध्याये | श्लोके | रामकण्ठपाठः | शङ्करपाठः |
|---|---|---|---|
| ११ | २१ | स्वस्तीति चोक्त्वैव महर्षि-संघाः | स्वस्तीत्युक्त्वा महर्षि-सिद्धसंघाः |
| ,, | २६ | अमी सर्वे | अमी च त्वां |
| ,, | ,, | सर्वैः सहैवा | सर्वे सहैवा |
| ,, | ३० | वक्त्राण्यभितो ज्वलन्ति | वक्त्राण्यभिविज्वलन्ति |
| ,, | ३२ | प्रवृद्धांल्लोकान् | प्रवृद्धो लोकान् |
| ,, | ३५ | लोकवीरान् | योधवीरान् |
| ,, | ३८ | सदसतः परं यत् | सदसत्तत्परं यत् |
| ,, | ३९ | अनन्तरूपम् | अनन्तरूप |
| ,, | ४३ | सखे च | सखेति |
| ,, | ,, | तवेमं | तवेदं |
| ,, | ४४ | सत्समक्षं | तत्समक्षं |
| ,, | ४६ | प्रियस्यार्हसि | प्रियायार्हसि |
| ,, | ५३ | एवंरूपं शक्यमहं | एवंरूपः शक्य अहं |
| ,, | ५४ | विमूढता भूत् | विमूढभावो |
| ,, | ,, | घोरमुग्रं | घोरमीदृक् |
| ,, | ५९ | शक्यो ह्यहं | शक्य अहं |
| १२ | ५ | देहभृद्भिः | देहवद्भिः |
| ,, | ८ | निवत्स्यसि त्वं मय्येव योग-मुत्तममास्थितः । | निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः । |
| ,, | ९ | अथावेशयितुं चित्तं | अथ चित्तं समाधातुं |
| ,, | १० | समर्थः सन् | समर्थोऽसि |
| ,, | ११ | मास्थितः | माश्रितः |
| ,, | १२ | शान्तिरनन्तरा | शान्तिरनन्तरम् |
| ,, | १५ | भयक्रोधैः | भयोद्वेगैः |
| ,, | १८ | मानावमानयोः | मानापमानयोः |
| ,, | १९ | स्थितमतिः | स्थिरमतिः |
| ,, | २० | धर्मामृतमिदं | धर्म्यामृतमिदं |
| १३ | १ | यो वेद | यो वेत्ति |

| अध्याये | श्लोके | रामकण्ठपाठः | शङ्करपाठः |
|---|---|---|---|
| १३ | १ | क्षेत्रज्ञमिति | क्षेत्रज्ञ इति |
| ,, | ३ | यत्स्वभावश्च | यत्प्रभावश्च |
| ,, | ४ | विनिश्चितम् | विनिश्चितैः |
| ,, | १२ | न सन्नासत्तदुच्यते | न सत्तन्नासदुच्यते |
| ,, | १५ | च यत् | च तत् |
| ,, | १६ | विभक्तेषु | च भूतेषु |
| ,, | ,, | संस्थितम् | च स्थितम् |
| ,, | १७ | ज्ञानज्ञेयं | ज्ञानं ज्ञेयं |
| ,, | २० | कार्यकारण | कार्यकरण |
| ,, | २६ | संभवति | संजायते |
| १४ | १० | भारत वर्धते | भवति भारत |
| ,, | ११ | प्रकाशमुपजायते | प्रकाश उपजायते |
| ,, | १२ | अशमश्च तृट् | अशमः स्पृहा |
| ,, | १७ | जायेते तमसोऽज्ञानमेवच | तमसो भवतोऽज्ञानमेवच |
| ,, | २३ | इत्येवं यो ज्ञस्तिष्ठति | इत्येव योऽवतिष्ठति |
| ,, | २४ | सुखस्वप्नः | सुखः स्वस्थः |
| ,, | २५ | मानावमानयोः | मानापमानयोः. |
| ,, | ,, | फलत्यागी | परित्यागी |
| १५ | २ | प्रसृता यस्य | प्रसृतास्तस्य |
| ,, | ३ | शितेन | दृढेन |
| ,, | ४ | गतो न निवर्तेत | गता न निवर्तन्ति |
| ,, | ,, | प्रपद्येद्यतः | प्रपद्ये यतः |
| ,, | ५ | निर्वाणमोहाः | निर्मानमोहाः |
| ,, | १० | तिष्ठन्तमुत्क्रामन्तं वा | उत्क्रामन्तं स्थितं वापि |
| ,, | १४ | देहमास्थितः | देहमाश्रितः |
| ,, | १७ | व्ययमीश्वरः | व्यय ईश्वरः |
| ,, | १८ | अक्षरस्यापि | अक्षरादपि |
| १६ | २ | ऽसक्तिरपैशुनम् | शान्तिरपैशुनम् |
| ,, | ,, | भूतेष्वलौल्यं च | भूतेष्वलोलुप्त्वं |

